# *BENARES SANSKRIT SERIES;*

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.

AND

G. THIBAUT PH. DR.

*No. 48.*

# महर्षिशौनकप्रणीतम् ऋक्प्रातिशाख्यम् ।
## उव्वटकृतभाष्ययुतम् ॥

श्रीकाशिकप्रधानपाठालयाधीतविद्येन श्रीमद्विद्याविलासमण्डला-
गतो लब्धवैदुष्यप्रतिष्ठेन वेदविद्यालयस्य प्रधाना-
ध्यापकेन च पाठकोपाह्वश्रीयुगलकिशोरशर्म्म-
णा संविशोध्य प्रकाशितम् ॥

# ŚAUNAKA'S PRÁTIŚÁKHYA OF THE ṚIGVEDA,

WITH THE COMMENTARY OF UVAṬṬA.

EDITED AND ANNOTATED BY PAṆḌIT YUGALAKIŚORA VYÁSA,

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.




Fasciculus I.

*BENARES:*

PRINTED AND PUBLISHED BY

MESSRS. BRAJ B. DAS & CO.

AT THE BENARES PRINTING PRESS.

1894.

# सूचीपत्र।


| | रु. | आ. | पा. |
|---|---|---|---|
| अमरकोशसुन्दरटीकासहित ... ... | १ | ० | ० |
| कारिकावलीमुक्तावलीदिनकरीटिप्पणीसहित ... | ४ | ० | ० |
| बीजगणितपं०सुधाकरकृतटिप्पणीसहित ... | १ | ० | ० |
| जातकतत्त्वज्योतिष ... ... | ० | १२ | ० |
| सांख्यचन्द्रिका ... ... | ० | ८ | ० |
| दत्तकमीमांसा ... ... | ० | ८ | ० |
| लघुकौमुदीटिप्पणीसहित ... ... | ० | ६ | ० |
| " भाषाटीकासहित ... ... | ४ | ० | ० |
| पराशरस्मृति (पराशरसंहिता) ... ... | ० | ६ | ० |
| सांख्यतत्त्वकौमुदीमूल ... ... | ० | ४ | ० |
| पाणिनीयशिक्षासभाष्य ... ... | ० | २ | ० |
| धातुरूपावली ... ... | ० | २ | ० |
| [illegible] सिद्धान्तज्योतिष ... ... | ० | १ | ६ |
| तर्कसंग्रह ... ... | ० | १ | ६ |
| शब्दरूपावली ... ... | ० | १ | ६ |
| उपसर्गवृत्ति (प्राद्युपसर्गार्थसंग्रहः) ... ... | ० | १ | ० |
| धातुपाठ ... ... | ० | २ | ० |
| समासचन्द्रिका ... ... | ० | १ | ० |
| परिभाषापाठ ... ... | ० | ० | ६ |
| प्रथमपरीक्षा ... ... | ० | २ | ० |
| अमरकोश ... ... | २ | ८ | ० |
| सरस्वतीकण्ठाभरणसटीक ... ... | ५ | ० | ० |
| [illegible]तीवादमुलजीवद ... ... | २ | ० | ० |
| तत्त्वबोधिनीसिद्धान्तकौमुदीकीटीका ... ... | ४ | ० | ० |
| [illegible]रतमूल (काशी) ... ... | १ | ८ | ० |

| | | | | | |
|---|---|---|---|---|---|
| शृंगारतीलकसटीक | ... | ... | ० | २ | ० |
| न्यायतत्वप्रबोधनी | ... | ... | ० | २ | ० |
| चानक्यनीतीमुल | ... | ... | ० | १ | ० |
| कारिकावलीमुल | ... | ... | ० | २ | ० |
| लघुसंग्रह | ... | ... | ० | ३ | ० |
| गंगासहस्रनाम | ... | ... | ० | २ | ० |
| सत्यनारायणमुल | ... | ... | ० | १ | ६ |
| महीमनमुल | ... | ... | ० | १ | ० |
| अमरकोशमुल सांचीपत्रा | ... | ... | ० | ८ | ० |
| पंचक्रोशी यात्रा | ... | ... | ० | १ | ० |
| रम्भाशुकसम्बादभाषाटीका | ... | ... | ० | २ | ० |
| दानमयुख | ... | ... | १ | ८ | ० |
| प्रायश्चीतमयुख | ... | ... | १ | ० | ० |
| व्यवहारमयुख | ... | ... | ० | १२ | |
| हीतादिमुल | ... | ... | ० | ८ | ० |
| सुश्रुतमुल | ... | ... | ३ | ० | ० |
| पींगलछन्दसूत्रसटीक | ... | ... | १ | ८ | ० |
| भट्टीकाव्यपाचसर्ग | ... | ... | ० | ६ | ० |
| वीष्णुसहस्रनाममूल | ... | ... | ० | १ | ० |
| प्रबोधचन्द्रोदयनाटकसंस्कृतटीकाभाषाटीकासहीत | | | ० | १२ | ० |
| शुक्लयजुः वेदसंहिताकाभाषाभाष्यखंड२ ३ ४प्रत्येकखंड | | | १ | ० | ० |
| कृष्णभट्टीव्युतपतीवादकीटीका | ... | ... | ० | ८ | ० |
| व्याकर्णकौमुदीभागदुसरा | ... | ... | १ | ० | ० |
| संस्कृतारम्भः | ... | ... | ० | २ | ० |
| संस्कृतोपक्रमः | ... | ... | ० | ४ | ० |

इनसेअधिकबहुतसीसंस्कृतहिन्दीअंग्रेजीआदिपुस्तकैंहमारेयहांमिलतीहैंजिनकोअपेक्षितहोहमारेपासलिखे।

ब्रजभूषनदास और कम्पनी

बनारस।

# ऋग्वेदप्रातिशाख्यम् ।

## उव्वटकृतभाष्ययुतम् ॥

श्रीगणेशाय नमः ।

श्रीशौनकाय नमः ॥

ॐम् ॥ सूत्रभाष्यकृतः सर्वान्प्रणम्य शिरसा शुचिः । शौनकं च विशेषेण येनेदं पार्षदं कृतम् । १ । तथा वृत्तिकृतः सर्वांस्तान्सूत्रयशसस्तथा ॥ तेषां प्रसादाद्वै-तेषां स्वशक्त्या वृत्तिमारभे । २ । लेख्यदोषनिवृत्त्यर्थं विस्तारार्थं क्वचित्क्वचित् । बहूदाहरणार्थं च यो यतेत च मया पुनः । ३ । तस्याः समापने शक्तिं तएव प्रदिशन्तु मे । लब्ध्वा काममहं तेभ्यः प्रमेयं पारमीप्सितम् । ४ । चम्पायां न्यवसत्पूर्वं वत्सानां कुलमृद्धिमत् । यस्मिन्नु-द्विजवरा जाता बह्वृचाः पारमोत्तमाः । ५ । देवमित्र इति ख्यातस्तस्मिञ्जातो महामतिः । स वै पारिषदे श्रेष्ठः सुतस्तस्य महात्मनः । ६ । नाम्ना तु विष्णुमित्रः स कुमार इति शब्द्यते । तेनेयं योजिता वृत्तिः सङ्क्षिप्ता पार्षदे स्फुटा । ७ । परिगृह्णन्तु विप्रेन्द्राः सुप्रसन्ना इमां मम । अज्ञानाद्यदयुक्तं स्यात्तदृजूकृत्य गृह्यताम् । ८ । शास्त्रावतारसंबन्धविषयं च प्रयोजनम् । ज्ञात्वा ग्राह्यं भवेच्छास्त्रमिति शिष्टानुशासन-

च्यते, लक्षणपूर्वकं ह्यर्थपरिज्ञानं, तथाचोक्तं (१) "स्वरो व-म् । ६ । तस्मादादौ तावच्छास्त्रावतार उच्यते । शौनको गृहपतिर्वै नैमिषीयैस्तु दीक्षितैः । दीक्षासु चोदितः प्राह सत्रे तु द्वादशाहिके इतिशास्त्रावतारं स्मरन्ति । अथ सम्बन्ध उच्यते।इह हि द्विजानां वेदाभ्यासः सकलपुरुषार्थसिद्धेः कारणमिति वैदिकसिद्धान्तः, च पुरुषार्थश्चतुर्विधः । धर्मार्थकाममोक्षा इति तदुक्तमृग्विधाने यथा पवमानमाभानेदिष्टह्रद्यपुरुषसूक्तादिषु, वेदाभ्यासो हि पञ्चधाविहितः । अध्ययनं विचारोऽभ्यसनं जपोऽध्यापनमिति; तथाच स्मर्यते वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधेति, तदपि वक्ष्यति एकः श्रोता दक्षिणतो निषीदेदित्यादिना अध्ययनं अभ्यासार्थे द्रुतां वृत्तिं । इत्यभ्यसनं, प्रयोगार्थे तु मध्यमामिति जपादि, अध्यापनं पारायणं वर्तयेद्ब्रह्मचारीत्येवमादिना तस्मादधीतवेदस्य हि सति सामर्थ्ये संपूर्णफलेच्छया विचारस्यावसरः प्राप्तः । स च विचारो द्विविधः । अर्थतो लक्षणतश्चेति तथाचोक्तं स्थाणुरयं भारहारः किलाभूदित्यादिना । तथा च लक्षणं योऽनवेत्यस्तु न कर्मफलभाग्भवेत् । लक्षणज्ञा हि मन्त्राणां सकलं भद्रमश्नुते इति, तस्मात्तावत्पूर्वं लक्षणमु-

(१) इदं प्रथमपटलाध्यायमस्ति अग्रे तत्प्रयोगार्थ एव चोत पाटान्तरञ्चोध्यम् ॥

र्णोऽक्षरं मात्रा, दैवं योगार्षमेव च । मन्त्रं जिज्ञासमा-
नेन वेदितव्यं पदे पदे इति" सर्वशास्त्रादौ नमस्कारं
करोत्याचार्यः यथा स्वयंभुवे ब्रह्मणे विश्वगोप्त्रे यथा
च सर्वात्मानं विश्वसृजं स्वयंभुवं यथा च पितृदेवर्षि-
साध्येभ्यइति, अतः अत्रापि शौनकाचार्यो भगवान् शा-
स्त्रादौ नमस्कारं चकार अविघ्नार्थं च । परावरे इ-
ति च ॥

## परावरे ब्रह्मणि यं सदाहुर्वेदात्मानं वे- दनिधिं मुनीन्द्राः । तं पद्मगर्भपर- मन्त्रादिदेवं प्रणम्यर्चां लक्षणमा- हशौनकः ॥ १ ॥

परं च अवरं च परावरं ब्रह्म, परं च अवरं च प-
रावरं ब्रह्म, परं नाम मनसाध्यानगम्यं सदसदात्मकं वे-
दान्तेषु यदुच्यते यदेतद्हृदयं मनश्चेत्यादि, तथाच । म-
हापुरुषइति यमवोचामेत्यादि, ततो ज्योतिरजतं प्राह
यद्योगात्समुपाश्नुतइति, "स ब्रह्ममतमत्ययोनिसदसदोः
ध्रुवं महच्चेतत्स्थाणु विश्वे सन्ति ज्योतिरुत्तममिति च" ।
अवरं तु पुनःकरणम् । यदुपांशुध्वनिनादो यद्दवि मं
द्रमध्यमोत्तमस्थानेषु जपादिकर्मसु दत्प्रयुज्यते शब्दा-

ख्यमग्निमीळइत्यादि । तदुक्तम् "द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्मपरं चयत् । शब्दब्रह्मणि निष्णातः परंब्रह्मणि गच्छतीति" । शब्दब्रह्मज्ञानपूर्वकं परब्रह्मज्ञानम् । तस्मिन्परावरे ब्रह्मणि यं वेद ब्रह्माख्यं सदा सर्वदा आहुर्वदंति स्तुत्यादिभिः स्तुवन्ति विचारयन्ति । मीमांसन्ते एतद्ध्येव बहुबह्वृचा महदुक्ते मीमांसन्तइतियथा । कश्चाहुर्मुनीन्द्राः मुनिप्रधाना ऋषयो मन्त्रद्रष्टारः ; कैर्नामभिरित्युच्यते, वेदात्मा वेदनिधिः पद्मगर्भः परमं आदिदेवइत्येवमादिभिः । वेदानां आत्मा वेदात्मा वेदाइति विद्यते ज्ञायते लभ्यते वा एभिर्धर्मादिपुरुषार्थाइति वेदाः । मन्त्रब्राह्मणयोर्वेदनामधेयं, तच्च ह्यव्यभिचारेण तत्स्वरवर्णमात्रापूर्वकः पाठः सर्वकालं सर्वदेशेषु । प्रतिचरणमविभागेनैकैको मन्त्रराशिर्वेदइत्युच्यते, आत्मा "अतसातत्यगमने" सततं सर्वदा सर्वदेशे सर्वकाले च भोक्तृत्वेन स्रष्टृत्वेन च अतति गच्छतीत्यात्मा, तं वेदात्मानं, वेदनिधिं वेदानां निधिः वेदनिधिः वेदानां स्थानमित्यर्थः, जनयति पोषयति च । तथाच व्यासः । सृष्ट्यादौ ब्रह्मणो वेदा मुखेभ्यश्च विनिर्गताः । तत्रैव च लयं यान्ति प्रलये समुपस्थिते-इति, तं वेदनिधिं पद्मगर्भं पद्मगर्भः पद्मगर्भः पद्मगर्भादुत्पन्नः । तथाच "विष्णोर्जले शयानस्य नाभेः पद्मं समुत्थितम् । तस्मिन्ब्रह्मा समुत्पन्नस्तेन दृष्टं चराचर-

मिति" तं पद्मगर्भं, परमं स एव देवानां परमं अन्ये देवा अवमाइत्यर्थः । तं परमं तु शब्दो विशेषणार्थः । आदिदेवमिति स एव हि आदौ उत्पन्नः । पश्चादन्ये देवाइति देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा, तमेवं गुणविशिष्टं ब्रह्माख्यं प्रणम्य प्रणामान् कृत्वा प्रकर्षेण नमनं प्रणमनम् नमस्कारं कृत्वेत्यर्थः, ततः किं कृतवानित्युच्यते ऋचां लक्षणमाह शौनकइति परिमिताक्षरपादाईर्चविहिता मन्त्राः । तथाचोक्तं । यः कश्चित्पदवान्मन्त्रो युक्तश्चाक्षरसंपदा, स्वरयुक्तोऽवसानेन तामृचं प्रतिजानतइति, लक्षणम् च स्वरवर्णाक्षरमात्राइति आह ब्रवीति वदति उच्चारयतीत्यर्थः । शौनकआचार्यो भगवान् शुनकस्यापत्यं शौनकः । नामग्रहणम् स्मरणार्थम् । "यावदस्मिंल्लोके पुरुषः पुण्येन कर्मणा श्रूयते तावदयं स्वर्गे लोके वसतीतिश्रुति." तथाचोक्तं, दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणाम् । यावत्स शब्दो भवति तावत्पुरुषउच्यते इतियथा महिदासऐतरेयआहेति यथा च मनुराह प्रजापतिः । ऋचां लक्षणमाहेतीयमाचार्यस्य प्रतिज्ञा, अत ऊर्ध्वं यदुच्यते तत्सर्वमृचां लक्षणम् वेदितव्यं संहिता पदप्रकृतिरित्येवमादि तत्सर्वं ऋचां लक्षणम्, वेदितव्यं यथा अग्न्याधेयप्रभृतीन्याह वैतानिकानि यथाच गृह्याणि वक्ष्यामइति प्रतिज्ञा करोति तथा सर्वत्र वेदि-

तव्यं, एवं शास्त्रादौ नमस्कारं प्रतिज्ञां च कृत्वा शास्त्रप्रयोजनमाह । माण्डूकेय: संहितामित्यादि तथाच "सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यतामिति" माण्डूकेयआचार्यो भगवान् संहितायां द्यावापृथिव्यो: संहितां वायुमाह ब्रवीति, "अथात: संहिताया उपनिषत्पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायु: संहितेति मांडूकेयइति" तथाऽऽकाशं वास्यमाण्डव्यएव तथा तयोरेव द्यावापृथिव्योराकाशं च संहिताअस्योपासनस्य मांडव्यो नामाचार्य इच्छति चशब्दाद्वायुं च समानतामनिले चाम्बरे च मत्वाऽऽगस्त्यो विपरिहारं तदेवाह समानतां समाने तुल्ये एते संहिते अनिले चाम्बरे च एवं मत्वाऽगस्त्य: अगस्त्यपुत्र: विपरिहारं दत्तवान् तदेव नान्यइति विविधः परिहारो विपरिहार: । अविपरिहारं मत्वा अपरित्यक्तो वायुराकाशे तत्वे अध्यात्मक्लृप्तौ शाकीरसुतश्च वाङ्मनसयोर्विवदन्त्या,ऽउत्पूर्वे अध्यात्मक्लृप्तौ शूरवीर: अध्यात्मविषये क्लृप्तिः कल्पना प्राणा: संहिता शूरवीरिनामाचार्यस्तस्य सुतश्च विवदन्ति विवादं कुरुत: । वाङ्मनसयोरानुपूर्व्ये क्रमे । कथं अध्यात्मं वाकपूर्वरूपं मनउत्तररूपं प्राणा: संहितेत्येक: अपरस्तद्विपरीतमाह । मन: पूर्वरूपं वागुत्तररूपमिति एवमथात: संहिताया उपनिषदित्यस्यार्थ: सूचित: । तस्य प्रयोजनं कि-

ल वक्ष्यति, पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति, तत्र पृथिव्यां दृष्टिर्दृष्टः फलं तत्फलप्राप्तिः स्यादिति, वक्ष्यति च स य एवमेतां संहितां यो वेदेति, अथेदानीं संहितापदक्रमस्वरूपमाह "सन्धेर्विवर्तनं निर्भुजं वदन्ति शौद्धाक्षरोच्चारणं च प्रतृण्णं उभयमन्तरेणोभयं व्याप्तमन्ते परे अन्तनाकोभयाख्या । निर्भुजसंहिताध्ययनमुच्यते। सन्धेर्विवर्त्तनं द्वयोः पदयोरक्षरयोर्वा सन्धिर्मध्यमवकाशोन्तरमित्यनर्थान्तरं, तस्य सन्धेर्विवर्तनं । अविच्छेदाध्ययनं तन्निर्भुजं वदन्ति आचार्याः पाठकाः । द्विविधा संहिता, अक्षरसंहिता, पदसंहिता च, अत्राक्षरग्रहणमुपलक्षणं वर्णयन्ति सन्धिविवृत्त्या तु निर्भुजं वदन्तीति केचित्पठन्ति। अर्थस्तु स एव। शौद्धाक्षरोच्चारणं अशुद्धे द्वे अक्षरे पदे वा सन्धिमकुर्वता उच्चारणं अभिव्याहरणं तत्प्रतृण्णं, प्रतृण्णं पदाध्ययनमुच्यते उभयं व्याप्तं संहिता च पदं च केनेत्याह, उभयमन्तरेण क्रमाध्ययनेन उभयव्याप्तं स्थितं वेदितव्यं यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपं, अथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य रूपमग्रउएवोभयमन्तरेणोभय व्याप्तं भवतीति उभयमन्तरेणोभयं व्याप्तमग्रेइति केचित्पठति सएवार्थः ।• अग्रे प्रथममेव क्रमात् अनेन व्याप्तं भवतीति वेदितव्यं,तथा परे कामा अन्न नाकोभया·

ख्या:। परा: कामा ये उक्ता: अन्नकाम: नाककाम: स्व-र्गकामइत्यर्थ:। उभयकाम अन्नकाम: स्वर्गकामश्च तथा-चोक्तं, अन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकाम: प्रतृण्णमु-भयकामउभयमन्तरेणेति, एतत्सर्वं विज्ञेयमितिवाक्य-शेषः। प्राण: षकारे बलं णकारे यत्र, तच्च वि-विज्ञेयं प्राणस्य षकार: सञ्ज्ञा:"। षकार: प्राणआत्मे-तिश्रुते।"। सबलां सप्राणां संहितां वेदायुष्यमितिवि-द्यात्। बलं णकार:। णकारेण बलवती संहिता, वा-योर्हि प्राणस्य बलवत्वं कार्यं, स्पृष्ट करणं षकार: प्राण आत्मा, तथाचोक्तं, ये ऊष्माण: सप्राणइति, तथा णका-राख्येन बलेन बलवती णकारश्च स्पर्श: स्पृष्टं करण कर्त्तव्यमित्यर्थ:। तथाचोक्तं "तस्यै वा एतस्यै संहिता वेदायुष्यमितिविद्यादिति" तथाच" ते यद्वयमनुसंहि-तमृचो धीमहि, यच्च मांडूकेयीयमध्यायं प्रब्रूमइति" मांडूकेयीयमितिकथमित्युच्यते, अथ वै वयं ब्रूमो नि-जवक्ता: स्मइतिहस्माह, ह्रस्वो मांडूकेय: पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाश: पूर्वरूपोत्तररूपेअ-न्तरेण येन सन्धिं विवर्तयति, येन स्वरात्स्वरं विजा-नाति येन मात्रामात्रांविभजते सा संहितेति, स यएव-मेतां संहितां वेदसन्धीयते प्रजया पशुभिर्यशसा ब्र-ह्मवर्चसेन स्वर्गेण लोकेन न सर्वमायुरेतीतिप्रशंसा वाक्प्राणयोश्च होम: परस्परं, तच्च विज्ञेयं, वाचि

प्राणो हूयते प्राणे च वाग्घूयते ।।तथाचोक्तं "तद्यत्रैतद्धीते वा भाषते वा वाचि तदा प्राणो भवति वाक्तदा प्राणं रेढि, अथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेढि। तथाच किमर्था वयमध्येष्यामहे, किमर्था वयं यक्ष्यामहे, वाचि हि प्राणं जुहुमः प्राणे वा वाचं यो ह्येव प्रभवः सएवाप्ययइति, एवं च संहितोपनिषदि योऽर्थः स एवाचार्येणा प्रदर्शितइति विज्ञापनार्थं,तस्य किल तत्प्रयोजनं वेदे योऽर्थोऽभिहितः स एव शास्त्रे प्रतिबद्धइतिज्ञापनार्थं च, यथा अथातश्चतदाहरन्ति यथा चाग्न्याधेयप्रभृतीन्याह वैतानिकानीति यथा" शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोरिति" कथमितिचेत् यदुच्यते वैदिककर्मानुष्ठानात्पुरुषनिश्श्रेयसार्थफलावाप्तिरेष वैदिकः सिद्धान्तः । तत्र विध्यर्थवादाः श्रूयन्ते निन्दाप्रशंसापुराकल्पाःतासाराभीक्ष्णसंप्रश्नसंशयाइति तदुक्तं "विधिर्निंदा प्रशंसा च पुराकल्पमित्यपि । असाराभीक्ष्णसंप्रश्ना ब्राह्मणे संशयश्च यइति" यस्मात्केवलैर्वेदवाक्यैर्न शक्यतेऽनुष्ठातुं विच्छिन्नत्वाद्वेदवाक्यानां गूढार्थत्वाच्च,अतः कविभिराचार्यैर्वेदार्थकुशलैर्वेदार्थेभ्यो निष्कृष्य कर्मार्थं सुबोधानि इमानि विद्यास्थानानि प्रवर्तितानि, शिक्षा कल्पो व्याकरणं निरुक्तञ् छन्दो ज्योतिषं धर्मशास्त्रम् पुराणं न्यायविस्तरो मीमांसादीनि,

कानि पुनः प्रयोजनानि विद्यास्थानानामनुप्रवर्त्तंते अत आह, शिक्षा स्वरवर्णोच्चारणोपदेशकं शास्त्रम्, कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्, व्याकरणं च शब्दार्थव्युत्पत्तिकरं शास्त्रम्, निरुक्तम् पदविभागमन्त्रार्थदैवतानिरूपणार्थं शास्त्रम्, छन्दो गायत्र्यादीनां छन्दसां ज्ञानशास्त्रम्, ज्योतिषं कालपरिज्ञापनार्थं शास्त्रम्, धर्मशास्त्रमाचाराद्युपदेशकं शास्त्रम्, पुराणं स्थित्युत्पत्तिप्रलयादिसूचकं शास्त्रम्, न्यायविस्तारः प्रमाणैरर्थं परीक्षणं करोति शास्त्रम्, मीमांसा वेदवाक्यार्थविचारणाय शास्त्रम्, इत्येवमादीनि प्रयोजनानि विद्यास्थानानां अत आचार्यो भगवान्शौनको वेदार्थवित् सुहृद्भूत्वा ब्राह्मणेभ्योऽर्थवादानुत्सृज्य विधिं समाहृत्य पुरुषहितार्थमृग्वेदस्य शिक्षाशास्त्रम् कृतवान् इतिप्रदर्शनार्थं वर्णयन्ति अन्यथा वेदार्थो नशक्यते ज्ञातुं, तथाचोक्तम् "न प्रत्यक्षमनृषेरस्ति मन्त्र इति" यथाच "योगेन दाक्षिण्येन दमेन बुध्या बाहुश्रुत्येन तपसा नियुज्यत" इति प्रसङ्गाद्बहु लपितमिदानीं प्रकृतमुच्यते, गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च । लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः, स्वरितोदात्तनीचत्वं श्वासो नादस्तथोभये । वर्णानां गुरुत्वं चाधिक्यं हि यथा गुरूणि दीर्घाणीत्येवमादि, तथा साम्यं समत्वमित्यर्थः । ह्रस्वत्वं दीर्घत्वं लोपश्च, आगमश्च विकारश्च, वर्णानां

लोपो यथा त्रिवृत्कंभनेन स्कभीयानिति, आगमः। अ-स्कतोषमिति, विकारः। सुषुमायातमिति, प्रकृतिः। प्रकृत्येतिकरणादौ प्रगृह्याइति यथा प्रो अस्मै, इन्द्राग्नी आगादियमिति, विक्रमः क्रान्तः प्राक्ततोपधइति, याः फलिनीः। अगस्त्यः खनमानः क्रमश्च वेदितव्यः। यथा स्वरानुस्वारोपहितः इति,हित्वर्णानां यथा आप्रद्रव-परावतः। स्वरितत्वं उदात्तत्वं नीचत्वं अनुदात्तत्वमि-त्यर्थः। यथा उदात्तश्चानुदात्तश्चेत्यादि, श्वासत्वं, नाद-त्वं,तथोभयत्वं,श्वासनादत्वं,श्वासो घोषाणामित्येवमा-दि, एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता, एतत्सर्वं यदनुक्रांतं मांडुकेयः संहितामित्येवमादि, तत्सर्वं वि-ज्ञेयं विविधं वेदितव्यमित्यर्थः, केनेत्यतआह छन्दोभा-षां योऽधीते नेत्यर्थः। नान्यन हिविधा हि भाषा लौ-किको वैदिकी च, या वैदिकी सा छन्दोभाषेत्युच्यते, "यथाचोक्तं लोकवेदयोरिति"। विज्ञेयमितिसर्वंचानुष-ज्यते पुरस्तादुपरिष्टाच्च। छन्दोज्ञानमाकारं। भूत-ज्ञानं छन्दसा व्याप्तिं स्वर्गाम्रतप्राप्तं। छन्दसां ज्ञानंछ-न्दोज्ञानं यथा गायत्र्यादि। तथा छन्दसामाकारं श्वे-तादि। भूतज्ञानं छन्दसां यथा सर्वाणि भूतानि म-नोगतिश्चेत्यादि। तथा छन्दसां व्याप्तिं। यथा गुर्वक्ष-राणां गुरुवृत्तिसर्वमित्यादिस्वर्गप्राप्तिं चाम्रतप्राप्तिं च स्वर्गामृतत्वप्राप्तिः यथा "स्वर्गं जयत्येभिरथामृतत्वमि-

त्यादि"। तच्च विज्ञेयं यस्मात् तस्मात्। अस्य ज्ञानार्थं इदमुत्तरत्र वक्ष्यते, शास्त्रम् अखिलं शैशरीये। अस्य कस्य मांडूकेयः संहितामित्येवमादेरनुक्रांतस्य ज्ञानार्थं ज्ञानप्रयोजनायेत्यर्थः। इदं शास्त्रम् पार्षदाख्यं अखिलं संपूर्णं कृत्स्नं उत्तरत्रवक्ष्ये वच्यामइत्यर्थः। शैशरीये पारायणपाठे इतिवाक्यशेषः। शैशरीयायां संहितायामित्यर्थः। शैशरीया संहिता तद्दृष्टत्वात्। तथा पुराणे उक्तं। मुद्गलो गोखलो वात्स्यः शालीराः शिशिरि"स्तथा। पञ्चैते शाकलाः शिष्याःशाखाभेदप्रवर्त्तकाइति। तथा च। ऋग्वेदे शैशरीयां संहितामिति, यथा ऋग्वेदे पारायणाये शाकल्ये शैशरीयकमिति च, पदक्रमविभागज्ञो वर्णक्रमविचक्षणः। स्वरमात्राविशेषज्ञो गच्छेदाचार्यसंपदं। पदानां क्रमः पदक्रमः। अनुपरिपाट्या संहिता, पदसंहिता वर्णसंहिता च, वर्णानां क्रमोवर्णक्रमः। वर्णसंहिता विचक्षणइत्यर्थः। अथवाऽन्यथा योजना। पदानां क्रमस्य च पदाध्ययनस्य च विभागो विविधो भागो विभागः। एवं यो जानाति स च पदक्रमविभागज्ञः वर्णक्रमविचक्षणइति संहिताध्ययनविचक्षणइत्यर्थः। एवमध्ययनत्रितयं च प्रकृतं निर्भुजं प्रतृणं उभयमुत्तरं च तस्मादेवमुच्यते। स्वरमात्राविशेषज्ञः। स्वराश्च मात्राश्च स्वरमात्राः। स्वरा उदात्तादयः। मात्रा ह्रस्वादयः। एवं विशेषं योजा

नाति सगच्छेद्व्रजेत्। अगच्छेदित्युच्यते। आचार्यसंपदम् आचार्यत्वं कुर्यादित्यर्थः। अन्यथा अधिकार्येव न भवति। तथा चोक्तं याजनाध्यापनाभ्यासच्छन्दसायातयाम च। "स्थाणुं वर्छति गर्त्तं वा पात्यते प्रमीयते वेत्यादि" तथाचोक्तम्। "वटवः पण्डिता मूर्खा अन्योन्याध्यापकाश्च ये। दोषं कुर्वंति ते मूढास्तस्मादृष्टं तु सेवयेदिति"। अथवा गच्छत्याचार्यसंसद्मितिपाठः। गच्छति व्रजति प्राप्नोति आचार्याणां संसदं सभास्थानम् सुमंत्वादय आचार्या यत्र तिष्ठंति तत्रेत्यर्थः एवं तृचप्रशंसा। यथा ऋङ्मयो यजुर्मयः साममयइति। यथा च स य एवमेतां संहितां वेदेति। एवं शास्त्रप्रयोजनमुक्त्वा शास्त्रसंव्यवहारार्थं वर्णक्रमार्थं चाक्षरसमाम्नायमाह॥

अकारकारावुइएओऐऔ॥

अकारश्च ऋकारश्च अकारकारौ। अऋइति अथ इकारश्च उकारश्चएकारश्च ऐकारश्च औकारश्चेति। इउएओ इति एवमनेन क्रमेणाष्टौ वर्णा वेदितव्याः॥

पदाद्यंतयोर्न लकारः स्वरेषु॥

पदस्य आदौ अन्ते च लवर्णः स्वरेषु न गृह्यते। पदमध्ये भवतीति वेदितव्यं। उत्तरत्रापि विचारयिष्यामः॥

आकारादीन्दीर्घरूपान्द्वितीयान्ह्र-
स्वेषु ॥

अकारादयो ह्रस्वा उक्ताः तेषु तेषु ह्रस्वेषु आकारादयो दीर्घरूपाः । तान्द्वितीयान्विजानीयात् । किमुक्तं भवति । अकारो ह्रस्वः तस्य आकारो दीर्घो द्वितीयः । तथाऋकारो ह्रस्वस्तस्य ॠकारो दीर्घो द्वितीयः । तथा इकारो ह्रस्वः तस्य ईकारो दीर्घो द्वितीयः । तथा उकारो ह्रस्वः । तस्य ऊकारो दीर्घो द्वितीयः । अआऋॠइईउऊइत्येतत्सिद्धं भवति ॥

पञ्चस्वपि तानि सन्ति ॥ २ ॥

तानि कानि दीर्घाणीत्यर्थः । पञ्चस्वपि ह्रस्वेषु द्वितीया भवन्ति किंपुनश्चतुर्षु । अपि शब्दो ऌकारस्य विकल्पार्थः । यदि दीर्घो वर्त्तते । वक्ष्यति ऋकारऌकाराविति । तथा ह्रस्वादेशे ह्रस्वदीर्घौ सवर्णाविति ॥

कखौ गघौङः ॥

ककारस्य खकारस्य कखौ । तथा गकारस्य घकारस्य गघौ । ङकारश्च कखगघङः । एवं पञ्चभिर्वर्णैः प्रथमः पञ्चवर्गो वेदितव्यः ॥

चछौ जझौ ञः ॥

चकारश्च छकारश्च चछौ। जकारश्च झकारश्च ज-झौ। ञकारश्च चछजझञः, एवं पञ्चभिर्वर्णैर्द्वितीयः पञ्चवर्गः ॥

टठौडढौ णः ॥

टकारश्च ठकारश्च टठौ। डकारश्च ढकारश्च डढौ णकारश्च टठडढणः एवं पञ्चभिर्वर्णैस्तृतीयः पञ्चवर्गः ॥

तथौ दधौ नः ॥

तकारश्च थकारश्च तथौ। दकारश्च धकारश्च दधौ नकारश्च तथदधनः एवं पञ्चभिर्वर्णैः चतुर्थः पञ्चवर्गः ॥

पफौ बभौ मः ॥

पकारश्च फकारश्च पफौ। बकारश्च भकारश्च बभौ मकारश्च पफबभमः एवं पञ्चभिर्वर्णैः पञ्चवर्गः ॥

यरलवाः ॥

यकारश्च रेफश्च लकारश्च वकारश्च यरलवा एते चत्वारो वेदितव्याः ॥

हशषसाः ॥

हकारश्च शकारश्च षकारश्च सकारश्च हशषसाः एते चत्वारः अनेन क्रमेण वेदितव्याः ॥

अः ᳵकः ᳶपः अम् ॥

अ इति विसर्जनीयः । ᳵक इति जिह्वामूलीयः, ᳶप इत्युपध्मानीयः, । अं इत्यनुस्वारः । एवमपरे चत्वारः अनेन क्रमेण वेदितव्याः ॥

इति वर्णराशिक्रमश्च ॥ ३ ॥

इत्येवमुक्तक्रमेण प्रकारेण वर्णराशिर्वेदितव्यः । अकाराद्यनुनासिकान्तः । वर्णानां राशिः सङ्घातः समूहः वर्णकोशः वर्णसमाम्नायइत्यनर्थान्तरं । वर्णक्रमश्च अयमेव वेदितव्यः । उक्तप्रकारेण । वक्ष्यति । ऋकारादयो दशनामिनः स्वराइति । तथा परंस्वेकारमोभयोः, ओकारं युग्मयोरिति । अन्त्याः सप्त तेषामघोषाइति । तथा प्रथमपञ्चमौ च द्वावूष्मणां इत्येवमादिष्वयं क्रमो वेदितव्यः ॥

इति श्रीदेवमित्रसुतविष्णुमित्रकृते-
प्रातिशाख्ये वर्गद्वयवृत्तिः ॥

एवं वर्णसमाम्नायमुक्त्वा तत्र लघुनोपायेन सञ्ज्ञापरिभाषाभ्यां शास्त्रे संव्यवहारसिद्धिं मन्यमानः सञ्ज्ञासञ्ज्ञिसम्बन्धार्थमाह । अष्टौ समानाक्षरमित्यादि । इतिपरावरं ब्रह्मणीत्यारभ्य सकलदैशीयवैदिकैः पठ्यमानस्य वर्गद्वयस्य व्याख्या । अथ भाष्य-

म् । नमो भगवते मङ्गलेश्वरश्रीमद्दिव्यलक्ष्मीनृसिंहा-
य । श्रीवेदपुरुषाय नमः ॥

प्रातिशाख्ये प्रथमो पटलः ॥

# अष्टौ समानाक्षराण्यादितः ॥ १ ॥

किमर्थमिदमारभ्यते । शिक्षाछन्दोव्याकरणैः सा-
मान्येनोक्तलक्षणः तदेवमिहशाखायामिति शास्त्रप्र-
योजनं । प्रातिशाख्यप्रयोजनमनेन श्लोकेनोच्यते । शि
क्षादिभिर्यत्सामान्येनोत्सर्गेणोक्तम् लक्षणम् । यथा
तावच्छिक्षायां "स्युर्मूर्द्धन्या ऋटुरषा." । सामान्येन स-
र्वशाखासु रेफो मूर्द्धन्यइत्युक्तः । तथाऽन्यस्यां शिक्षा-
यां दन्तमूलीयउक्तः । एवं सर्वाः शिक्षा वर्णेषु स्थान-
करणानुप्रदानादिसर्वासु शाखासु विदधाति । न तु
नियमतः । कस्यां शाखायां रेफो मूर्द्धन्यः कस्यां द-
न्तमूलीयइति । अतएतद्व्यवस्थापकमारभ्यते । दन्त-
मूलीयस्तु तकारवर्गः । सकाररेफलकाराश्च रेफंवर्त्स्य-
मेके । एवमस्यां शाखायां दन्तमूलीयो वा वर्त्स्यो वा रे-
फइत्येतदवस्थारितम् । तथा सर्वैश्छन्दोविचित्यादिभिः
पिङ्गलयास्कसैतवप्रभृतिभिर्यत्सामान्येनोक्तम् लक्षण-
म् । तथा षट्सप्तत्यक्षरा चातिधृतिर्भवति । तथाच
तत्रैवोक्तं" । (१)पादः" । "इत्यादिपूरणः"एवं सामान्यल-
क्षणे"सति सन्धि शर्द्धो न मारुतमिति"चातिछन्दसि च-

(१) पिङ्गलाचार्यकृतछन्दः सूत्रे सः ॥

ष्टापदायां ऋचि सन्देहः किमियं अष्टाक्षरा अत्यष्टिः पादानामविकर्षेण । आहोस्वित्पादानां विकर्षेणातिधृतिः । अस्मिन्सन्देहे इदम् विशेषलक्षणमारभ्यते । "सखेव नहिषर्ड्क्ष मध्यमो वर्गउच्यते" । इत्येवमस्यां शाखायां पादविकर्षेणातिधृतिरियं। तथा व्याकरणे यत्सामान्येन । यथा "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणामिति" । अस्यार्थः । ऋग्विषये तु नुघमक्षुतङ् आख्यातानि पिपृतगायतइत्येवमादीनि तङ्शब्देनगृह्यन्ते कुत्र उरुष्याणएतानि व्यञ्जने परे दीर्घमापद्यन्ते, तु आतून इन्द्र, घआघाये अग्निं । मक्षूमक्षूत्रराणाहि इत्यादि तद्व्यवस्थापयितुमिदमारभ्यते । न सर्वत्रैतानि पदानि अस्यां शाखायां दीर्घा भवन्ति, यथा, तु तत्त्वप्रयः प्रतथा, नु अभिवोचानुसुम्वते, घ आघत्वावांत्मनाप्तः । ननु मक्षुशब्दस्य सामान्यलक्षणेनैव दीर्घभावउक्तः । नचाचापवादोऽस्ति नत्र ह्येवं पठ्यते, "मक्ष्वित्युकारः प्लवते सर्वत्राऽप्यपदांतभाक्" अतो मक्षुशब्दस्य क्वस्यं प्रयोजनं नैषदोषः, सामान्यलक्षणानुवादेनैव विशेषलक्षणम् विधातुं शक्यते नान्यथा सोऽयं मक्षुशब्दस्यानुवादो द्रष्टव्यः । एवमन्यत्रापि सामान्यविशेषलक्षणसाम्ये परिहारोद्रष्टव्यः । एवं भिन्नाछन्दोव्याकरणैर्युक्तेष्वन्येषु शाखासु सामान्येन लक्षणमुच्यते तदेवास्यां शाखायामनेन व्यवस्थाप्यत इत्येतत्प्रयोजनमस्यांगस्य। तथा चाथर्वणप्रातिशाख्ये" इद-

मेव प्रयोजनमुक्तं "एवमिहेति च विभाषासामान्येन" अस्य सूत्रस्यार्थः । सामान्येन लक्षणेन यद्विकल्पप्राप्तं तदेवं अस्यां शाखायां व्यवस्थितं भवतीति प्रातिशाख्यप्रयोजनमुक्तं । अथवा नैवैतदङ्गं शिक्षाछन्दोव्याकरणैः सामान्येनोक्तलक्षणस्य विशेषव्यवस्थापकं किं तु स्वतंत्रमेवैतदन्यच्छास्त्रनिरपेक्षं, तथाहि शिक्षाछन्दोव्याकरणैर्यन्न विहितं तदिह विधीयमानं दृश्यते यथा क्रमः । क्रमहेतुः । पारायणमित्येवमादिकं, अङ्गता चास्यान्यशास्त्रसव्यपेक्षस्य नैव स्यादकृत्स्नत्वात्, कृत्स्नतां वेदांगतां अनित्यतामार्षतां च स्वयमेवशौनको दर्शयिष्यति 'कृत्स्नं च वेदाङ्गमनित्यमार्षमिति, अनयोः पक्षयोर्यतरः पक्षः श्रेयान् ततरोग्राह्यः । उक्तं शास्त्रप्रयोजनं, प्रथमेपटले तु संज्ञाः परिभाषाश्चोच्यते, तदर्थमिदमारभ्यते । अष्टौ समानाक्षराण्यादितः । अष्टाविति संख्या, समानाक्षराणीति संज्ञा, आदित इति पञ्चमी पञ्चम्यास्तसिलिति हि वैय्याकरणाः पठन्ति, अथकोऽर्थः । आदित आरभ्य वर्णसमाम्नायस्याष्टाक्षराणि समानाक्षरसंज्ञकानि भवन्ति, यथा अ आ ऋ ॠ ऌ ॡ इ उ समानाक्षरसंज्ञायाः प्रयोजनं 'समानाक्षरे सस्थानइति' अथवा आदित इति नैवायं पञ्चम्यर्थे तसिल् किन्तर्हि सप्तम्यर्थे तत्रापि हि लक्षणम् स्मर्यते तसिल्प्रकरणे "आद्यादिभ्य उपसङ्ख्यानमिति" । तत्र चैतान्युदाहरणानि, आदितो म

ध्यंतः पृष्ठतइति अतोऽयं सप्तम्यर्थ एव अस्मिन्पक्षे एव। वर्णसमाम्नायस्यादौ अष्टाक्षराणि समानाक्षरसंज्ञकानि भवन्ति ॥

## ततश्चत्वारि संध्यक्षराण्युत्तराणि ॥

ततस्तेभ्यः समानाक्षरेभ्य उत्तराणि चत्वारि संध्यक्षरसंज्ञकानि भवन्ति, अकारस्य इकारेण उकारेण एकारेण ओकारेण च सह सन्धौ यान्यक्षराणि निष्पद्यन्ते तानि तथोच्यते यथा एओऐऔ संध्यक्षरसंज्ञायाः प्रयोजनं, 'संध्यानि संध्यक्षराण्याहुरेकइति; ततइत्यनयेव पङ्क्त्या संध्यक्षराणां समानाक्षरैः सहानन्तर्ये सिद्धे यदुत्तराणीति वदति तदन्तरा लृइत्यनयोः स्वरयोः प्रतिषेधार्थं तथाच यत्नं करिष्यति। ऋकारादयो दश नामिनः स्वराइति ॥

## एते स्वराः ॥

यएते समानाक्षरसंध्यक्षरसंज्ञका वर्णाः ते द्वादश स्वरसंज्ञा वेदितव्याः। उदात्तानुदात्तस्वरितप्रचयाएष्वक्षरेषु स्थिताः, स्वर्यंते शब्द्यन्तइतिस्वराः। यथा अआऋॠइईउऊएऐओऔइति। स्वरसंज्ञायाः प्रयोजनं, 'स्वरानुस्वारोपहितो द्विरुच्यतइति। ननु कथं वर्णसमाम्नायमनुपदिश्यैवाष्टौ समानाक्षराण्यादितइति उपदिष्टस्य हि व्यपदेशएवमुपपद्यते आदितइति। ना-

नुपदिष्टस्य। तथा चत्वारि संध्यक्षराण्युत्तराणीत्युत्तर-व्यपदेशो नैव घटते। नैष दोषः । उपदिष्टो वर्ण-समाम्नायो लौकिको विद्यते। तत्र यावन्तो वर्णा इह शाखायामुपयोक्ष्यन्ते तावतां संज्ञां कर्त्तुं तमेव वर्णसमाम्नायमुररीकृत्याष्टावष्टौ समानाक्षराण्यादितः । तथा तामेवानुपूर्वीमङ्गीकृत्य चत्वारि संध्यक्षराणीति उत्तरशब्दमाह। ननु यदि लौकिकोऽत्र वर्णसमाम्नायो गृह्यते एवं तर्हि तयाऽऽनुपूर्व्या भवितव्यं। तत्र च ऌकारात्परौ ऋकारॠकारौ समामनन्ति ऌॠऋॠ इति। तथा ऐकारात्पूर्वमेकारं औकारात्पूर्वमोकारं एऐओऔ इति। सकारात्परं हकारं समामनन्ति शषसह इति। सत्यं, आचार्यप्रवृत्त्या क्रमोऽन्यथाऽनुमीयते। तद्यथा ऋकारादयो दश नामिनः स्वरा इति। यद्याकारात्परौ पठ्यते तदानीं दश नामिनः स्वराः संपद्यन्ते, तथा सन्ध्येष्व-कारोऽर्द्धमिकारे, उत्तरं युग्मोऽकार इति, यदि एओऐ-औ एवं पाठो भवति तदानीं युग्मोत्तरमर्द्धमुकारः समुपद्यते, तथा यदि शकारात्पूर्वो हः पठ्यते तदानीं दु:स्पृष्टं तु प्राग्घकाराच्चतुर्णामिय पाठक्रम उपपद्यत इति। सोऽयमाचार्यप्रवृत्त्या पाठक्रमोऽनुमीयमानो लौकिकवर्णसमाम्नायस्य द्विधा पाठं गमयति। अतोऽयं लौकिको वर्णसमाम्नायो गृह्यते तथा तयाऽनुपूर्व्या तन्न दुष्कमिति। उभे अप्येते आनुपूर्व्यौ लौकिकस्य वर्णसमाम्नाय-

स्य दृष्टत्वे ॥४

इपरो दीर्घवत् प्लुतः ॥

इकारपरः प्लुतो दीर्घवत्प्रत्येतव्यः सर्वसादृश्यार्थः । यथा इकारइतिना सह सन्धौ दीर्घमेकमोकारं निरनुनासिकमापद्यते, तथाऽयमपिप्लुत ईकारं निरनुनासिकमापद्यतइत्यर्थः। क्रासंहितायां परिग्रहस्य पूर्वे वचने ईत्वभूतो भवति। द्वितीयेऽनुनासिकस्मिमात्रश्च। यथा विन्दतीतिविन्दती ॥ ३ ॥

अनुस्वारोव्यञ्जनंवा स्वरो वा ॥

अंइत्यनुस्वारो वर्णसमाम्नाये पठ्यते । स कांश्चित्स्वरधर्मान् गृह्णाति । कांश्चिद्व्यञ्जनधर्मान् । तद्यथा ह्रस्वत्वं दीर्घत्वं प्लुतत्वमुदात्तत्वं स्वरितत्वमिति स्वरधर्माः । तथाऽर्द्धमात्राकालता स्वरवर्णेनोदात्तानुदात्तस्वरितत्वं संयोगश्चेति व्यञ्जनधर्माः । तत्रोभयधर्मयोगादुभयस्वभावं स्वरव्यञ्जनयोरन्यद्वर्णान्तरं प्रकाशयति । अनुस्वारो व्यञ्जनं वा स्वरो वेति वर्णस्वरूपकथनेन प्रयोजनं । तेन स्वरग्रहणेन च न गृह्यते । अनुस्वारो व्यञ्जनग्रहणेन न गृह्यते । एके वर्णाश्रितकान्तकार्यानित्यत्र वर्णग्रहणे नानुस्वारोऽपि गृह्यतइति । ननु सर्वः शेषो व्यञ्जनान्येवेति व्यञ्जनग्रहणे नानुस्वारग्रहणमस्तु । कोगुणइतिचेत् । सूत्र-

मेतन्नारब्धव्यं स्यात् । व्यञ्जनग्रहणेन ग्रहणात् । "स-व्यञ्जनः सानुस्वारः शुद्धो वेति" । अनुस्वारो व्य-ञ्जनं चाक्षरांगमिति । संयोगानुस्वारपराणि यानी-त्येवमादिसूत्रेष्वनुस्वारग्रहणं न कर्त्तव्यं स्यात् । व्य-ञ्जनग्रहणेनैव सिद्धत्वात् । स्वरानुस्वारोपहितो द्विरु-च्यते, संयोगादिरित्यत्रानुस्वारस्य व्यञ्जनत्वे सत्यपि वचनात्परस्य संयोगादेर्द्विरुक्तिर्भविष्यति नतु अनु-स्वारस्यैवेत्येवमनुस्वारस्य व्यञ्जनत्वेन सर्वमभिप्रेतं सि-ध्यति । अतो व्यञ्जनग्रहणेनैवानुस्वारग्रहणं भवतु किमनेन योगेनानुस्वारो व्यञ्जनं वा स्वरो वेति । सत्यमे-तत् यदि नामानुस्वारस्य स्वरूपं न कथितं स्यात् । तस्मात् स्वरव्यञ्जनातिरिक्तमन्यद्वर्णान्तरमेतदित्येतत्ख्या-पनपरमेवैतत्सूत्रमिति सिद्धान्तितम् ॥

## सर्वः शेषो व्यञ्जनान्येव ॥

उपयुक्तेतरवचनः शेषशब्दः स्वरानुस्वारव्यतिरिक्तः स-र्वः शेषो वर्णराशिर्व्यञ्जनसञ्ज्ञको वेदितव्यः ॥ व्य-ञ्जयन्ति प्रकटान्कुर्वन्त्यर्थानिति व्यञ्जनानि सर्वशब्दो-ऽयमादीनां परिग्रहणार्थः । तेषां यद्यप्यत्र सञ्ज्ञाधि-कारे ग्रहणं न कृतं तथापि स्थानाधिकारे ग्रहणं कृतमेव । नासिक्ययमानुस्वारानिति । ऌकारस्य मा-त्रिकस्य ॡकारस्य प्लुतस्य च सर्वशब्देन ग्रहणं न भ-

ऽभ्यति । स्वरशब्देन ग्रहणात् । धातो स्वरः कल्पयताल्लृकारइति लृकारस्य स्वरसञ्ज्ञा । तथा स्त्रिस्वः प्लुतउच्यते स्वरइतिप्लुतस्य स्वरसंज्ञा । अतश्च स्वरग्रहणेनैव ग्रहणाद्व्यञ्जनत्वं न भवति । व्यञ्जनान्येवेत्यवधारणं । अनुस्वारस्योभयरूपतामुज्ज्वलयति । व्यञ्जनसञ्ज्ञाप्रयोजनं 'दीर्घं ह्रस्वो व्यञ्जनइति' ॥

## तेषामाद्याः स्पर्शाः ॥

तेषां व्यञ्जनानामाद्या वर्णाः । स्पर्शसञ्ज्ञका वेदितव्याः । स्पृष्टकरणाः स्पर्शाः । कादयो मान्ताः । स्पर्शसञ्ज्ञाप्रयोजनं, स्पर्शाः पूर्वे व्यञ्जनान्युत्तराणीति ॥

## पञ्च ते पञ्चवर्गाः ॥

ते च स्पर्शाः पञ्चवर्गाः पञ्चभिः स्पर्शैर्वर्ग एषामिति पञ्चवर्गाः कियन्तस्ते वर्गाइतिपञ्च । तथा - कखगघङ । चछजझञ । टठडढण । तथदधन । पफबभम । सञ्ज्ञाप्रयोजनं 'वर्गे वर्गे च प्रथमावघोषौ,इति ॥

## चतस्रोऽन्तस्थास्ततः ॥

ततस्तेभ्यः स्पर्शेभ्योऽनन्तराश्चतस्रोऽन्तस्थासञ्ज्ञका वर्णा व्यक्तयो वेदितव्याः । स्पर्शोष्मणां अन्तर्मध्ये तिष्ठन्तीति अन्तस्थाः, व्यञ्जनान्येवैतानि स्त्रीलिङ्गानि निर्दिष्टानि यथा यरलवाः । अन्तस्थसञ्ज्ञाप्रयोजनं । अन्त-

स्थास्तु रेफवर्ज्जं परास्विति ॥

उत्तरेऽष्टावूष्माणः ॥

अन्तस्थाभ्य उत्तरेऽष्टौ ऊष्माणो वेदितव्याः । ऊष्मा वायुस्तत्प्रधाना वर्णा ऊष्माणः यथा हशषसः कः पः अं इति । ऊष्मसञ्ज्ञाप्रयोजनम् 'तमेवोष्मणामूष्मणीति' । यस्तु चतस्रोऽन्तस्था तत उत्तरे इत्येवं सूत्रमिच्छति तस्य चतस्रोऽन्तस्थास्तत इत्यनयोः पदयोस्त्रीलिङ्गबहुवचनान्तत्वात् उत्तर इत्यस्य पदस्य पुल्लिङ्गबहुवचनान्तत्वात्सम्बन्धो दुर्लभः । अतश्चतस्रोऽन्तस्थास्तत इत्यत्रैव सूत्रच्छेदः ॥

अन्त्याः सप्त तेषामघोषाः ॥

तेषामेवोष्मणामन्त्याः सप्तोष्माणोऽघोषसञ्ज्ञा वे[illegible]ाः । यथा शषसः कः पः अं इति । अघोषस[illegible]जनं 'अघोषे रेफरेफी चेति' ॥

वर्गे वर्गे च प्रथमावघोषौ ॥

वर्गे वर्गे प्रथमद्वितीयौ वर्णौ अघोषसञ्ज्ञौ वेदितव्यौ । यथा कखचछटठतथपफेति । पारिशेष्यादन्यानि घोषवत्सञ्ज्ञानि व्यञ्जनानि ॥

युग्मौ सोष्माणौ ॥

वर्ग इतिवर्त्तते । युग्मौ द्वितीयचतुर्थौ वर्णौ सोष्मा-

णौ वेदितव्यौ । अन्वर्थसञ्ज्ञेयं । ऊष्मा, वायुस्तेन स-ह्वर्त्तत इति सोष्माणः । यथा । खघछझठढथधफभे-ति । सोष्मसञ्ज्ञाप्रयोजनं 'सोष्मा तु पूर्वेण सहोच्य-त' इति ॥

## अनुनासिकोऽन्त्यः ॥

वर्गे वर्गे इतिवर्त्तते । प्रतिवर्गमन्त्यो वर्णः अनुना-सिकसञ्ज्ञो वेदितव्यः । ङञणनमेति । अनुनासि-कसञ्ज्ञाप्रयोजनं 'परेषु स्पर्शेष्वनुनासिकेष्विति' इयम-न्वर्थसञ्ज्ञा । नासिकां इनु यो वर्णो निष्पद्यते स्व-कीयस्थानमुपादाय स द्विस्थानोऽनुनासिक इत्युच्य-ते । तथाचोक्तं "मुखनासिकावचनोऽनुनासिक इति" ॥

## तस्मादन्यमवसाने तृतीयं गार्ग्यस्प-र्शम् ॥

ऊष्मान्तस्थासोष्मेत्यत्र प्रथमतृतीयपञ्चमान्स्पर्शान् पदान्तीयान्वक्ष्यति । तत्र प्रथमतृतीयविकल्पार्थमि-दमारभ्यते । तस्मादनुनासिकादन्यात्स्पर्शादन्यं प-दावसाने वर्त्तमानं स्पर्शं गार्ग्य आचार्यः स्वं तृतीयं म-न्यते । तथा वाग् । षड् तद् । ककुब् । तस्मादन्य-मितिकिं । तान् । तम् ॥

## प्रथमं शाकटायनः ॥

शाकटायनमाचार्यः प्रथमं मन्यते । यथा वाक् । षट् । तत् । ककुप् ॥

ओजा ह्रस्वाः सप्तमान्ताः स्वराणाम् ॥

ओजा विषमाः स्वराणां मध्ये ह्रस्वसञ्ज्ञा वेदितव्याः । सप्तमपर्यंताः । यथा अऋइउइति । ह्रस्वसञ्ज्ञाप्रयोजनं 'ह्रस्वपूर्वस्तु सोभाररमिति' ॥

अन्ये दीर्घाः ॥

ह्रस्वसञ्ज्ञकेभ्यो येऽन्ये स्वरा दीर्घसञ्ज्ञा वेदितव्याः । यथा आऋ ईऊएओऐऔइति । दीर्घसञ्ज्ञाप्रयोजनं 'दीर्घं ह्रस्वो व्यञ्जनइति' ॥

उभये त्वक्षराणि ॥

येइह ह्रस्वदीर्घसञ्ज्ञाः स्वरा निर्दिष्टा, यौ च वक्ष्यमाणकौ स्वरौ, यातौ स्वरः कल्पयतालृकारइति तिस्रः प्लुतउच्यते स्वरइति लृकार इप्लुतौ एते उभये तु अक्षरसञ्ज्ञा वेदितव्याः । यथा अआऋॠइईउऊएओऐऔइति लृ इति । ननु कस्मात्प्राकृता एव स्वरा दीर्घा ह्रस्वाश्च उभयग्रहणे न नान्तर्भाव्यन्ते, येनासौ व्यवहितावपि लृकारप्लुतौ उभयग्रहणेनान्तर्भाव्येते इति । शृणु । तन्त्रान्तरे "स्वरोऽक्षर"मिति स्वरमात्रस्याक्षरसञ्ज्ञा विधीयते । अयमपि "सव्यञ्जनः सानुस्वा-

रः शुद्धो वाऽपि स्वरोऽक्षरमिति" स्वरस्याक्षरसञ्ज्ञां विधास्यति । नचाक्षरसञ्ज्ञां विनोदात्तादयः स्वरास्तदाश्रयाः शक्यन्तउच्यन्तेऽक्षराश्रयाइतिवचनात् । किं च गुरुलघुपूर्वांगपराङ्गचिन्तामक्षरस्यैवेदानीं वक्ष्यति । तस्मादक्षरसञ्ज्ञाप्राप्त्यर्थं इह लृकारलॄतौ तूभयशब्देनात्रभाव्येते, न तु प्राकृताएव ह्रस्वदीर्घाः स्वरा इति । अक्षरसञ्ज्ञाप्रयोजनं 'यकाराद्यक्षरं परमिति' ॥

## गुरूणि दीर्घाणि ॥

यानि दीर्घाण्यक्षराणि तानि गुरुसञ्ज्ञकानि वेदितव्यानि । प्लुतस्याप्यत्र ग्रहणं द्रष्टव्यं । यो हि द्विमात्रं गुरु कल्पयति, कल्पयत्येवासौ त्रिमात्रमपीति । यथा आ ॠ ॡ ए ओ ऐ औ इति । गुरुसञ्ज्ञाप्रयोजनं 'गुर्वक्षराणां गुरुवृत्तीति' ॥

## तथेतरेषां संयोगानुस्वारपराणि यानि ॥

यथा दीर्घाणि गुरुसञ्ज्ञकानि तथेतरेषां ह्रस्वानामक्षराणां यानि संयोगपराणि यानि चानुस्वारपराणि तानि गुरुसञ्ज्ञकानि भवन्ति । संयोगपराणि "प्रप्रवस्त्रिष्टुभमिति । अनुस्वारपराणि । "वसुं ह्र-

नुं सहसो जातवेदसमिति, त्वं सोमासि सत्पतिः । पारिशेष्यादन्यानि लघुसञ्ज्ञकानि । 'संहितायां लघोर्लवुहूति' संज्ञयनकारदर्शनाच्च । ऋषभं मासमानामित्युदाहरणं । नन्वेवं विसर्गपरस्य लघोर्गुरुसञ्ज्ञा न स्यात् । माभूत् । पादमध्ये तु व्यञ्जनपरस्य विसर्गान्तस्य संयोगपरत्वादेव गुरुसञ्ज्ञासिद्धेः । इतरत्र त्वमिनृणास्त्वोऽनुपयुक्तत्वात् । यद्वा नः कारे च गुरावपीति ज्ञापकात् विसर्गपरस्यापि लघोर्गुरुसञ्ज्ञासिद्धेरिति ॥

## अनुस्वारो व्यञ्जनं चाक्षराङ्गम् ॥

एवमष्टौ समानाक्षराणीत्यादिना वर्णसमाम्नायमनुक्रम्य सञ्ज्ञां च विधाय ततः 'सर्वः शेषो व्यञ्जनानीत्यादिना' व्यञ्जनगताः सञ्ज्ञाः कृत्वाऽनंतरं 'षोडश ह्रस्वाः सप्तमान्त्याः स्वराणा'मित्यादिनाऽक्षरगताः सञ्ज्ञाः कृत्वाऽधुनाऽक्षरव्यञ्जनसंनिकर्षे किं कस्याङ्गमित्येतन्निरूपणायाह । अनुस्वारो व्यञ्जनं चाक्षराङ्गं स्वराङ्गमित्यर्थः । अत्र यानि स्वरमध्यगतानि व्यञ्जनानि न भवन्ति । तान्युदाहरणं अइत्यत्र पकाररेफावकारस्याङ्गं । वर्कइत्यत्र वकाररेफककारा अकारस्याङ्गं । अर्कं यदित्यत्र ककाररेफानुस्वारा अकारस्याङ्गं । अव्यञ्जनत्वादनुस्वारस्य ग्रहणं । अङ्गसञ्ज्ञाप्रयोजनं यानि यस्य स्वरस्याङ्गभूतानि व्यञ्जनानि तानि तेनैव

स्वरेण समानस्वराणि भवन्ति । तथाचोक्तं । "स्वरउच्चः स्वरो नीचः स्वरः स्वरितएव च । स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरमिति" ॥

स्वरान्तरे व्यञ्जनान्युत्तरस्य ॥

एवं तावद्यत्रैकः स्वरस्तत्र पूर्वाणि पराणि च व्यञ्जनानि तस्यैवांगं भवंति । अथ पुनर्यानि स्वरयोर्मध्यगतानि तानि किं पूर्वस्योतोत्तरस्याङ्गमित्यस्मिन् सन्देहे तु इदमारभ्यते । स्वरयोरन्तरे यानि व्यञ्जनानि तान्युत्तरस्यैवाङ्गं भवन्ति । न पूर्वस्य । यथा अयं इति । अयं शब्दस्त्वन्तोदात्तत्वात् यकारउदात्तवत् श्रूयते । अयं देवाय जन्मन इत्यत्र तथैव एकारस्यानुदात्तत्वादङ्कारोऽनुदात्तवच्छ्रूयते । यथा गायन्त्विति अकारस्य स्वरितत्वाद्यकारः स्वरितएव श्रूयते ॥

पूर्वस्यानुस्वारविसर्जनीयौ ॥

स्वरान्तरे वर्तमानौ पूर्वस्य स्वरस्याङ्गं भवतः । यथाऽनुस्वारस्योदाहरणं भवति, वसं सूनुं सहसः । विसर्जनीयस्य । नृः पात्रम् । न्हः प्रणेत्रमित्येवमादि ॥

संयोगादिर्वा ॥

संयोगादिभूतो वर्णः स्वरान्तरे वर्त्तमानः पूर्वस्य वा स्वरस्याङ्गं भवति । परस्य वा । यथा कृत्वा रथमि-

ति द्वौ तकारौ वकारश्च संयोगः । तत्र क्रमजः प्रथमस्तकारः पूर्वस्याङ्गं तस्य चोदात्तत्वादुदात्तवच्छ्रूयते । द्वितीयः संयोगादिः पूर्वस्य चोदात्तस्य स्वरस्याङ्गमुत्तरस्य चानुदात्तस्वरस्याङ्गमुदात्तानुदात्तवच्छ्रूयत इत्यर्थः । वकारो द्वितीयस्वरस्याङ्गं तस्य चानुदात्तत्वादनुदात्तवच्छ्रूयते । तथा अग्निमीळे इति द्वौ गकारौ नकारश्च संयोगः तत्र प्रथमो गकारः क्रमजः पूर्वस्य स्वरस्याङ्गं तस्य चोदात्तवच्छ्रूयते । द्वितीयो गकारः संयोगादिः स यमीभूतः पूर्वस्य वा स्वरस्याङ्गं परस्य वा उदात्तसञ्ज्ञितस्य उदात्तानुदात्तवच्छ्रूयते । ~~द्वितीयो गकारः संयोगादिः स यमीभूतः पूर्वस्य वा स्वरस्याङ्गं परस्य वा उदात्तसञ्ज्ञितस्य उदात्तानुदात्तवच्छ्रूयते~~ । नकारो द्वितीयस्य स्वरस्याङ्गं तस्योदात्तत्वादुदात्तवच्छ्रूयते ॥

## चपरक्रमे द्वे ॥८॥

चकारो भिन्नक्रमः समुच्चयार्थीयः । परस्य च व्यञ्जनस्य यत्र क्रान्तिर्द्विरुक्तिस्तत्र द्वे व्यञ्जने वा पूर्वस्याङ्गं उत्तरस्य वा । यथा आवृत्तीं इमे इति, रेफः द्वौ तकारौ नकारश्च संयोगः तत्र 'स्वरभक्तिः पूर्वभागुत्तरागं' इति-स्वरभक्तिसहितो रेफः पूर्वस्य स्वरस्याङ्गं, तस्य चोदात्तत्वादुदात्तवच्छ्रूयते । क्रमजस्तकारः संयोगादिः स यमीभूतः पूर्वस्य वा स्वरस्याङ्गमुत्तरस्य वा । नकार-

स्तु उत्तरस्य स्वरस्यांगं तस्य च स्वरितत्वात्स्वरितवच्छ्रू-
यते, यथा पार्ष्ण्येति, रेफः षकारौ द्वौ, णकारो य-
कारश्च संयोगस्तत्र रेफः स्वरभक्त्या सहितः पूर्वस्व-
रस्याङ्गं तस्योदात्तत्वादुदात्तवच्छ्रूयते । षकारौ पूर्वस्य
वा स्वरस्याङ्गं उत्तरस्य वा, संयोगादिर्णकारो यका-
रश्चोत्तरस्य स्वरस्याङ्गं तस्य स्वरितत्वात्स्वरितवच्छ्-
रूयते ।

## मात्रा ह्रस्वः ॥

ह्रस्वस्वरो मात्राकालो वेदितव्य । यथा अऋइउ-
लृइति ॥

## तावदवग्रहान्तरम् ॥

अवग्रहो नानाग्रहैः समासवर्तिनोः पदयोः पृथ
क्करणं मात्राकालं भवतीत्यर्थः । पुरः । हितं । रत्नऽधा-
तमम् ॥

## द्वे दीर्घः ॥

द्विमात्राकालो दीर्घस्वरो वेदितव्यः । यथा आऋ्रू-
ऊएओऐऔइति ॥

## तिस्रः प्लुतउच्यते स्वरः ॥

स्वरसञ्ज्ञा प्लुतस्यानेन विधीयते । स च तिस्रो मा-
त्रा भवति ॥

अधः स्विदासी३दुपरि स्विदासी३त् । अर्थे प्लुतिर्भीरिव विंदती३न्तिः ॥

तिस्रो मात्राः प्लुतस्वरो भवतीति प्रतिज्ञाय अधुनोदाहरणैस्तानेव प्लुतान्दर्शयितुमाह । अधः स्विदासी३ दुपरि स्विदासीत् । नत्वाभीरिवविन्दती३। एतेषूदाहरणेषु अर्थे प्लुतिः, अर्थसमाप्तै प्लुतिः, आख्यातस्यान्ते स्वरे प्लुतिरित्यर्थः । उदाहरणैरेव त्रित्वस्य सिद्धत्वाद्यत्त्रिग्रहणं करोति तद्विषयापेक्षयैव । स प्रैषसंहिताचतु. षष्ठ्यां त्रिरेव प्लुतो भवतीति। भीरिव ग्रहणं च विशेषणग्रहणार्थं। अध उपरिशब्दौ विशेषणत्वेनोपादीयेते, किंस्विदासीदित्यत्र प्लुतिर्माभूदिति, भयं विंदति माभिद्वेत्येवमादिं निवृत्त्यर्थम् ॥

स्वरभक्तिः पूर्वभागक्षराङ्गम् ॥

ऋकारवर्णः स्वरभक्तिरुत्तरे वक्ष्यति । सा स्वरभक्तिः पूर्वं रेफं लकारं वा भजते । रेफादुत्तरा रेफसदृशी भवति। लकारादुत्तरा लकारसदृशी भवति। रेफाद्वा लकाराद्वा यस्माद्व्यञ्जनादुत्तरा भवति तत्सहिता सा पूर्वस्य स्वरस्याङ्गं भवतीत्यर्थः । यथा प्रत्यु अदर्शि आर्ष्टिषेणः । वनस्पतेशतवल्शो । नारायासो न जल्हवः । अन्वर्थसञ्ज्ञा चेयं । स्वरभक्तिः स्वरप्रकारइत्यर्थः ॥

द्राघीयसी सार्द्धमात्रा ॥

तत्र या दीर्घतरा स्वरभक्तिः साऽर्धमात्रा काला भवति । यथा प्रत्यु अदर्शि । कर्हि । वनस्पते शतवल्शो ॥

इतरे च ॥

उक्तकालेभ्यो येऽन्ये वर्णास्ते अर्धमात्राकाला भवन्ति । कादीनि व्यञ्जनान्युदाहरणम् ॥

अर्द्धोनान्या ॥

द्राघीयस्याः स्वरभक्तेर्याऽन्या स्वरभक्तिः साऽर्द्धोना भवति । पादमात्रा भवतीत्यर्थः, यथा आर्ष्टिषेणः । वर्ष्यं ॥

रक्तसञ्ज्ञोऽनुनासिकः ॥

अनुनासिको वर्णो रक्त उच्यते । यस्य वर्णस्यानुनासिकसञ्ज्ञा विहिता तस्यानेन रक्तसञ्ज्ञा विधीयते । यथा अनुनासिकोऽन्त्यः । ङञणनमाः । पूर्वस्तस्मानादनुनासिकः स्वरः । महाँ इन्द्रो नृवत् । यस्मीत्वं मांस्पचन्याः । रक्तसञ्ज्ञाप्रयोजनं 'रक्तं ह्रस्वं द्राघयन्त्युग्रशीकः' । 'रक्तो रागः समवाये स्वराणामिति' ॥

संयोगस्तु व्यञ्जनसंनिपातः ॥

व्यञ्जनयोर्मेलकः संयोगो भवति । यथा प्रप्रवृद्धिं-
इभमिषं,। संयोगसञ्ज्ञाप्रयोजनं 'स्वरानुस्वारोपहितो
द्विरुच्यते संयोगादिरिति' ॥

कण्ठ्योऽकारः ॥

इदानीं वर्णानां स्थानान्युच्यन्ते । कण्ठे भवः क-
ण्ठ्यः । कण्ठस्थानो ऽकारवर्णः प्रत्येतव्यः । 'ह्रस्वा-
देशे ह्रस्वदीर्घौ सवर्णाविति' वचनादत्राकारश्चाकारौ
गृह्येते । यथा अश्वा। स्थानकथने प्रयोजनं 'निरस्तं
स्थानकरणापकर्षे' इति ॥

प्रथमपञ्चमौ च द्वावूष्मणाम् ॥

प्रथमो हकारः पञ्चमो विसर्जनीयः एतौ चोष्मणां
मध्ये कण्ठस्थानौ वेदितव्यौ । ह । अः । द्वाविति पाद-
पूरणः । प्रथमपञ्चमाविति द्विवचनेनैव द्वित्वस्याभि-
हितत्वात् ॥

केचिदेतावुरस्यौ ॥

केचिदाचार्या एतौ हकारविसर्जनीयौ उरस्थानावि-
च्छन्ति । ह । अः ॥

ऋकारल्कारावथ षष्ठऊष्मा जि-
ह्वामूलीयाः प्रथमश्च वर्गः ॥ ४ ॥

ऋकारश्च लृकारश्च षष्ठश्चोष्मा जिह्वामूलीयः प्रथमश्च ककारादिवर्गः एते जिह्वामूलस्थाना वेदितव्याः । ऋॠऌॡᳵकखगघङ । ननु च 'धातौ स्वरः कल्पयता लृकार इति' लृकारस्य स्वरसंज्ञा कृता । 'चाक्लृपे तेन ऋषयो मनुष्या इति' प्रयोगश्च दृश्यते । लृकारस्तु चतुःषष्ठ्यां न दृश्यते । अथ किमर्थमुदाह्रियते । नैष दोषः । यथोदकाहारस्य मत्स्याहरणमविरुद्धं । यथा पुष्पाहारस्य फलाहरणमविरुद्धं, एवमेतदपि प्रसङ्गादुच्यते ॥

## तालव्यावेकारचकारवर्गाविकारैकारौ यकारः शकारः ॥

एकारश्च चवर्गश्च इकारश्च ऐकारश्च यकारश्च शकारश्च एते तालुस्थाना वेदितव्याः, एचछजझञइऐयशाः ॥

## मूर्द्धन्यौ षकारटकारवर्गौ ॥

मूर्द्धनि स्थाने षकारश्च टवर्गश्च वेदितव्यौ। षटठडढणाः ॥

## दन्तमूलीयस्तु तकारवर्गः ॥

दन्तमूलस्थानस्तकारवर्गो वेदितव्यः । तथदधनाः ॥

## सकाररेफलकाराश्च ॥

सकारादयश्च वर्णा दन्तमूलस्थाना वेदितव्याः । स-

रलाः ॥

रेफं वर्त्स्यमेके ॥

एके आचार्या रेफं वर्त्स्यमिच्छन्ति । वर्त्से भवो वर्त्स्यः । वर्त्सशब्देन दन्तमूलादुपरिष्टादुच्छूनः प्रदेश उच्यते । अवकोदन्तमूलीयैरिति दर्शनात् ॥

शेष ओष्ठ्योऽपवाद्य नासिक्यान् ॥

शेषो वर्णराशिः ओष्ठस्थानो वेदितव्यः । किमविशेषेण नेत्याह । अपवाद्य नासिक्यान् परिवर्ज्य नासिकास्थानान्वर्णानित्यर्थः, कश्च शेषः । उऊओऔपफबभमवउपध्मानीयःळ्ह इति । के ते नासिक्या इत्यस्यामपेक्षायामाह ॥

नासिक्ययमानुस्वारान् ॥

इति नासिक्याः । कंखंगंघं इति यमाः । वक्ष्यति हि 'यमः प्रकृत्यैव सदृगिति' । अं इत्यनुस्वार एते नासिक्याः ॥

इति स्थानानि ॥

अधिकरणं वर्णानां स्थानशब्देनोच्यते । इतिकरणः समाप्त्यर्थः । कंठ्योकारइत्यत आरभ्य परिभाषितं तानि स्थानानि वेदितव्यानि ॥

अथ यमोपदेशः ॥ ९ ॥

कण्ठ्योकार इत्यत आरभ्य यानि स्थानान्युक्तान्यत्र एषु स्थानेषु यमानां स्थानोपदेशः कर्तव्यः । नासिक्यास्तावत्सर्व एव यमा उक्ताः । द्वितीयं तु प्रकृत्याश्रयं यत्स्थानं तदर्थमिदमुक्तं, तच्च भवद्यथान्तरं भवति । पलिक्नीरित्यत्र ककारस्वरूपो यमः, चखनथुरित्यत्र खकारस्वरूपो यमः, अग्मतुरित्यत्र गकारस्वरूपो यमः । जघ्नुरित्यत्र घकारस्वरूपो यमः । वक्ष्यति । 'यमः प्रकृत्यैवसदृगिति' । एवं विंशतिर्यमा वर्णानां भवन्ति स्वरूपैश्चत्वार एव, तदुत्तरत्र यमलक्षणे विचारयिष्यामः । ऋकारस्य पूर्वोक्तस्थानापरितोषात्स्थानान्तरं प्रतिपादयितुमाह ॥

जिह्वामूलं तालु चाचार्य आह स्थानं ऋकारस्य तु वेदमित्रः ॥ ८ ॥

अथ स्वनं स्थानमुपसंहरन्नाह । आचार्यो वेदमित्रो जिह्वामूलं तालु च ऋकारस्य स्थानमाह । कोऽन्यथा ब्रवीति । आचार्यग्रहणं पूजार्थम् ॥

द्वयाश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यत स डकारो ळकारः ॥ १० ॥

ह्हकारतामेति स एव चास्य ढकारः

सन्नूष्मणा संप्रयुक्तः ॥
इला साळ्हा चात्र निदर्शनानि वीड्वंग इत्येतदवग्रहेण ॥ ११ ॥

स एवोक्तस्थानो डकारोऽस्य आचार्यस्य मतेन द्वयोः स्वरयोर्मध्यं प्राप्य ळकारभावं याति । किं च स एव डकारो, हकारेणोष्मणा संप्रयुक्तः, सन्, अस्यै-वाचार्यस्य मतेन, ढकारे तथा सति स एव ढकारः ळ्ह कारतां याति । अस्यार्थस्येष्टत्वात्, स्वयमेवोदाहरणा-नि दर्शयति । इळासाळ्हा चात्र यथासङ्ख्येन ळका-रळ्हकारयोरुदाहरणं । इळां देवीः, मरुद्भिरुग्रः पृत-नासुसाळ्हा । बहुवचनमत्र वक्ष्यमाणोदाहरणापेक्ष्यं । वीड्वंगइत्येतदुदाहरणमवग्रहेण सह भवति । वनस्पते वीळु । अङ्गः । स्वरयोरिति किं । वनस्पते वीड्वंगः । मीढ्वस्तोकाय तनयाय ॥ ११

न्यायैर्मिश्रानपवादान्प्रतीयात् ॥

न्याया उत्सर्गाः महाविषया विधयः । अपवादा अल्पविषया विधयः । तानुत्सर्गैर्मिश्रानेकीकृतान्प्रजा-नीयात् । अपवादविषयं मुक्त्वोत्सर्गाः प्रवर्त्तन्त इत्यर्थः । स्पर्शाः पूर्वं व्यञ्जनान्युत्तराण्यास्थापितानामवसानम् त-त्सन्धिविषयमुत्सर्गः । "घोषवत्परः प्रथमास्तृतीयानि-

त्यपवादः। एष स च स्वराश्च पूर्वे भवन्ति व्यञ्जन-मुत्तरं यदेभ्यइत्युत्सर्गः । अस्य सर्वमेवापवादमाह । सामवशादिति चैवापवादाननुलोमानामन्वक्षरसन्धीना-मपवादानिति ॥

# सर्वशास्त्रार्थं प्रतिकण्ठमुक्तम् ॥

सर्वं च तच्छास्त्रं च सर्वशास्त्रं,तस्यार्थः, तं,सर्वशास्त्रा-र्थं,उत्सर्गत्वेन पुरस्कृत्य तस्यैवापवादत्वेन प्रतिकण्ठ-मुक्तं जानीयात् । प्रतिकण्ठशब्देन निपातनमुच्यते । तद्धि कण्ठं कण्ठमिव प्रतिसंगृह्य एकैकस्यैव प्रदर्श्य-ते । नृइत्याते इत्यत्र,न्वित्या इतिप्राप्ते,चेप्रसन्धेरपवा-दो दीर्घत्वं च निपात्यते । परीतोषिञ्चतेति, इतः सि-ञ्चतेति प्राप्ते,विसर्जनीयस्य सोपधस्यौत्वं, निपात्यते । परस्य च षत्वम् ॥

# स्थानप्रश्लेषोपदेशे स्वराणां,ह्रस्वादेशे ह्रस्वदीर्घौ सवर्णौ

"कण्ठ्योकारइत्यादिस्थानोपदेशः । "समानाक्षरे स-स्थानैइत्यादिप्रश्लेषोपदेशः । एतस्मिन्नुभयरूपे स्व-राणामुपदेशे सति,यत्र ह्रस्वस्वरआदिश्यते, तत्रोभा-वपि ह्रस्वदीर्घौ सवर्णौ प्रत्येतव्यौ । "कण्ठ्योकारइत्युक्ते ह्रस्वदीर्घावपि गृह्येते । उपलक्षणार्थं चैतत् । तथा-हि । "अथ स्विदासीदित्यादीनां प्लुतानां तालुस्थानं

भवतीति । यथा "इकारोदयएकारमकारः सोदयस्तथैव्यक्तौ ह्रस्वदीर्घाविपि गृह्येते । स्थानप्रश्लेषोपदेशाद्‌तिर्कि । 'ह्रस्वपूर्वस्तु सोकारमिति' ह्रस्वएव गृह्यते ।

## असाववमिति तद्भाववमुक्तं यथान्तरम् ॥

असाविति प्रथमानिर्द्दिष्टस्य ग्रहणं, अमुमिति द्वितीयानिर्द्दिष्टस्य । यत्रासौ वर्णो अमुमित्येवं वक्ष्यति । तत्र तद्भावमुक्तं जानीयात् । तदित्यनेन द्वितीयानिर्द्दिष्टं परामृश्यते । तेन रूपेण भवनं तद्भावः स च प्रथमानिर्द्दिष्टस्य भवति । तं च तद्भावं यथान्तरं जानीयात् । यो यस्यान्तरः संनिकृष्टस्थानकरणानुप्रदानैः स तस्य भवति । यथा "समानाक्षरे सस्थाने दीर्घमेकमुभे स्वरमिति । तत्रायं । अत्रासौ अमुमिति तद्भावमुक्तमिति द्वावकारौ दीर्घमेकं स्वरमापद्यते । तच्च यथान्तरमिति कृत्वा आकारमेवापद्यते । मधु उदकं मधूदकं । अत्र असावमुमिति तद्भावमुक्तमिति, द्वावुकारौ दीर्घमेकं स्वरमापद्यते । तं च यथान्तरमिति कृत्वा ऊकारमेवापद्यते । न्यायैर्मिश्रानपवादानित्यत आरभ्य परिभाषासूत्राण्येतानि ॥

## पादवच्चैव प्रैषान् ॥

होता यक्षदग्निं समिधा सुसमिद्धेत्यादयः प्रैषास्तान्पादतुल्यलक्षणान् जानीयात् । कस्तु यक्षपदं त-

'ट्प्रैषेष्वपि भवतीत्यर्थः । तद्यथा 'नकार् अकारोपधद्-त्यनेन ककारलोपः पदाद्ग्निषु विहितः । स प्रैषेष्वपि भवति । होता यक्षदिन्द्रं हरिवा इन्द्रो धानाइति । इन्द्राग्नीच्छागस्येत्यत्र 'छकारो दीर्घेण चमेतिवर्जमि-ति वचनाच्छकारस्य द्वित्वं च न भवति ॥

## प्राक्चानार्षादितिकरणात्पदान्तांस्त-द्युक्तानाम् ॥

"पदान्तानपदादिभिः सन्दधदेति यत्सेतिसंहिता-लक्षणं वक्ष्यति । नच पदान्तपदाद्योर्लक्षणमनुक्त्वा संहितालक्षणं वेदितुं शक्यते । तत्र पदादयो ज्ञाय-न्त एव । पदान्ता अपि ये इतिकरणरहिताः । ये च सेतिकरणास्ते सन्दिह्यन्ते । अतस्तत्र लक्षणमा-ह ॥ प्राक्पूर्वेण, अनार्षादितिकरणात् । अवैदिकादि-तिकरणात् पदान्तान्जानीयात् । कथंभूतानां । तद्यु-क्तानां तेनानार्षेणेति करणेन युक्तानां सम्बद्धानां । प्रा तरिति । सोमां देवं, भारितिभाः । अत्र विसर्जनी-यः पदान्तः न तु रेफः । "ऊष्मान्तस्थसोष्मचकारवर्गाणां तं यान्त्यन्यत्र विसर्जनीयादिति वचनात् । अनार्षा-दितिकरणादिति किं, यः प्राणतीति ॥

## तेन येऽसंहितानाम् ॥

" यत्रेतिकरणो विद्यते न तु पदान्तेन संसृष्टस्तत्रायं

विभिरुच्यते । तेनार्षेणेतिकरणेनासंहितानामसम्बद्धानां पदानां ये पदान्तास्तएव पदान्ता वेदितव्याः । इन्द्राग्नी इति । अस्मे इति । इन्द्राग्नीइत्यपादियं । प्रातरितिसोमं । इत्येवं संहिता मा भूदिति आरम्भः ॥

सामवशा इति चैवापवादान् कुर्वंति ये सम्पदं पादवृत्तयोः ॥

सामवशान् सन्धीनुपरिष्टाद्वक्ष्यति । यथादिष्टं सामवशः सन्धिरिति । तान् सामवशान् सन्धीननुलोमानामन्वक्षरसन्धीनामपवादभूतान् जानीयात् । अन्वर्थसञ्ज्ञा चेयं । समस्य भावः सामं । "प्राणभृज्जातिवयो वचनोद्गात्रादिभ्यो ऽञिति" उद्गात्रादित्वादञ् । छन्दसां समत्वं वशः प्रयोजनं येषामन्वक्षरसन्धीनां ते सामवशाः सन्धयः छन्दसां संपत्कारा इत्यर्थः । अतएवमाह । कुर्वंति ये सम्पदं पादवृत्तयोः । कतरौ तौ पादस्य वृत्तौ गुर्वक्षरप्रपञ्चो लघ्वक्षरप्रपञ्चश्च । ताभ्यां च प्रपञ्चाभ्यां गायत्र्यादयः पादा वर्तन्ते । अतः पदस्य तौ वृत्तौ । पादवृत्तस्य सम्पदं कुर्वंति । नार्थांतरं कुर्वन्ति । "मक्षूमक्षूणां हि गोजितो न" इत्युदाहरणानि ॥

अप्रत्याम्नाये पदवच्च पदयान् ॥

पदान्तादिष्वेव विकारशास्त्रमिति वक्ष्यति । ननु न-

त्प्रैषेष्वपि भवतीत्यर्थः । तद्यथा नकार अकारोपधइ-
त्यनेन ककारलोपः पदष्टमिषु विहितः । स प्रैषेष्वपि
भवति । होता यक्षदिन्द्रं हरिवा इन्द्रो धानाइति ।
इन्द्राग्नीच्छागस्येत्यत्र छकारो दीर्घेच्च चमेतिवर्जमि-
ति वचनाच्छकारस्य द्वित्वं च न भवति ॥

## प्राक्चानार्षादितिकरणात्पदान्तांस्त-
## द्युक्तानाम् ॥

"पदान्तान्पदादिभिः सन्दधदेति यत्सेतिसंहिता-
लक्षणं वक्ष्यति । नच पदान्तपदाद्योर्लक्षणमनुक्त्वा
संहितालक्षणं वेदितुं शक्यते । तत्र पदादयो ज्ञाय-
न्त एव । पदान्ता अपि ये इतिकरणरहिताः । ये
पुन सेतिकरणास्ते सन्दिह्यन्ते । अतस्तत्र लक्षणमा-
ह ॥ प्राक्पूर्वेण अनार्षादितिकरणात् । अवैदिकादि-
तिकरणात् पदान्ताञ्जानीयात् । कथंभूतानां । तद्यु-
क्तानां तेनानार्षेणेति करणेन युक्तानां सम्बद्धानां । प्रा
तरिति । सोमं देवं, भारितिभाः । अत्र विसर्जनी-
यः पदान्तः न तु रेफः।"ऊष्मान्तस्थसोष्मचकारवर्गाणां
तं यान्त्यन्यत्र विसर्जनीयादिति वचनात् । अनार्षा-
दितिकरणादिति किं, यः प्राणिति ॥

## तेन येऽसंहितानाम् ॥

यत्रेतिकरणो विद्यते न तु पदान्तेन संसृष्टस्तत्रायं

विधिरुच्यते । तेनार्षेणेतिकरणेनासंहितानामसम्बद्धानां पदानां ये पदान्तास्तएव पदान्ता वेदितव्याः । इन्द्राग्नी इति । अस्मे इति । इन्द्राग्नीइत्यपादियं । प्रातरितिसोमं । इत्येवं संहिता मा भूदिति आरम्भः ॥

सामवशा इति चैवापवादान् कुर्वन्ति ये सम्पदं पादवृत्तयोः ॥

सामवशान् सन्धीनुपरिष्टाद्वक्ष्यति । यथादिष्टं सामवशाः समन्विरिति । तान् सामवशान् सन्धीननुलोमानामन्वक्षरसन्धीनामपवादभूतान् जानीयात् । अन्वर्थसञ्ज्ञा चेयं । समस्य भावः सामं । "प्राणभृज्जातिवयो वचनोद्गात्रादिभ्यो ऽञिति" उद्गात्रादित्वादञ् । छन्दसां समत्वं वशः प्रयोजनं येषामन्वक्षरसन्धीनां ते सामवशाः सन्धयः छन्दसां संपत्करा इत्यर्थः । अतएवमाह । कुर्वन्ति ये सम्पदं पादवृत्तयोः । कतरौ तौ पादस्य वृत्तौ गुर्वक्षरप्रपञ्चो लघ्वक्षरप्रपञ्चश्च । ताभ्यां च प्रपञ्चाभ्यां गायत्र्यादयः पादा वर्तन्ते । अतः पदस्य तौ वृत्तौ । पादवृत्तस्य सम्पदं कुर्वन्ति । नार्थान्तरं कुर्वन्ति । "मक्षूमक्षूकृणुहि गोजितो न" इत्युदाहरणानि ॥

अप्रत्याम्नाये पदशश्च पदशान् ॥

पदान्तादिष्वेव विकारशास्त्रमिति वक्ष्यति । ननु व-

त्यग्रेषु प्राप्नोति । अतस्तत्प्रापणार्थमाह । प्रत्याम्नायः पुनर्वचनं । असतिपुनर्वचने पदवत्पद्यान् जानीयात् । त्वा ऊतासः, त्वोतासोन्यवंता । 'उकारोदयऊकारमिति पदसन्धिषु वक्ष्यति । पद्येष्वपि तद्भवति । अप्रत्याम्नायइतिकिं । वसोरिन्द्र वसुपतिमिति षष्ठं चाष्टाक्षरमिति सुतिः प्राप्ता । विग्रहइति पुनर्वचनान्न भवति । किमेतावानेवापवादो नेत्याह ॥

# ऋते न तोपाचरितक्रमस्वरान् ॥

ऋतेविहाय परित्यज्य, नतं, उपाचरितं, क्रमं, स्वरञ्च । अन्यत्र पदवत्पद्यान् जानीयात् । इह तु पदस्य यत्कार्यं विधीयते तत्पद्यस्य न भवति । न ते"सुदीतिभिः, सुदीदि हि," पदकार्यं पद्येऽपि स्यात्, भिः शब्देनावग्रहत्वरेणोपहितत्वादवग्रहत्वरेणेति सुशब्दस्य षत्वं स्यात् ।"यदहं गोपतिः स्यां" यदि पदकार्यं पद्ये स्यात्, अत्रापि 'पदादयस्य स्थितौतिपतिशब्देनावग्रहत्वरेणोपहितत्वात् स्थितिपदादेः षत्वं स्यात् । णत्वे तूदाहरणं नास्ति ।"उपाध्यायस्तु पितृयाणं" इत्युदाहरति । पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य 'पदवत्पद्यानिति' पदभावादभिन्नपदत्वान्नतिर्न प्राप्नोति । ततो ऋते न तइत्यनेन प्राप्यतइत्यनेनाभिप्रायेण । एतस्मात् ॥ यत्र च सामान्येन पदस्य कार्यं विधीयते,

तत्र पदवत्पद्याऽनित्यनेन पद्येष्वपि प्राप्यते, तत्प्राप्तं 'स-हते मत' इत्यनेन पुनर्निषिध्यते । सोऽस्यापवादसूत्रस्य विषयः । अत्र तु स्वयमेव सूत्रकारोऽवोचत् । "ऋकार-रेफषकारानकारसमानपदेऽवगृह्ये नमन्ति । अन्तः पदस्थमिति । अतएतदमदुदाहरणं । उपाचरितः । पथस्पथः परिपतिं । अत्रापि पदकार्यं यदि पद्येषु स्यात्पथस्पथ इत्यत्रोपाचरितो न स्यात् भिन्नपदत्वात् । अन्तः पदं तु सर्वत्रैवोपाचरित इत्यनेनान्तःपदमुपा-चरितो विधीयते । अतः पदवद्भावः उपधानामुपा-चरिते निषिध्यते । निरवकाशोऽयमन्तः पादविधिरि-ति चेन्न । अञ्जस्या इव । दुष्प्राप्यो वहन्ता । त्वं हि रा-धस्पत इत्येवमादिषु समापाद्योपाचरितेषु स्यात् । अत्र हि विक्रान्तसन्धिरेव भवति । न तु खण्डनं । क्रमः । सुतसोमा अहर्विदः । अत्र यदि पदवत्पद्याः स्युः "क्रमो-द्वाभ्यामभिक्रम्येति" द्वाभ्यां पदाभ्यां स्यात् । स्वरः । पुरो-हितमितिपुरः । हितम् । अत्र पुरः शब्दस्यान्तोदात्तस्य हितशब्दोऽनुदात्तो मात्राकालव्यवहितः । तत्र पदवद्भा-वे सति पूर्वमन्तोदात्तंपद्यमनपेक्ष्यैव हितशब्दोऽनुदात्तः स्यादतः स्वरग्रहणं। ननु यथा 'मेवीयमानानामि'त्यने-नावग्रहस्य स्वरं वक्ष्यति एवं तर्हि स्पष्टार्थं स्वरग्रहणम् ॥

अष्टावाद्यानवसानेऽप्रगृह्यानाचा-

**याँ आहुरनुनासिकान्स्वरान् ॥**

अष्टौ स्वरानाद्यानकारादीनाचार्या अप्रगृह्यान् अवसाने अनुनासिकान् ब्रुवन्ति । ईङ्योनॄतनैरत । इन्द्रवो वामुशन्ति । आद्यानितिकिं । अग्ने । शतक्रतो । अवसानइति किं । न निमिषति सुरणः । अप्रगृह्यानिति किं । सुतानां वाजिनीवसू ॥

**तत्त्रिमात्रे शाकलादर्शयन्त्याचार्य-शास्त्रापरिलोपहेतवः ॥**

तदेतदनुनासिक्यं त्रिमात्रे स्वरे शाकल्यस्यर्षेर्मतानुसारिणो दर्शयन्ति । अत्र हेतुमाह । आचार्यशास्त्रमनेनैकेन प्लुतेनानुनासिकेन सता कस्माकमपरिलुप्तं यथा स्यादिति । नत्वाभीरिव विंदतीँ३ ॥

**ऋकारादयो दश नामिनः स्वराः ॥**

ऋकारादौ कृत्वा दश स्वरा नामिसञ्ज्ञा वेदितव्याः । नमयन्ति दन्त्यं सन्तं मूर्द्धन्यं कुर्वन्तीति नामिनः । ऋ ॠ इ ई उ ऊ ए ऐ ओ औ इति । नामिसञ्ज्ञाप्रयोजनं 'अन्तः पादं नाम्युपधः सकार' इति ॥

**पूर्वो नन्ता नतिषु नम्यमुत्तरम् ॥**

ऋकाररेफषकारा नकारं नमन्तीति वक्ष्यति तत्र

पूर्वं ऋकारादयं उत्तरे वा अतस्तद्व्यवस्थार्थमाह । पूर्वोऽन्तानतिषु नव्यमुत्तरं । नतिषु वर्तमानानां वर्णा-नां पूर्वीनन्तावर्णो भवति । नव्यं व्यञ्जनमुत्तरं भवति । यथा मनुप्रविद्वान्पिपद्रयाणां । पूर्वोऽन्तेति किं, अवोचम-घयथ्यं नवाहणां । ऋकारात्पूर्वस्य नकारस्य नतिर्मा भूदि-ति । नव्यमुत्तरमितिकिं । ऋकारादुत्तरस्य वाहनं न-कारस्य नतिर्यथा स्यात् इति ॥

सहोपधोऽरिफितएकवर्णवद्विसर्जनी यः स्वरघोषवत्परः ॥

अरिफितोविसर्जनीय उपधासहित एकवर्णवद्व-गन्तव्यः । स्वरपरो घोषवत्परश्च सन् । स्वरपरः । य इ न्द्र सोमपातमः । 'ह्रस्वपूर्वस्तु ओकारमिति' सोपध-स्याकारः । घोषवत्परः । नमो भरन्त एमसि । ओका-रं, ह्रस्वपूर्वइति सोपधस्योकारः । अरिफितइति किं । पुनर्द्दोर्देवी पुनरन्तरिक्षं ॥ स्वरघोषवत्परइति किं । यस्तिग्मशृङ्गो वृषभो न भीमः ॥

ओकारआमन्त्रितजः प्रगृह्यः ॥

ओकार आमन्त्रिताज्जातः प्रगृह्यसञ्ज्ञो भवति । इन्द्रो इति । विष्णो इति । प्रगृह्यसञ्ज्ञाप्रयोजनं । 'प्रकृत्यैतिकरणादौ प्रगृह्याः' इति । एतच्च सूत्रं स्वार्थ-

मभिधायोत्तरसूत्रेषु प्रगृह्यसंज्ञामधिकरोति । अतो-ऽधिकारसूत्रमेवैतत् । ननु अधिकारसूत्रं परार्थं भवति । एतत्तु स्वार्थमभिधाय परार्थं भवति । अथ कथमधिकारसूत्रमेतदिति । नैष दोषो गुणोऽयं शास्त्रकृतो यदनेनैव सूत्रेण स्वार्थमभिधत्ते अधिकारं च करोति । अतोऽधिकारसूत्रमेवैतदिति । "आह च, उभयार्थं परार्थं वा सूत्रं स्यादाधिकारिकम् । संज्ञासूत्रंपरार्थं स्यात्पारिभाषिकमेव च" । "परिभाषां च सञ्ज्ञां च कार्यकालं प्रचक्षते । अधिकारः कृतो यत्र ततो-ऽन्यत्र न गच्छति" ॥

## पदं चान्यः ॥

आमन्त्रितसञ्ज्ञादोकारादन्यओकारः पदं ओइति, सोऽपि प्रगृह्यसञ्ज्ञो भवति । ओइवर्तते रथ्येव चक्रा ॥

## अपूर्वपदान्तगश्च ॥

पूर्वपदान्तगस्य यओकारो न भवति स प्रगृह्यसञ्ज्ञो भवति । पूर्वपदोत्तरपदव्यपदेशस्य समासएव भवत्यतोऽयमर्थः । पूर्वपदस्योकारस्य प्रगृह्यसञ्ज्ञा न भवति अन्यत्र सर्वत्र भवति । यौस्रोनुदाघृविभरध्यै । एषोउषा अपूर्व्या । अपूर्वपदान्तग इतिकिं । यदङ्ग गोपतिः स्याम् । कुवित्सु नो गविष्टये । नन्वनेनैवसूत्रेणाघ-

अनयोः सूत्रयोर्विषयः सूचितः । एवंतद्ध्रस्वस्वनाभ्यां सूत्राभ्यां अस्यैव सूत्रस्य प्रपञ्चः कृतः, ते वैविध्यः सं-गृहीतव्या येषां लक्षणं प्रपञ्चश्च ॥

षष्ठादयश्च द्विवचोन्तभाजस्त्रयो दी-र्घाः ॥

षष्ठादयश्च त्रयो दीर्घाः स्वरा द्विवचनाभिधायिनः प्रगृह्यसंज्ञा भवन्ति । इन्द्राबृहस्पती वयं । इन्द्रवायू इमे सुताः । इ विरूपे चरतः स्वर्थे । द्विवचोन्तभाज इति किम् । अग्नऽआयाहि वीतये ॥

साप्तमिकौ च पूर्वौ ॥

एतेषामेव त्रयाणां वर्णानां मध्ये यौ पूर्वौ दीर्घौ स्वरौ तौ प्रगृह्यसंज्ञौ भवतः सप्तम्यर्थाभिधायिनौ चे-द्भवतः । हतिं न शुष्कं सरसी इति । सरस्यामिति प्राप्ते छान्दसः सप्तम्यर्थ ईकारः । सोममिन्द्र चमू सु-तम् । चम्वामिति प्राप्ते सप्तम्यर्थ ऊकारः । स्वायां तनू ऋत्व्ये । सोमो गौरी अधिश्रितः । क्षोणीं राये सुभरं वेदी । साप्तमिकाविति किं । पीत्वी सोमस्य वावृधे ॥

अस्मे युष्मे त्वे अमी च प्रगृह्याः ॥

अस्मे युष्मे त्वे । अमीत्येते च ईकारैकाराः प्रगृ-

ह्यसञ्ज्ञा भवन्ति । अस्मे । अस्मे आवहतं रयिं । युष्मे । न युष्मे वाजबन्धवः । त्वे । त्वे इदूयते हविः । अमी । अमी ये पञ्चोक्षणः । प्रगृह्यसञ्ज्ञाधिकारे पुनः प्रगृह्यग्रहणं ईकारस्य एकारस्य च सप्तम्यर्थनिवृत्त्यर्थम् ॥

## उपोत्तमं नानुदात्तं न पद्यम्

अस्मे युष्मे इत्यादीनां यदुत्तमस्य पदस्य समीपे पदं तदनुदात्तं वा पद्यं सत्प्रगृह्यसञ्ज्ञं न भवति । ओष्ठ बह्माणो विचरन्त्य त्वे । त्वं तमग्ने अमृतत्व उत्तमे ॥

## उकारश्चेतिकरणेन युक्तो रक्तोऽपृक्तो द्राघितः शाकलेन ॥

अपृक्तश्च उकारः प्रगृह्यसञ्ज्ञो भवति स च इतिकरणेन युक्तः । रक्तोऽनुनासिको दीर्घश्च भवति । शाकलेन मतेन । ऊँ इति । अपृक्तइति किं स्वितिसु । इतिकरणेन युक्तइति युक्तवचनमितिकरणात्परस्याप्युकारस्यदीर्घत्वं रक्तत्वं च भवति । ऊँ इत्यूँ । आर्ष्यां च संहितायां इतिकरणायोगात् । रक्तत्वं दीर्घत्वं प्रगृह्यसञ्ज्ञत्वं च न भवति । अवेदिन्द्रजल्गुलः ॥

## ऊष्मा रेफी पञ्चमो नामिपूर्वः ॥

पञ्चमः ऊष्मा विसर्जनीयः । नामिपूर्वः सन्रेफि-

सञ्ज्ञो भवति । अग्निरस्मि जन्मना । पूर्वीरहंशरदः । रेफिसञ्ज्ञाप्रयोजनं 'सर्वोपधस्तु स्वरघोषवत्परो रेफं रेफी' ॥

## मह्रोऽयो वर्जमितरो यथोक्तम्

महः अयः इत्येते पदे वर्जयित्वा उक्तादन्य इतरः अनामिपूर्वो यः पञ्चम ऊष्मा विसर्जनीयः स यथोक्तं वक्ष्यमाणं तथा रेफिसञ्ज्ञो भविष्यतीत्येतदधिकृतं वेदितव्यं । अवर्मह इन्द्र । अयस्कः । इत्येते वर्जयित्वा । ननु कस्मादनयोः पदयोः पुरस्तादपवादः क्रियते, एते हि पदे वक्ष्यमाणानां पदानां विशेषणाभिप्रायेण पठ्यते । नैतत् । यथाभूतं च इतरेषां विशेष्यभूतानां पदानां रूपं तथाभूतमनयोरपि पदयोः । तेषामनामिपूर्वो विसर्जनीयः । यथा च तेषां तथा अनयोरपि पदयोः अवर्मह इत्यतो निपातनाशंका न कर्तव्येति । एवं तर्हि आचार्य किमर्थं पुरस्तादपवादं करोति । अत्र ब्रूमः । यदेवमनेन प्रकारेण दुःप्रतिपाद्यत्वमस्यार्थस्यायं तावत्प्रधानभूतो दोषः । [illegible] ग्रन्थगौरवभयाद्दुष्टशिष्येण, 'तन्नोदितं मह्रोऽयो वर्जमित्यनयोः पदयोः पुरस्तादपवादो न कर्त्तव्यइति । तत्र ग्रन्थगौरवमनेन प्रकारेण प्रतिपादयतः सुतरामपरिहृतमेवास्ते । अतोऽयं लाघविकमाचार्यः पुरस्तादपवादं चः

गो । मनोऽयोर्जनिति ॥

## अन्तोदात्तमन्तः ॥

अन्तरित्येतत्पदं अन्तोदात्तं सद्रेफिसञ्ज्ञं भवति । अन्तरिक्षमिति तं जने । अन्तोदात्तमितिकिं । इयं वेदिः परोऽन्तः पृथिव्याः ॥

## अन्ता विपर्यये ॥

अन्तारित्येतत्पदं अधस्तनस्य स्वरविपर्यये सति रेफिसञ्ज्ञं भवति । अन्तोदात्तं वाऽधस्तनपदस्य स्वरविपर्ययेऽनुदात्तं वाऽऽद्युदात्तं वा भवति । अनुदात्तम् । अनूप गोमान्गोऽभिरक्षः । आद्युदात्तं अन्तारति देवम् । विपर्यय इति किं । न्यग्ना अन्ता अनुदीव आमन् ॥

## स्पर्शे चोषः प्रत्यये पूर्वपद्यः ॥

उषरित्ययं पूर्वपदः सन् स्पर्शे प्रत्यये रेफिसञ्ज्ञो भवति । उषर्बुधआवह । उषर्भुद्भिरतिथिः । स्पर्श इति किं । उषउषो हि वसो । पूर्वपद इति किं । उषो मघोनि । प्रातः प्रातरित्येतत्पदं रिफितसञ्ज्ञं भवति । प्रातरग्निं प्रातरिन्द्रं हवामहे ॥

## देवं भाः ॥

भारित्येतत्पदं रिफितसञ्ज्ञं भवति देवमित्येतत्पदं पूर्वं चेत् । देवं भाः परावतः । देवमितिकिं । बृहद्-

भा बिभ्रती हविः ॥

वधंराद्युदात्तम् ॥

वधरित्येतत्पदं आद्युदात्तं चेद्रिङ्गितमङ्गं भवति। वधर्जवान तविषीभिरिन्द्रः । आद्युदात्तमिति किं । आरे गोहा नृहा वधो वो अस्तु ॥

करनुदात्तम् ॥

करित्येतत्पदं रिङ्गितमङ्गं भवति अनुदात्तं चेत् । निकाव्या वेधसः शश्वतस्कः । अनुदात्तमिति किं । को अघनर्यो देवकामः ॥

अविभः ॥

अविभरित्येतत्पदं रिङ्गितमङ्गं भवति । पितेव पुत्रमविभरुपस्थे ॥

तदादः ॥

आदरित्येतत्पदं तदित्येतत्पूर्वं चेद्रिङ्गितमङ्गं भवति । दिवस्परि सुग्रथितं तदादः । तदेति किं । अदो यद्दारु प्लवते ॥

स्तः प्रागाथम् ॥

स्तरित्येतत्पदं प्रागाथं चेद्रिङ्गितमङ्गं भवति । मा नस्तरभिमातये । प्रागाथमिति किं । नास्य ते म-

ह्मिमानं परिष्टः ॥

एतशे कः ॥

करित्येतत्पदं एतशे पूर्वं चेद्रिफितसञ्ज्ञं भवति। पुरः सतीरुपरा एत शेकः । एतशइति किं। कोअद्य-नर्यः । करनुदात्तमुत्तमुदात्तार्थं आरम्भः ॥

दिवे कः ॥

करित्येतत्पदं रिफितसञ्ज्ञं भवति दिवे पूर्वं चेत्। मह्रे यत्पित्रं ईरसं दिवे कः । दिवइति किं। को अ-द्य ॥ उदात्तार्थमारम्भः ॥

अयस्कः ॥

करित्येतत्पदं रिफितसञ्ज्ञं भवति अयइत्येतत्पू-र्वं चेत् । इन्द्राय योनिः प्रदिवोअयस्कः । अयइति किं। कोअस्त्राता। उदात्तार्थं आरम्भः ॥

अत्साः ॥

अत्सारित्येतत्पदं रिफितसञ्ज्ञं भवति । लोपाशः सिंहं प्रत्यञ्चं मत्साः ॥

अविपूर्वमस्तः ॥

अस्तरित्येतत्पदं रिफितसंज्ञं भवति विपूर्वं न चे-त् । वज्रो गा हि इच्छा इचमस्तः । अविपूर्वमिति किं। पुरुत्राष्टचो अस्मद्व्यस्तः ॥

स्वः स्वरितम् ॥

स्वरित्येतत्पदं रिफितमङ्कं भवति स्वरितं चेत् ॥ स्वर्यैर्हदि सुहवीकमर्कैः । स्वरितमिति किं । यो नः स्वोअरणा ॥

न समासाङ्गमुत्तरम् ॥

स्वरित्येतत्पदं समासस्योत्तराङ्गं सद्रिफितमङ्कं न भवति । यः पुष्पिणीश्च प्रस्वश्च धर्मणा । उत्तराङ्गमिति किं । मादयस्व स्वर्णरे ॥

स्वरादेशोऽपूर्वपदेषु ॥

योऽयं स्वरादेशः अन्तोदात्तमन्तर्बधरात्युदात्तं स्वः स्वरितं इत्यादेशः स अपूर्वपदेष्विति । पूर्वपदेषु न भवत्येतदुक्तं भवति । यदि पूर्वपदानि भवन्ति तदान्यस्वरानुदात्तादियुक्तान्यपि रिफितान्येव भवन्ति । अन्तर्वावत् क्षयं दधे । वर्धयंती वज्रभ्यः । स्वर्जिदभिजित्पवते ॥

अवर्महः ॥ १ ॥

अवरित्येतत्पदं रिफितसङ्कं भवति । मह इत्येतस्मात्पदात्पूर्वं चेत् । अवर्मह इन्द्रदादहि । मह इति किं । अवो बभूथ शतमूते ॥

अनर्द्धर्चान्ते स्वरघोषवत्परमूधः ॥ १८ ॥

ऊधरित्येतत्पदं स्वरघोषवत्परं रिफितसञ्ज्ञं भवति । ऊधर्चीनं न येत् । प्रह्लष्णाय कस्मादपिन्वतो घर्न्हितं । ऊधर्गोनां स्वसापितॄनाम् । अनूधर्चीं तदिति किं । सख्यच्छुक्रां दुदुहे पृश्निरूधः । स्वरघोषवत्परमिति किं । पृथिव्यामतिषितं य ऊधः ॥

न रेफोऽरूपासोऽतृणन्मही ॥

रेफादौ पदे परभूते अरूपास अतृणन्मही इत्येतेषु परभूतेषु च ऊधः शब्दो रिफितसञ्ज्ञो न भवति । रेफे । ममृवो रोमशं हतः । विहृतूधो अरूपासो अस्य । शुच्यूधो अतृणन्नगवाः पृश्निर्यदूधो महीजभार ॥

वरवरावरिति चैकपादे व्यपपूर्वाण्यसमासांगयोगः ॥

वः अवः आवः इत्येतानि पदानि रिफितसञ्ज्ञानि भवन्ति । कथंभूतानीत्यत आह । एकस्मिन्पादे यदि वि अप इत्येवं पूर्वाणि भवन्ति । यदि च उभयोरपि समासाङ्गयोगो न भवति । यदि च वः अवः आवः इत्येतानि पदानि समासाङ्गभूतानि न भवन्ति । विअपि इत्येते च पदे यदि समासांगभूते न भवत इत्यर्थः । वः । गृणानो अङ्गिरोभिर्दस्म विवरुषसा । योगा उदाजदपद्विघलं वः । अव । विज्योतिषा सवहत्वत्तमोऽवः ।

अपावरद्दिवो विलं । आवः । व्यावद्दैव्यामतिं । अपद्दूह-
स्तमं आवरजुष्टं । एकपादइति किं । अभैक्षापतदुच्छ्र-
त्वनेह सोवः । व्यपपूर्वाणीति किं । को वस्त्राता ।
मा इचोणामवोऽस्तु । आवो यदस्युहत्येकुत्सपुत्रं । अ-
समासांगइति किं । अपावरद्दिवो विलं । असमासां-
गयोगइत्युभयार्थं कस्मात् । विद्युन्नतव्यौ मरुतो र-
थेषु वः ॥

पथ्यामघोनीदिवि चक्षसा मदेपूर्वो-
र्चिषातीतृषामोत्तरेषु न ॥२६॥

पथ्या । मघोनी । दिवि । चक्षसा । मदे । पूर्वः
अर्चिषा । अतीतृषाम । इत्येतेषु परभूतेषु, वः अवः, आ-
वइत्येतानि पदानि रिफितसञ्ज्ञानि न भवन्ति । प-
थ्यां । व्युषाआवः, पथ्याइ जनानां । मघोनी । मघो
अवेद्ध्यावोमघोनी । दिवि । व्युषाआवो दिवि जा
ऋतेन । चक्षसा । विषदावश्चक्षसा सूर्यस्य । मदे
मन्नाय सोर्णवर्हिषे दिवोमदे । पूर्वः, उतान्योअस्म-
द्यजते विचावऽपूर्वः । अर्चिषा । व्युषाश्चन्द्रामघावो-
अर्चिषा । अतीतृषाममापाभृतमवोतीतृषाम । एते-
षूत्तरेषु किं । विसूर्यो रोदसी चक्षसावः ॥

होतः सनितः पोतर्नेष्टः सोतः सवि-

तर्नैतस्त्वष्टः॥ मातर्जनितर्भ्रातस्त्रातर-
स्थातर्जरितर्भ्रातर्धर्तः ॥ २७ ॥ १८० ॥

होतः । जनितरित्यादीनि षोडशपदानि रिफित-
सञ्ज्ञकानि भवन्ति । होतः, यथा होतर्मनुषोदेवता-
तः। सुसनितस्त्वग्रः। पोतर्यजेति । प्रैषिकं ग्रावो नेष्टः
पिबऽऋतुना, ज्येष्ठेन सोतरिन्द्राय, विश्वानि देव सवि-
तः । ते ते देव नेतः । शिवस्त्वष्टरिहागहि । पितर्मात-
र्यदिहोप । बोधि प्रयन्तर्जनितर्वसूनां । इन्द्रभ्रातरुभय-
त्राते। अर्थं ओजिष्ठत्रातरवित । स्थातर्हरीणां ।
प्रबोधय जरितर्जारमिन्द्रं । धातर्विधातः कलशाँ अ-
भक्षयं । धनानां धर्त्तःस्वसा ॥

जामातर्दुहितर्दर्त्तः प्रशास्तरावितः पि-
तः॥ दोषावस्तरवस्यर्त्तःप्रयन्तश्चेदग्य-
मुत्तमम् ॥ २८ ॥

जामातः प्रभृति प्रयन्तः पर्यंतान्येतानि पदानि रि-
फितसञ्ज्ञानि भवन्ति । किमविशेषेण सर्वाणि पदानि
नेत्याह । इत्यग्रशब्देनसावग्रहं पदमुच्यते । उत्तमं प-
दं सावग्रहं भवति तदानीं रिफितसञ्ज्ञं भवति ।
त्वष्टुर्जामातरद्भुत । प्रावाद्य दुहितर्दिवः । पुरान्दर्त्तः

प्रायुभिः। प्रयास्तर्यज्ञेति प्रैषिकं॥ ओजिष्ठ चातरवितः। पितर्मौतिर्यदिज्ञोप। दोषावस्तर्धियावयं। अवस्मर्त्तर-धिवक्तारमस्मयु। बोधि प्रयन्तर्जनितर्वसूनां। इङ्ग्यमुत्तमभिति किं। उपप्रयन्तो अध्वरम्। प्रयन्तपदमत्र ना-वगृह्यते अतो रिफितं न॥

दोधर्भा अवरीवः दर्द दर्द्दर्दर्द्रजागर्जा-गः॥ वाःपुनः पुनरस्य कस्यः सस्वरह्नः सनुतःसवरस्वाः॥ २९॥ ८२॥

दोधः, अभाः, अवरीवः, अदर्दः, दर्दः, अदर्दः, अजा-गः, अजीगः, वाः, अपुनः, पुनः, अस्यः, अकः, स्यः, सस्वः, अ-हः, सनुतः, सवः, अस्वाः, । इत्येतानि रिफितसञ्ज्ञा-नि भवन्ति। आसां सुपक्वं शच्यानि दोधः। इषमूर्ज सुक्षिति विश्वमाभाः। किमावरीवः कुहकस्य। अद-र्दरुत्समसृजः। अपोपदर्द्रि पुरुहूत दर्दः। उत्संहा-याह्याद्रुत्यृतं रदर्दः। अजागरस्वपितृदेवः। आदिद्ग्र-तिष्ठ ओषधीरजीगः। वाशीमराद्कष्टकृणोति। अनानु-दात्यमपुनश्चकार। पुनरामाः पुनर्नव। महोरायो चितयन्त चिमस्यः। अवद्यमिव मन्यमानागुहाकः। शू-रो न युध्यन्नवनो निदस्यः। सस्वश्चिद्धि तन्वः। अहश्च कृष्णमहः। सनुतर्युष्हि तन्ततः। सवर्दुघायाः पयः। आ

यस्ते योनिं कृतवन्तमस्थाः ॥

## इति श्रीपार्षदव्याख्यायां वज्रटसुतोऽव्वटकृतौ परिभाषाप्रथमं पटलम् ।

## संहिता पदप्रकृतिः ॥१॥

संहिता पदप्रकृतिरित्येतदधिकृतं वेदितव्यम् । आसीमापटलात् । पदानि प्रकृतिभूतानि यस्याः संहितायाः सा पदप्रकृतिः संहिताऽत्र विकारः । तथा हि । षत्वणत्वादयो विकाराः संहिताया एव भवन्ति । प्रकृतिभूतत्वाच्च पदानां सिद्धत्वम् ॥

## पदान्तान्पदादिभिः सन्दधदेति यत्सा ॥ कालाव्यवायेन ॥२॥

संहितायाः पदानि प्रकृतिभूतानीत्युक्तं । न तु संहितायाः स्वरूपं प्रतिपादितमित्यत आह । पदान्तान्पदादिभिर्यदेकीकुर्वन्नेति ग्रन्थमनुसरति सा संहितेति । कालाव्यवायेन तु पदानां कालक्रमानुपादानपरिपाट्या । सा च द्विविधा संहिता । आर्षी क्रमसंहिता च । आर्षी, अयं देवाय जन्मने । क्रमसंहिता पर्जन्याय प्रगायत । गायत दिवः । संहितासञ्ज्ञाप्रयोजनं 'ऋतेन च हूपदसंहितास्थौ' ॥

## स्वरान्तरं तु विवृत्तिः ॥ ८ ॥

अस्यामेव संहितायां, यत्स्वरयोरन्तरं वक्ष्यति । त द्विवृत्तिसञ्ज्ञं स्यात् । नऽइत्याते पूर्वथा च । विवृत्ति-सञ्ज्ञाप्रयोजनं "यतो दीर्घस्ततो दीर्घा विवृत्तय" इति ॥

## सा वा स्वरभक्तिकाला ॥ ९ ॥

सा विवृत्तिः स्वरभक्तिकाला वा स्यात् । स्वरभक्तेः कालः । द्राघीयसी सार्द्धमात्रा अर्द्धेनान्येति।तत्रायं वि वृत्तेर्विभागस्त्रिः प्रकारः । उभयतो ह्रस्वाः पादमात्रा कालः। प्रउगभुग्यः । प्रउगदर्शि ॥ एकतो दीर्घाऽ र्द्धमात्रा काला । नऽइत्याते । मानोअग्ने । उभयतो दीर्घा, पादोनमात्राकाला । ताइवर्द्धेति । इमा गावः स रमेग्रारोच्छः । विवृत्तिषु प्रत्ययादादरदर्शनमिति दोषं व-क्ष्यत्यतः, क्वाचित्प्रावद्वृत्तिरिति सम्यग्व्याख्यातं न भ-वति ॥

## पदान्तादिष्वेव विकारशास्त्रं पदे दृष्टे-षु वचनात्प्रतीयात् ॥ १० ॥

यत्किंचिद्विकारशास्त्रं तत्पदान्तेषु पदादिषु च वे दितव्यं । पदे दृष्टेषु पदावस्थायामुपलब्धेषु । पदेषु दृ ष्टेष्वपि वचनात्प्रतीयात् । वचनमन्तरेण विकारो न भवति। पदान्तेषु,— वसुः सूनुः सहसः । अयमा मनुषः ।

पदादिषु । आपो हि ष्ठा मयोभुवः, परावीरास एतन ॥ पदे दृष्टेष्विति किं । ताऽअस्य पृतनायुवः, तस्मा अरंगमाम वः । अत्र पदे आकारस्यादृष्टत्वात्स्वरसन्धिर्न भवति । वचनादिति किं । अग्निमीळे पुरोहितं । अत्र मकारस्य पदान्तीयस्य वचनमन्तरेण न कश्चिद्विकारः ॥

## पदं पदान्तादिवदेकवर्णं प्रश्लिष्टमपि ॥ (१)

एको वर्णो यस्येत्येकवर्णं [redacted] यत्पदं तत्पदान्तवत्पदादिवच्च कार्यं लभते । यद्यपि प्रश्लिष्टं भवति । इन्द्र हि मत्स्यन्धसः । उ द्वेति सुभगः ॥

## आनुपूर्व्येण सन्धीन् ॥ २ ॥ (२)

पदान्तान्पदादिभिः सन्दधदिति यत्सा कालाव्यवायेनेत्यत्र पदपाठक्रमानुपूर्व्येण सन्धय उक्ताः ॥ सामान्यतोऽपीदानीं प्रश्लिष्टान् सन्धीनाह । पदानुपूर्व्येण प्रश्लिष्टान् सन्धीन् कुर्यात् । तद्यथा । इन्द्र । आ । इहि । मत्सि । अन्धसः । इन्द्रशब्दस्य तु आकारेण सह सन्धौ कृते इन्द्रा इति भवति । तत इहि अनेन सह सन्धौ इन्द्रेहि भवति । ननु 'पदान्तान्पदादिभिः सन्दधदेति' इत्यनेनाप्येतदेव प्राप्नोति इत्यथ किमर्थोऽयं योगः । शृणु । 'पदं पदान्तादिवदेकवर्णमि'त्यनेन सूत्रेण पदान्तवत्कार्यं लभतइ-

त्येतत्प्रथममुक्ता पश्चात्पदादिवदित्युक्तं । अतः संश्लिष्टस्य पदस्य पूर्वं मन्त्रकार्याणि प्रवर्तन्ते पश्चात्पदादिकार्याणि । तथा चानिष्टं रूपं सिध्यति । । अतस्तदपवादार्थमाह । अत्रापि यथानुपूर्व्येण सन्धयो भवन्तीति ॥

एष स्य स च स्वराश्च पूर्वे भवन्ति व्यञ्जनमुत्तरं यदेभ्यः ॥ तेऽन्वक्षरसन्धयोऽनुलोमाः

चतुष्प्रकाराः सन्धयो भवन्ति । तद्यथा । द्वयोः स्वरयोर्द्वयोर्व्यञ्जनयोर्व्यञ्जनस्वरयोः, स्वरव्यञ्जनयोरिति । तत्र स्वरव्यञ्जनसन्धिमाह । एषः, स्यः, सः, एतानि च पदानि यदा पूर्वाणि भवन्ति, स्वराश्च स्वरान्तानि च यदा पूर्वाणि पदानि भवन्ति । व्यञ्जनं च यदा उत्तरं एतेभ्यो भवति । तदा ते अनुलोमाः, अन्वक्षरसन्धयः इत्येवं सञ्ज्ञा वेदितव्याः । एष देवो अमर्त्यः । उत स्य वाजी क्षिपणिं तुरण्यति । ससुतः पीतये वृषा । स्वराः । पूर्वे न निमिषति सुरणः । एष स्य स च स्वराश्चेति द्विश्चकारकरणं तुल्ययोगनिवृत्त्यर्थं । तेनैतद्भवति । "प्रतिलोमास्तु विपर्यये तएवे" त्यत्र एषः स्य स इत्येते न गृह्यन्ते । यदि हि गृह्येरन् ।

गमत्स्वगोमतीत्यत्र तत्र प्रथमास्तृतीयभावमिति तकारस्य दकारः स्यात् । द्विस्वकारकरणात्त्वयं दोषो न भवति ॥

प्रतिलोमास्तु विपर्यये त एव ॥ २ ॥ (९)

त एवान्तस्वरसन्धयः प्रतिलोमा वेदा भवन्ति । यदा स्वरव्यञ्जनविपर्ययो भवति । पूर्वेषु सन्धिषु स्वराः पूर्वे व्यञ्जनान्युत्तराणि । इह तु व्यञ्जनानि पूर्वाणि स्वरा उत्तर इत्यर्थः । तमिन्द्रं दानमीमहे ॥

तत्र प्रथमास्तृतीयभावं प्रतिलोमेषु निर्यान्ति ॥ (१०)

तत्र तेषु प्रतिलोमेष्वन्तस्वरसन्धिषु प्रथमाः स्पर्शाः पदान्तीयाः तृतीयभावं गच्छन्ति । अर्वागावर्तया हरी । हव्यवाळग्निरजरः पिता नः, यदङ्ग दाशुषे त्वं । इन्द्रश्च त्रिष्टुबिह ॥

अथेतरेषु ॥ ऊष्मा परिलुप्यते त्रयाणां स्वरवर्जम् ॥ (११)

अथेतरेष्वनुलोमेष्वन्तस्वरसन्धिषु ऊष्मा विसर्जनीयो लुप्यते त्रयाणां पदानां । एष स्य स इत्येतेषां । स च स्वरं वर्जयित्वा । (सषोपधोऽरिफित इत्यादिना

एष स्य स विसर्जनीयलोपे सति स्वरस्य लोपः प्राप्नोति। अतः स्वरवर्जमित्युच्यते। एष कविरभिष्टुतः। उत स्य वाजी। स वाज्यर्वा॥

न तु यत्र तानि पद्याः॥ ४॥ (७२)

इत्येषां मध्ये अन्यतमत्, यत्र यस्मिन्पदे सावग्रहं भवति तत्र विसर्जनीयलोपो न भवति। तद्यथा। पशुषो न वाजान्। इत्याद्युदाहरणं द्रष्टव्यं। न तु यत्र तानि पद्यादिति वा पाठः। तदा तु पद्यात्परभूतानि यत्र तानि भवन्ति यत्र न लुप्यते। उदाहरणं तदेव॥

पुरएता, तितउना, प्रउगं, नमउक्तिभिः।

अन्तः पदं विवृत्तयः॥ (७३)

स्वरान्तरं तु विवृत्तिरित्युक्तम्। पदमध्ये या विवृत्तयस्ताः प्रतिपादयन्त्यवग्रहमन्तरेण्युदाहरणार्थं। पुरएतेत्याद्यास्तत्र, अन्तः पदं पदस्य मध्ये विवृत्तयः। इन्द्र प्रणः पुरएतेव, ननु पुरएतासि महतोधनस्य ते, तत्कृतो नोदाहरणं भवति। पदत्वञ्च 'पद्यानिति' परिभाषितत्वात्पदसन्धिरेवायं। सक्तुमिव तितउना पुनन्तः। छन्दः किमासीत्प्रउगं। दाश्नोति नमउक्तिभिः॥

अतोऽन्याः पदसन्धिषु॥ ५॥ (७४)

अतो विवृत्तिचतुष्टयात् या अन्या विवृत्तयस्ताः

पदसन्धिषु वेदितव्याः । भृतङ्गृषिमुग्रमभिमातिषा-
हं । कक्षीवन्तं यश्रौशिजः । इतउत्तरं स्वरसन्धयः
प्राक्प्रकृतिभावात् ॥

समानाक्षरे सस्थाने दीर्घमेकमुभे स्व-
रम् ॥(१८)

अष्टौ समानाक्षराण्यादितइत्युक्तं । समानाक्षरे-
समानस्थाने च दीर्घमेकं उभे स्वरमापद्येते ।
अश्वाजनि प्रचेतमः । सद्यो जज्ञानो विष्टीमिद्धः । क्षीरं
सर्पिर्मधूदकं । समानाक्षरइति किं । त एते वाच-
मभिपद्य । सस्थानइति किं । इरवं नः सर्पिरासुतिः ॥

इकारोदयएकारमकारः सोदयः ।(१७)

इकारपरअकारः एकारमापद्यते । सोदयः सह प
रेण इकारेण । इन्द्र सामसिं रयिं, एतेनं सृजता सु-
ते ॥

तथा ॥ ६ ॥ उकारोदय ओकारम् ॥७

यथा इकारोदय अकारः सोदय एकमेव वर्णमा-
पद्यते । एवमवर्ण उकारोदय ओकारमापद्यते । एता
यामोपगव्यन्तः ॥

परे त्वैकारमोजयोः ॥

परेषु सन्ध्यक्षरेष्वैकारमापद्यते । अकारः सोदयः। निमविशेषेण नेत्याह ॥

ओजयोः प्रथमतृतीययोः ॥

एऐइत्येतयोः । आ एनं, ऐनं देवासः, स्मदापरेदपदभ्रचेताः ॥

## औकारं युग्मयोः॥ (७७)

द्वितीयचतुर्थयोः ओऔइत्येतयोः अकारः ओकारमापद्यते सोदयः । यचौषधीः समग्मत । तं यज्ञं बर्हिषि प्रौक्षन् ॥

## एते प्रश्लिष्टा नाम सन्धयः॥ ७॥ (७८)

प्रश्लिष्टसञ्ज्ञाः सन्धयो वेदितव्याः एते समानाक्षरे सस्थानइत्यारभ्य । प्रयोजनं प्रश्लिष्टादभिनिहितादिति॥

## समानाक्षरमन्तस्थां स्वामकण्ठ्यं स्वरोदयम् ॥(७९)

समानाक्षरलक्षणमुक्तं अन्तस्थामापद्यते । स्वांस्थानेन । अकण्ठ्यं कण्ठ्यवर्जितं अकाराभ्यां विना । स्वरोदयं स्वरपरं । अभ्यार्षेयं जमदग्निवत्सः । अपीन्वत्सप्ततिं चसप्तच । अकण्ठ्यग्रहणं यथासंख्यनिवृत्त्यर्थम् । यथासंख्यं हि संभवति । चतस्रो, तस्माञ्चत्वारश्च स्वराः, ह्रस्वदीर्घौ

सवर्णाविति वचनात् ॥

न समानाक्षरे स्वे स्वे ॥ (२१)

न भवति क्षैप्रः समानाक्षरे स्वे स्वे । ननु तयो-रुक्तः प्रश्लिष्टः सन्धिः, सत्यं । उक्तो यदि नाम एवं म-न्यते । मात्रिके प्रश्लिष्टः चरितार्थः, यथा दिवीव सूर्यं दृशे । सूयस्थाभिर्न धेनुभिः । द्विमात्रिकेषु क्षैप्र-स्यावकाशः । तन्वा भूरिति । न समानाक्षर इत्यु-क्तम् ॥

ते क्षैप्राः प्राकृतोदयाः ॥ ८ ॥ (२२)

ते क्षैप्राः सन्धयः प्राकृतोदयाः । प्राकृतोदयाः प्रा-कृतस्वरोदयाः । प्राकृतग्रहणं सोदयाधिकारनिवृत्त्य-र्थं । क्षैप्रसञ्ज्ञाप्रयोजनं 'क्षैप्राभिनिहितेषु चेति' ॥

विसर्जनीयोऽरिफितो दीर्घपूर्वःस्वरो-दयः ॥ आकारम् ॥ (२०)

विसर्जनीय अरिफितः दीर्घपूर्वः सन्नो-पधः स्वरोदयः (स्वरपरः) आकारमापद्यते । तथा, या ओषधी सोमराज्ञीः । अरिफितइति किं । वारि रमणु गच्छति । स्वरोदयग्रहणं समानाक्षराधिकार-निवृत्त्यर्थम् ॥

उत्तमौ च द्वौ स्वरौ ॥ (२४)

ऐऔ आकारमापद्येते स्वरोदयौ । सूर्यायं पन्थाम-न्वं तवायुं । उभा उ नूनम् ॥

ताः पदवृत्तयः ॥ ९ ॥ (२५)

ता एतास्त्रिस्त्रः पदवृत्तय उच्यन्ते । अत्र याभिः स-ञ्ज्ञाभिः शास्त्रकृद्व्यवहरति तास्त्य: स्वव्यवहारार्थाः । याभिर्व्यवहारो नास्ति तासां ज्ञाने धर्मः फलम् ॥

ह्रस्वपूर्वस्तु सोऽकारम् ॥ (२६)

ह्रस्वस्वरपूर्वस्तु सः, अरिफितो विसर्जनीयः, सोपधः स्वरोदयः अकारमापद्यते । य इन्द्र सोम पातमः । अरिफित इति किं । अन्तरिच्छन्ति तं जने ॥

पूर्वौ चोपोत्तमात्स्वरौ ॥ (२७)

पूर्वौ च उपोत्तमात्, उत्तमात्पूर्वः स्वरः ऐकारस्तस्मा त्पूर्वौ एकारओकारौ स्वरपरौ अकारमापद्येते । अग्न इन्द्र वरुण मित्र देवाः । वायउक्थेभिर्जरन्ते ॥

त उद्ग्राहाः ॥ (२८)

त उद्ग्राहसञ्ज्ञाः सन्धयो वेदितव्याः । उद्ग्राहाणां पूर्वरूपाण्यकार इति प्रयोजनम् ॥

दीर्घपरा उद्ग्राहपदवृत्तयः ॥ १० ॥ (२९)

तथा ते एव उद्ग्राहादीर्घपराः सन्तः पदवृत्तयो भवन्ति । कद्रूषते तुज्यते । सद्मस्मावे प्रतिरन्त आयुः । उग्राणामिन्द्र ओजिष्ठाः ॥

## ओष्ठ्ययोन्योर्भुग्नमनोष्ठ्ये वकारोऽन्तरागमः ॥ (७०)

ओष्ठ्यौ ओकार औकारौ योनी ययोस्तौ ओष्ठ्ययोनी अकाराकारौ तयोः अनोष्ठ्ये स्वरे परभूते वकारश्च अन्तरागमो भवति । यत ओकारौकारयोः स्थानसंभूतौ अतः कारणात् अकारावोष्ठ्ययोनी, तेन वकारागमः । भुग्नं नाम चैतत्सन्धानं भवति । वायवायाहि दर्शत । ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । अनोष्ठ्य इति किं । वायउक्थेभिर्जरन्ते । उभाउपांशु प्रथमा पिबा वा ॥

## ऋकार उदये कण्ठ्यावकारं तदुद्ग्राहवत् ॥ ११ ॥ (७१)

कण्ठ्यौ अकाराकारौ ऋकारउदये अकारमापद्येते । तत्सन्धानं उद्ग्राहवत्सञ्ज्ञं वेदितव्यं । प्रऋभुभ्यो दूतमिव । आऋजुना यन्मधुन ऋतस्य ॥

## उद्ग्राहाणां पूर्वरूपाण्यकारे प्रकृ-

त्या द्वे ओभवत्येकमाद्यम् ॥ प्राच्यपञ्चालपदवृत्तयस्ताः पञ्चालानामोष्ठ्यपूर्वा भवन्ति ॥ १२ ॥ (७२)

उद्ग्राहाणां मन्धीनां यानि पूर्वरूपाणि, ये पूर्वरूपा अवयवाः-ह्रस्वपूर्वौ विसर्जनीयएकार ओकारश्च, तानि अकारे प्रत्यये प्रकृत्या द्वे भवतः । ओभवत्येकमाद्यं । ताश्च प्राच्यपदवृत्तयः पञ्चालपदवृत्तयश्चोच्यन्ते । एवं सामान्यतउक्त्वा, अथेदानीं विशेषमाह । पञ्चालानामोष्ठ्यपूर्वा भवन्ति । इतरास्तु प्राच्यपदवृत्तयः । पुरोलाशं यो अस्मै । अध्वर्यो अद्रिभिः सुतम् । ते अग्ने पाकभवो मन्दसानाः ॥

अथाभिनिहितः सन्धिरेतैः प्राकृतवैकृतैः ॥ एकीभवति पादादिरकारस्तेऽत्र सन्धिजाः ॥ १३ ॥ (७३)

अथशब्दो महाधिकारद्योतनार्थः । अभिनिहितसञ्ज्ञकः सन्धिर्वक्ष्यतइतिवाक्यशेषः । स च एतैः प्राकृतवैकृतैरधस्तनैः । एकारौकाराभ्यां प्राकृताभ्यां, ह्रस्वपूर्वेण (च) ओकारभूतेन वैकृतेन च, एकीभवति पा-

दादिरकारस्तेनाच चयः मन्थौ दृश्यन्ते । सुगन्तन्नेता-वकेभ्यो रथेभ्योऽग्ने । दधामि रत्नं द्रविणं च दाशुषेऽग्ने । अत्राचिन्नामधोपितोरं । पादादिरितिकिं । चिकित्वां सोऽचेतसं नयन्ति, आरे अस्मे च शृण्वते । अध्वर्यो अद्रिभिः सुतं । अभिनिहितसञ्ज्ञाप्रयोजनं 'चैप्राभिनिहितेषु चेति ॥

अन्तःपादमकाराच्चेत्संहितायां लघोर्लघु ॥ यकाराद्यक्षरपरं वकाराद्यपि वा भवेत् ॥ १४ ॥ (७४)

अन्तः पादं पादमध्ये । अधिकारवचनं । अकाराच्चेत् । अभिनिधीयमानस्याकारस्य विशेषणानि । अकाराल्लघोः परमक्षरं लघु यकारादि वा वकारादि वा यदि भवेत्संहितायां संहितापाठे, अथ सः अकारः अभिनिधीयते प्राकृवैकृतैरेकीभवतीत्यर्थः । यकारादेः "यमैच्छाममनसा सोऽयमागात्" । वकारादेः "तं पृच्छन्तोऽवरासः । यस्ते मन्यो ऽविधद्वज्र । तेऽवदन्प्रथमाः । लघोरिति किं । व्रतैः सीक्षन्तो अव्रतं । लघ्विति किं । दुहीतिरोमित्रमह्यो अवद्यात् । यकाराद्यक्षरपरं वकाराद्यपीति किं । एनं देवासो अमृतासो अस्युः । वज्रेण घृष्णो अपतानुदस्व । यथा मायीतेषु-

पिवः ॥

अन्यादृग्यपि तथायुक्तमावोन्तोपहितात्सतः ॥

यकारादि वकारादि वा यदक्षरमुक्तं, तदुच्यते। यद्यप्यन्यव्यञ्जनादि तदक्षरं भवति । तथा तेनैव प्रकारेण युक्तं भवति । संहितायां लघोर्लघु भवतीत्यर्थः । अथ तदा वोन्तोपहितात्सतः, अकारस्याभिनिधानं भवति, "आवएवमन्तो यस्य पदस्य तदावोंतं, तेनोपहित आवोंतोपहितः । तस्मादावोन्तोपहितात्सतः । अत्र गावोभितोनदन्त । तथायुक्तमितिकिं, आगावो अग्मन् । आवोंतोपहितात्सतइतिकिं । एतं देवासो अमृतासो अस्युः ॥

अयेयोवेऽवइत्यन्तरैकारः सर्वथा भवन् ॥ १५ ॥

अये । अयः, अवे । अवः । एवमन्तैः पदैरुपहितअकारःसर्वथा सर्वप्रकारोऽपि सन्नभिनिधीयते । सर्वथा ग्रहणं गुरुलघ्वर्थं । अग्नीतये इतये पवस्व । ताअस्ययोरुपायोनसस्तुः । युवं श्वेतं यद्देवेभ्विनाश्वं । पुरूरवोऽनुतेकेतमायं । तदन्तग्रहणादिह न भवति । विपावराहमयोअग्रंयाहन् । तद्देवानामवोऽयद्याहणोमहे ।

वइत्येते न, च्यान प्र, क्व चित्रः सवितैव कः॥ पदैरुपहितेनैतैः॥(७१)

आ। न। प्र। क्व। चित्रः। सविता। एव। कः। एतैः पदैरुपहितेन वइत्येतेन पदेन उपहितोऽकारोभिनिधीयते। आवोऽहंसमितिंददे। नवोऽश्वाः श्रथयन्तहसिस्वतः। प्रवोच्छारिरिचे देवपुष्यदं। क्व१वोश्वाः क्वाइभो एव:। चित्रो वसुयाम:। तत्सवितावोऽमृतत्वमासुवत्। अत्रैववोयुनह्यामि। कोवोंतर्मरुतऋष्टिविद्युतः। एतैः पदैरितिकिं। अच्छावो अग्निमवसे। पादमध्यइतिकिं। उत येषामयोवीवीनासः। अत्र च प्रकारान्तरेण जातत्वात्॥

सर्वैरेवोदयाः परे॥ १६॥(७८)

सर्वैरेव प्राकृतविकृतैः एकारौकारैरुपहिताः सन्तः परे पादादिभूता अभिनिधीयन्ते, न ह्रायन्ते कथमेतेइत्यतआह॥

अदादवत्ताऽजनयन्तान्यत्य अभेदयोपाश्रवन्त्ववीरता॥ अमुमुक्तममतयेऽनशामहाअवत्वचोऽर्वारतेऽत्रांरय

## वेऽरथा ॥१७॥ (८०)

अदात् । अवर्वः अजनयन्त । अव्यत्यै । अभेत् । अयोपाष्टिः । अवन्तु । अवीरतां । अमुमुक्त । अमतये । अनग्रामहै । अयत्वचः । अवीरते । अवांसि । अवः । अरथाः इति । एतेषां पदानां (सर्वैः पदैः उपस्थितः) अकारः उदयः सन् अभिनिधीयते । सनः सनितासनये सनोऽदात् । अमर्त्यो ऽवर्वं ओषधीषु । यन्देवासोऽजनयन्ताग्निम् । उत स्म तेऽव्यत्यै पृणासि । वितिग्मेन वृषभेणापुरोऽभेत् । ध्येनोयोऽपाष्टि हन्ति दस्यून् । पदादौ लक्षणतोऽभिनिहितः । पदमध्ये निपातनात् । अभिव्रवन्तु तेऽवन्त्वस्मान् । माशेषसोऽवीरतापरिषा अचिंनमहमुक्तम् । मानोऽअग्नेऽमतये । येन वसोऽनग्रामहै, ग्राऽयत्वचाभरः । त्वचइतिकिं । माशिवासो अवक्रमुः । मानोअग्नेऽवीर ते पराद्राः । आदेव्याष्टणोमहेऽवांसि । आतेऽवो वरेण्यम् । आनोऽवोभिर्महतः । इत्युदाहरणे । अनश्वासो ये पवयोऽरथाः । अरश्मानो येऽरथाः ॥

वासो वायेऽभिमुते कवष्यः संक्रन्दनो धीजवनः स्वधावः ॥ उत्सादतक्रतावः सगर्भ्यो हिरण्यशृङ्गइति चोपधा

भिः ॥ १८ ॥ (४०)

वासोवायः । अभिसुवे । कवष्यः । संक्रन्दनः । धीजवनः । स्वधावः । उत्सादतः । ऋतावः । सगर्भ्यः । हिरण्ययुगिति च । एवं रूपाभिस्त्वुपधाभिरुपहितश्चकारोऽभिनिधीयते । वासोवायोऽवीनां । अभिसुवेऽभिभङ्गाय । कवष्योऽकोषधावनीः । संक्रन्दनोऽनिमिष एकवीरः । पूर्वेव धीजवनोऽसि सोमः । रायस्पूर्धि स्वधावोऽस्ति हि ते, उत्सादतोऽगादङ्गादवत्तानां । सत्राऽऽऋतावोऽनुमा गृभाय । सगर्भ्योऽनु सख्यं सयूथ्यः । हिरण्ययुगोऽयोऽस्य ॥ १८ ॥

येरा रायोऽधमेधायि नोऽहिरग्नेऽभिदासति ॥ जायमानोऽभवोऽग्ने यं नृतोऽपोऽहति पिप्रति ॥ १९ ॥ (४१)

येराः, रायोध । मेधायि । नोहिः । अग्नेऽभिदासति । जायमानोऽभवः । अग्ने यं । नृतोपः । अंहोति पिप्रति । एते षडेव पदानि[1] यथागृहीतमभिनिधीयन्ते । रथानां नयेराः । स वा रायोधये पार्थिवासः । उपप्रागात्सुमन्मे धायि मन्म । उत नोऽहिर्बुध्न्यः । यो नो अग्नेऽभिदासति । जायमानोऽभवो महान् । त्वयाऽग्ने यं सुत्यजमानस्य नृतोपः, तवत्यन्नर्यं नृतोऽप इन्द्रः । यो नो अं

श्रोतिविप्रति॥ ४

जम्भयन्तोऽहिं मरुतोऽनुभर्त्रीं यवसे-
विष्यन्वयुने जनिष्ट॥ वृत्रहत्येर्वाः स-
मेरतमाना मरुतो मदन्नभितोनव-
न्त॥२०॥ (४२)

एते द्वैपदा यथागृहीते अभिनिधीयन्ते। जम्भय-
न्तोऽहिं हन्तं रक्षांसि। एषास्याबोमरुतोऽनुभर्त्री। प्री-
यदम्बा। नयवसेऽविष्यन्। इडायास्पुत्रो वयुनेऽजनिष्ट।
ताभिरूपष्टत्र्पत्यभीर्नः। नयन्त्वयन्ति समरेतमानाः।
स्वर्नं षासो मरुतो मदन्नानु। समच्रगाबोऽभितो नव-
न्त॥

श्रुत्वेत त्वंस्तवसे वाचिमेरपद्दधिरेऽग्ना-
नहुषेऽस्मत्पुरोऽभिनत्॥ उपतेऽधां
वहते यं यमोऽदातिज्जनुषो यासुत्रतो
ऽनुश्रियेधित॥२१॥(४०)

एते च द्वैपदा यथागृहीतमभिनिधीयन्ते। संह-
भुवतेऽध्वना। सत्यगुष्माय तवसे वाचि। उत मेरपद्युव-

तिः । वैश्वानरे न दधिरेऽग्ना वसूनि । सनतमो नक्षु-षोऽस्मात् । पुरोभिनद्र्हन्दस्युहत्ये । उपतेषां सक्षमा-नाम् । वहतेऽयं मघवा सर्वसेनः । नराशंसस्तुरंगोऽयमोऽदितिः ॥ नय ईषन्ते जनुषो याः सुविते देवां-स्तुवितोनुपत्त । विश्वाऽश्वभिश्रियोऽधित ॥

वपुष नु विशायन्त सन्ताऽवद्यानि खं-
न सः । भरन्तोऽवस्यवोऽवोऽस्तु बुध्न्-
योऽजो मायिनोऽधमः ॥ २२ ॥(४४)

एते ईपदा अभिनिधीयन्ते । प्रवांवयो वयुषेऽनु प-दात् । सद्विप्रोऽग्न । अन्तः सन्तोऽवद्यानि पुना-नाः । रथे रथस्य खेनमः । स्तूरं न कश्चिद्भरन्तो व-स्यवः । मह्वि चोणामवोऽस्तु । अहिर्बुध्न्योऽजएकपात् । त्वंमायाभिरपमायिनोऽधमः ॥

देवो न यत्पुरूवसोऽसुरघ्नोभूतोऽभिश्वे-
तोरुपस्तेननोद्य ॥ येजामयस्तेरद-
न्नोऽधिवक्तारस्तेऽवर्द्धन्त तेऽरुणोभि;
सदोधि ॥ २३ ॥(४५)

एते च ईपदा यथागृहीतमभिनिधीयन्ते । देवो

न यत्सवितारः पुरुहूत पुरूवसोऽसुरघ्नः। मेघो भूतोऽभियन्नयः। कृष्णः श्वेतोऽरुषो यामः। तेन नोऽद्य विश्वेदेवाः। तेनेति किं। तेनो अद्य ते अपरं। इन्द्रजामयउत ये जामयः। प्रतेरदद्वरुणो यातवेः स प्राविता मघवानोऽभिरक्षा। तेऽवर्द्धन्त स्वतवसुः। तेऽरुणोभिर्वरं। राजेव सद्म निषदोऽधिवर्हिषि॥

स्वाध्यो ऽजनयन्धन्वनोऽभिमातीरग्नेयदह्नमनसोऽधियोऽध्वनः॥ योऽह्यरतेविंदं स्तपसोऽधिनयोऽधिपादोऽस्ययोति ब्राह्मणोऽस्यापोऽनयत्॥ २४॥

एते च यथागृहीतमभिनिधीयन्ते। स्वाध्यो जनयन्नह्मदेवाः। ओजस्विरेव धन्वनोऽभिमातीः। विश्वा अग्ने यदह्नारातीः। दहेति किं। महोराय: सातिमग्ने अपादधि। उर्वश्या ब्रह्मन्मनसोऽधिजातः। मनो न योऽध्वनः सद्य एति। घृतचक्रं योऽरह्यः। तेऽविन्दन्मनसा दीध्यानाः। तपसोऽध्यजायत। भूषन्न योऽधि। नेति किं। पावमानीर्योऽध्येतिहृष्टिः। पादेऽस्य विश्वा भूतानि। इन्द्रो विश्वायोऽति शृराव। ब्राह्मणोऽस्य मुखमासीत्। आपोऽनयत्सधमाः॥

सोऽस्माकं यो द्वेषोभ्यो ऽन्यकृतेभ्यस्ते-
भ्योऽकरं पयस्वन्तोऽमृताश्च ॥

एते च द्वैपदा यथा गृहीतमभिनिधीयन्ते । उपरिष्टा-
रस्तु सोऽस्माकं य: । यदिति किं । सोऽस्माकमनवद्य ।
द्वेषोभ्योऽन्यकृतेभ्यऽ उत । इदन्तेभ्योऽकरं नमः । शुक्राः
पयस्वन्तोऽमृताः ॥

अन्योर्वाकेऽथो इतिनोदयेषु पुनः प-
राके च परावतश्च ॥ २५ ॥

अथाभिनिहितं सन्धिरित्यनुक्रम्य यदुक्तं पादादिर-
कार एकीभवतीति तस्यापवादः । अन्यः । अर्वाके । अथो ।
एतेषूदयेषु । पुनः पराके । परावतः । एतेषु च पूर्व-
पदेषु यथासंख्यमभिनिहितो न भवति । पितरं न
पुत्रोऽअन्यः । यन्नासत्या पराके अर्वाके । आविवास-
न्परावतोऽअथो ॥ २५ ॥

अन्तः पादं च वयो अन्तरिक्षे वयो
अस्या अथ यो हेतयस्त्रयः ॥ त्वा अन्धसः
शयत्रे अश्विना भये अवो आधिसाज्ज
यो जामयः पयः ॥ २६ ॥

अन्तः पादमित्युपक्रम्य यदुक्तं तस्यायमपवादः । पादमध्ये च । अग्निं वयो अन्तरिक्षे । अन्तरिक्षइति किं । आवां वयोऽश्वासः । वयो अस्य । ऊर्ध्वो अग्ने वयो अस्य । अस्येति किम् । आवां वयोऽश्वासः । अस्यथयो यथा, सतीनमन्युरश्रथायोऽअद्रिं । शतानीकाहेतयोऽअस्य । वयः । चत्वारि शृंगा त्रयो ऽअस्य । पान्तमावो अन्धसः । अन्धसइति किं । आवोऽहंममितिन्द्रे । वइत्येते नचानप्रे त्यस्यायमपवादः । अये योवेवइत्यन्तैरित्यस्यापवादाः शेषाः । अपिन्व तं शयवे अश्विनागां । यद्वां इवन्त उभये अध्नः । यन्नार्षदाय श्रवो अध्यधत्तं । अश्वीतिकिं । श्रवो मृत्यु । भरद्वाजां-त्वार्ज्जयो अभ्ययष्ट । जानयो अध्वरीयतां । आमादद्य पयो अक्र तस्य ॥४

## प्रकृत्यैतिकरणादौ प्रगृह्याः ॥

इदानीं प्रकृतिभावः । तत्र प्रथमं पदसंहितामाह । प्रकृत्यैतिकरणादौ प्रगृह्याः । इतिकरणादौ परभूते प्रकृत्याप्रगृह्या भवन्ति । इन्द्रो इति । शतक्रतो इति शतऽक्रतो । सोइति । इन्द्राग्नीइति । द्वे इति ॥

## स्वरेषु चार्ष्यम् ॥

स्वरेषु च परभूतेषु आर्ष्यां संहितायां प्रकृत्या प्र-

गृह्या भवन्ति। ऋषिदृष्टा आर्षी। राजन्ती अस्य भुवनस्य रोदसी अस्मे। इन्द्रवायू इमे सुता:। ते इडिप्रा इळते। प्रोअयासीदिन्द्रः। सोमो गौरी अधिश्रित:॥

## प्रथमो यथोक्तम्॥

प्रथम: प्रगृह्य: आर्ष्यां संहितायां यथोक्तमेव भवति। कश्च प्रथम:। ओकारआमन्त्रितज: प्रगृह्यइत्यादिना यउक्त:। इन्दविन्द्राय मत्सरं। वायउक्थेभिर्जरन्ते। अत्राचिन्नो मघोपितोरं। यद्दोपितो अजगन्। पुरुहूत पुरूवसोऽसुरघ्न:। प्रथमइतिकिं। प्रोअयासीदिन्दु:॥

## सहोदयास्ताः प्रगृहीतपदाः सर्वत्रैव॥

सह उदयेन वर्ततइति सहोदया:। ता: संहिता: प्रगृहीतपदसञ्ज्ञा वेदितव्या:। सर्वत्रैव। पदसंहितायां इतिकरणादौ परभूते, स्वरे पु वाष्यां उदयेषु, प्रगृहीतपदा भवन्ति। इन्द्रो इति। शतक्रतो इति शतऽक्रतो। इन्द्राग्नी इति। अतप्यमाने अवसावन्ती अनु॥

## त्र्यक्षरांतास्तु नेवे॥२७॥

त्र्यक्षरपर्यंता: पुन: प्रगृह्या इवप्रत्यये न प्रकृत्या

भवन्ति। आर्ष्यां संहितायां, दम्पती चक्रतु विदा।
आर्ष्यामिति किं। दम्पतीइवेतिदम्पतीऽइव। तथा।
उपधीव। उपधीइवेत्युपधी। इव। अवसानान्ता इ-
ति किं। अक्षीइव चक्षुषायातम्।

आर्ष्यामेव सन्ध्ययकारपूर्वौ विवृत्ते-
ऽच्च प्रत्ययः सनुकारः॥

आर्ष्यामेवेत्यवधारणं क्रमसंहितानिवृत्त्यर्थम्। सन्धौ भवः सन्ध्यः। सन्ध्यो यकारः पूर्वो यस्मात् इति सन्ध्ययकारपूर्वउकारः प्रकृत्या भवति। प्रत्यु अदर्श्यायती। अभूवौक्षीव्यु१आपुः। विवृत्तिस्तु परभूतउकारः प्रकृत्या भवति। अभूदुभाउ अंशवे। सोमं धनसा उ ईमहे। सन्ध्यग्रहणं किं। तामेजरायुजरं मरायु। यकारपूर्वइति किं। अभूवौक्षीः॥

ऊकारादौ स्वरति॥

ऊकारादौ पदे परभूतेषु इत्येतत्पदं प्रकृत्या भवति। ताभिरूषु ऊतिभिः। ऊकारादाविति किं। ह्रूपस्थाभिर्न धेनुभिः॥

पूषेत्यकारे न चेत्तदेकाक्षरतत्र पूर्वम्॥२८॥

पूषा इत्येतत्पदं षकारादौ परे पदे प्रत्ययेन प्रकृत्या भवति । यदि तत्पूषेतिपदं एकाक्षरपदपूर्वं न भवति । तत्र पूर्वं चेन्न भवति । पूषा अविष्टमाहिनः । स्वस्ति पूषा असुरः । नचेत्तदेकाक्षरतत्र पूर्वमिति किं । नतंपूषाऽपिमृष्यते । तत्र पूषाभवत्सचा ॥

श्रद्धा सम्राज्ञी सुशमी स्वधोती पृथुज्रयी पृथिवीषामनीषा ॥ अयानिद्राज्या प्रप्रेति स्वराणां मुख्ये परे पञ्चमषष्ठयोश्च ॥ २९ ॥

इत्येतानि पदानि प्रकृत्या भवन्ति । स्वराणां मध्ये मुख्ये प्रथमे अकारे पञ्चमषष्ठयोश्च स्वरयोः परभतयोः इकारे ईकारे चेत्यर्थः । श्रद्धाइत्ते मघवन्पार्ये दिवि । संम्राज्ञी अधिदेवृषु । एते शमीभिः सुशमी अभूवन् । स्वधा अवस्तात्प्रयतिः परस्तात् । उतो अनूती हिरिशिप्रः । पृथुज्रयी असुर्यं च । द्यावाक्षामा पृथिवी अन्तरिक्षं । ईषा अक्षो हिरण्ययः । पूर्वीरयी मनीषा अग्निः । अया ईशानस्तविषीभिः । मानो निद्रा ईशत, ज्या इयं समने । धन्वन्निव प्रपा असि । मुख्ये परे पञ्चमषष्ठयोश्चेति किं । चारुदुपस्थ भागहि । पार्थ्यामेवेति किं । संम्राज्ञीति सं । राज्ञी ॥

स्वरे पादादौ उदये सचेति ॥

सचा इत्येतत्पदं प्रकृत्या भवति । स्वरे पादादौ उदयभूते । उगने काव्ये सचा इन्द्रः । सृजते सूर्यः सचां उद्यत् । स्वरे पादादावुदये इति किं । सचैषु सवनेष्वा । मुख्ये परे पञ्चमषष्ठयोश्चेत्यस्याधिकारनिवृत्यर्थं स्वरग्रहणं । केचित्किलपार्षदप्रपञ्चयत्नप्रयोगे कुर्वंति । इन्द्रइद्धर्योः सचेत्यंतस्याभ्यासेऽपीमं प्रकृतिभावं कुर्वंति तन्न । कथं । संहितायां यद्दृष्टं तदनेन शास्त्रेण साध्यते नानेनादृष्टम् ॥

एवंतं जोषं चर्षणिभ्यश्चर्षणिभ्यः ॥ एकारान्तं मित्रयोरस्मदविन्नमस्युरित्युपधं चेत्यपृक्तम् ॥ ३० ॥

इतिकरणः पदस्वरूपज्ञापनार्थः । एवमुपधं च आ इत्येतत्पदं अपृक्तं चेत्प्रकृत्या भवति । स्वरे पदादावित्यनुवर्त्तते । प्रइत्येवमन्तं एवान्तं । तस्मजयन्त सुष्टुभं नदोष्वा उग्रान्तं । उतोन्वस्य जोषमा इन्द्रः । आयाहि पर्वीरतिचर्षणीरा अर्थः । संसहस्राकारिषच्चर्षणिभ्य आ आविः । एषिद्धीने गभीरआ उग्र । उदुत्यश्चनुमंहिमित्रयोरा एति ।नचैतदुदाहरणमिह स्यादेकारौकारौ चेत्यनेन सिद्धत्वात् । तन्न । नहि समानलक्ष-

णानां परित्यागो न्याय्यः । नचैतं विषयं स विधिः प्रवेष्टुं शक्नुयात् । मन्त्राकृतग्रहणात् । तत्र सामान्येन विधानाच्च । तस्मात्साधूदाहरणं । इमा अस्मै मतयो वाचो अस्मदा ऋचः । आ स एतु यईवदां अदेवः । उपत्रो विश्ववेदसो न मन्युरा अमृक्षि । स्वरपादादावुदयइति किं । सोमं वज्जिणा आभरत् । इत्यपभृइतिकिं । आरश्मयो गभस्त्या स्थूरयोराध्वन् । अष्टनामिकिकिं । यः प्राणतो निमिषतो महित्वैकः ॥ ६ ॥

एकारौकारपरौ च कण्ठ्यौ लुशादर्वाक् ॥

एकारस्य उकारस्य परौ ययोः अकारआकारयोः तौ तथोक्तौ लुशादृषेः प्राक् प्रकृत्या भवतः । अवभृसुत्य इत्यत्र लुशः । एकारओकारयोर्विशेषणार्थं पादादिग्रहणमिहानुवर्त्तते । आयन्मावेना अरुहन्नृतस्य एकं । तिस्रो द्यावः सवितुर्द्वा उपस्थां एका । त्वं न इन्द्राभरँ ओजः । विश्वे इद्वानि तविषीवउग्रँ ओकः । लुशादर्वागिति किं । यः प्राणतो निमिषतो महित्वैकः । पादादाविति किं । मैनमग्ने विदह । अमितौजा अजायत ॥

गोतमे चामिनं त ॥

गोतमऋषिदृष्टे च अग्निनक्तेत्येतत्पदं प्रकृत्या भवति । आ ते सुपर्णा अमिनं तएवैः । पादमध्यप्राप्त्यर्थं पुनर्वचनम् ॥

विभ्वा विधर्ता विपन्या कदायामाते त्यृकारेष्वपादादिभाजि ॥ ३१ ॥

एतानि पदानि प्रकृत्या भवन्ति ऋकारादौ प्रत्यये परे । अपि अपादादिभाजीत्यपि शब्दउभयार्थः । ते वाजो विभ्वाँ ऋभुः । आदित्यो असृजद्विधर्ता ऋतं । आर्तप्रथमं विपन्याँ ऋतस्य । अग्ने कदा ऋतचित् । परितक्म्यायाँ ऋणं च ये । अयामाताँ कृणुत । ऋकारइति किं । उत त्वष्टोत विभ्वानु ॥

परुच्छेपे भीषा पथेत्यकारे ॥

भीषापथेत्येते परुच्छेपे ऋषौ अकारे प्रकृत्या भवतः । वृषान्न भीषाँ अद्रिवः । याहि पथाँ अनेहसा । ऋषिग्रहणादिह न । कदर्यम्णो महस्पथाति । अकारइति किं । यप्येवयं तावनुधासता रजः ॥

एवा अग्निमत्रिषु साप्लुतोपधा ॥

एवाँ अग्निमित्येतद्द्वे पदं यथागृहीतं भवति । अग्निमण्डले प्लुतोपधसङ्ग्रकं सन्धानं भवति । एवाँ अ-

निमजयमुः । एवाँ अग्निवसूयवः । अनिग्रहणं किं । एवाग्निमहस्यं १ वमिष्टः । प्लुतोपधासंज्ञा प्रयोजनमिदानीमेव वक्ष्यति ॥

स चादयो या विहिता विवृत्तयः प्लुतोपधान्ता अनुनासिकोपधाः ॥ ३२ ॥

स्वरे पादादावित्यादिना या विहिताः सचादयः । एवाँ अग्निमविषु साप्लुतोपधान्ताः । ता अनुनासिकोपधा भवन्ति । आनुनासिक्यमुपधानां विधीयते । इदुस्त्रिया । मृजते सूर्यः सचाँ उद्यत् ॥

सेदु सारिमं त्सेमभिसाभिवेगः सेदभवः सोपमासौषधीरनु ॥ सास्मा अरं सोतनः सेन्द्र विश्वा सेति सास्माकमनवद्यसासि ॥ ३३ ॥

यथागृहीतान्येतानि भवन्ति । अत्र विहृत्तिलोपो निपात्यते । सेद्राजाक्षयनि । इदिति किं । सइद्भोजो यो गृहते । त्वमीशिषे सास्मिन्नासत्सि । धिया शमीसचते सेमभिः । अभीतिकिं । सइमममादमह्नि । असत्सु मे जरितः साभिवेगः । सेदभवोऽयमवथ । क्त

भवतीति किं । स इद्देवेषु गच्छति । जीवयाजं यजते सोपमा दिवः । सौषधीरनुरुध्यसे । अग्निरिति किं । सप्तौषधीः सोऽपः भवनानि । सास्मा अरं बाहुभ्यां । अरमिति किं । सोऽपस्मै चारुमच्छदयत् । सौषधः सोऽतमोऽर्तं । नेतीति किं । स्वप्नं । यावकर्थं सेन्द्रविश्वास्युक्थ्यः । विश्वेतिकिं । स इन्द्र विश्वाँ अभि । कुह स्वित्तिघोरं । सास्माकमनवद्यात्तूर्जान । पक्षवद्धेतिकिं । उपस्थास्तु सो ऽस्माकं । इत्येतद्वैनिपातनं प्रत्युदाहरणमथ । अत्रापि विसर्जनीयलोपो निपात्यते । अन्यत्र तु विसर्जनीयस्य कृतौ स्वस्थाभिनिहितः । यस्तात्कृणोः प्रथमं सास्युक्थः ॥

सेदग्ने सेदग्निर्वासिष्ठ सास्माकाभिः
सेदुग्रः सेमः ॥ सैना सैनं सोदंचं से मा-
सोषां सेशे सेदीशे ॥ ३४ ॥

एतानि यथागृहीतं भवन्ति । सेदग्ने अस्तु सुभगः सुदानुः । अग्न इतिकिं । स इत्क्षेति । सेदग्निरग्नीँ रत्यस्त्वन्यान् । वासिष्ठमितिकिं । स इदग्निः कण्वतमः कण्वसखा । सास्माकेभिरेतरीन । सेदुग्रो अस्तु मरुतः । उग्र इतिकिं । स इद्देवेषु । सेमं मही रोदसी । सैनानीकेन सुविदत्रः । सैनं सचते देवो देवं । सेमं नोऽध्वरं

यथ । सोऽर्ण्वं सिन्धुमरिणात् । सेमामविड्ढि प्रभृतिं, सोषामविन्दत्सस्वः । नसेशे यस्य रंवते । सेदीशे यस्य रोमशं । ईशइतिकिं । सइद्देवेषु ॥

नूइत्था ते सा नो अव्ये वो अस्मे वासौ वेद्यस्याम् ॥ धिष्णे मे नूअन्यत्राचित्पादादौ नू इन्द्रेत्यवाक् ॥ २५ ॥

यथागृहीतमेतानि पदानि भवन्ति । नूइत्थातइति दीर्घत्वं निपात्यते । सन्धिस्तु पदे ह्रस्वस्य न भवति । नू इत्था ते पूर्वथा च । तइति किं । आरे । पद्याकोन्वित्था । सा नो अव्ये इति मानावव्यइतिप्राप्ते ओकारो निपात्यते । सन्धिस्तु पूर्ववन्न । दृधास्वसारो अधिसानो अव्ये । वो अस्मे अभिनिहिताभावो निपात्यते । प्रप्रावो अस्मे स्वयशोभिः । अस्य वासा उ अर्चिषा । वैअसौ प्रश्लेषो निपात्यते । वेद्यस्यां प्रगृह्यस्यान्तस्थां निपातयति । स्तीर्णं राये सुभरं वेद्यस्यां धिष्णे मे, इकारलोपो निपातितः । पदान्तपदाद्योरेत्वं वा । आविवासन्रोदसी धिष्ण्येते । नू अन्यत्राचित्दीर्घो निपात्यते । नू अन्यत्राचिदद्रिवः । पादादौ नू इन्द्र । पादादौ वर्तमानस्य दीर्घत्वं निपात्यते । नू इन्द्र राये वरिवः । पादादाविति किं । यदिन्विन्द्र पृथिवी । इत्यवाक् । प्रकृतिभावे प्राप्ते अन्तस्थापत्तिर्निपात्यते । बर्हिषदः

वितरजात्यशीक्॥

उदू अयान्रजेषितं धनर्चं शतर्चसन्द-
शोणयेदशोण्ये ॥ यथोहिषेयथोचिषे
दशोणिं स्वरोदयं पिबा इमं रथो-
ऽढ ॥३६॥

एतानि यथागृहीतं भवन्ति । उदूअयान् । दीर्घत्वं निपात्यते । सन्धिस्तु पदे अदृष्टस्य नेत्युक्तं । उदू अयाँ उपवक्तेव । अयानितिकिं । उदेति सुभगः । रजेषितं । विसर्जनीयस्य प्रश्लेषो निपात्यते । इन्द्रेषितं । रजेषितं । धनर्चं । उत्तरपदादि लोपः । हिरण्यस्तु नावीणां धनर्चं यावचैनमपूर्वत् । विचक्रमे शतर्चसं महित्वा । दशोणये । अत्र पञ्चसु औकारे प्राप्ते ओकारो निपात्यते । दशोणये कवयेऽर्कसातौ । दशशिप्रे दशोण्ये । वाचं दूतो यथोहिषे । पिबा दध्यग्यथोचिषे सवेतसुन्दशमानं दशोणिं । स्वरोदयं पिबा इमं । इ पदमेतद्यथागृहीतं भवति । इन्द्र सोमं पिबा इमं । एदं बर्हिः । स्वरोदयमितिकिं । इन्द्र सोमं सोमपते पिबेमं माध्यन्दिनं । रथोऽढ औकारे प्राप्ते ओकारः । एना त तुभ्यं रथोऽढभक्षैः ॥

वीरास एतन तमू अकृण्वंस्तनारिवये·
षपूरोदर्सामे ॥ यन्वर्णसः सरपसः स·
चोत प्रश्चिवर्वीलु उतसन्तवाजी ॥ ३७ ॥

एतानि द्वैपदानि यथागृहीतं भवन्ति । पगावीरास ए-
तन । इकारस्य एत्वं । तमू षष्ठएवन्त्वेषा । दीर्घत्वं ।
षष्ठएवन्निर्तिकं । तम्वभिप्रगायत । एवेन्नु कं सिन्धु-
मेभिस्तरेव । एत्वं । एकारौकारपरौ चेति सन्धा-
दिविहितप्रतिषेधः । प्रैषयुर्न विद्वान् । एकारे प्राप्ते-
ऐकारः । अन्तर्मही बृहती रोदसीमे । प्रगृह्यसन्धेर-
पवादः प्रश्लेषः । यन्वर्णसीनसः । पद्यादेरकारलोपो
दीर्घस्य वा ह्रस्वः । सरपसः सरपसंस्तरायेति पूर्ववत् ।
स्वस्तिभ्रामहे सचोतैधि । सन्धादिविहितः प्रतिषेधः ।
उपधीव प्रगृह्यस्य प्रश्लेषः । वीलू उत प्रतिष्कभे । दी-
र्घत्वं । पर्त्वांइव प्रामृजः सप्तवाजी । प्रश्लेषो निपा-
त्यते ।

अश्विनेव पविोपवमनानां महो आ·
दित्या उपमामिवेतयः ॥ स्तोतव अ·
व्यञ्च सुजाइयध्यै सचे न्द्रसानि अ·

ऽय्यै स्वधामिता ॥ ३८ ॥

एतानि पदानि यथागृहीतं भवन्ति । दह्रा वाणीभिरश्वेनेव । मघादिविहृतेः प्रतिषेधः । एत्वं च । अग्निष्वात्तानां पौर्णोपवसनानां । विसर्जनीयस्य लोपः प्रश्लेषश्च । निपात्यतइतिसर्वत्र । मह्यामादित्यौ अदितिं । अकारस्यौत्वं । आते चिकित्र उषसामिवेतयः । ऐकारे प्राप्ते एकारः । वीतिष्टोत्र अंव्यं । अभिनिहिताभावएकारस्य च अत्वं । मातुर्नमौसुपमृजाद्यध्यै । पात्वं । ब्रह्म च नौवमौ सचन्तः मघादिविहृतेः प्रतिषेधः । पुत्रा पवित्रे अधिमानो अव्यये । औकारस्य पात्वं । अनुस्वधामिताद्बमीयते । अग्न्यादिपाठात्प्रकृतिभावे प्राप्ते प्रश्लेषः ॥

गोओपशागो ऋजीकप्रवाहौमनीषा आत्वा पृथिवी उत द्यौः ॥ मनीषा वस्यूरणया इहात्र बृहतीइवेति च यथागृहीतम् ॥ ३९ ॥

इत्येतानि पदानि यथागृहीतं भवन्ति । इतिकारः समाप्तिवचनः । चकारः समुच्चयार्थः । गोओपशागोऋजीकयोरुभयोः प्रकृतिभावो निपात्यते । प्रवा-

दवचनाल्लिङ्गविभक्त्योरनुपलक्षणं । या ते अष्ट्रा गोओपशा । अस्मादिदेवं गोऋजीकमन्धः । इमा हि वाम्गोऋजीकाः । अवोगुपभामनोषा आत्वा, प्रकृतिभावः । सिन्धुः पृथिवी उत द्यौः । प्रकृतित्वं । द्यौरितिकिं । स्वर्यं, अच्छा बृहती मनोषावस्यः । अदादित्वे प्राप्ते प्रश्लेषत्वं । उक्थेषु रणया इह । दीर्घत्वं, कदावसो-स्तो १ इयत आवमचादिर्वचनः प्रतिषेधः । बृहती इव सूनवे रोदसी । प्रगृह्यलक्षणतः प्रश्लेषे प्राप्ते प्रकृतित्वं । यथागृहीतग्रहणं च काकाक्षिवदुभयत्र सम्बद्धं उपरिष्टादधस्ताच्च ।

योनिमारैगगादारैगादैरैगारिद्वर्यो-णआवृणक् ॥ हन्त्यासदुपआरापतम-नायुधासआसता ॥ ४० ॥

एतानि पदानि यथागृहीतं भवन्ति । स्वमा स्वस्मि-न्या यस्यौयोनिमारैक् । योनिग्रहणं किं । स्वर्यं । क-शीतीस्त्यागादारैक् । आरैक्पन्थां यातवे सूर्याय । निर्विशेषेणोपादानमर्थचोदि ज्ञापनार्थम् । दुर्योणआहू-वाङ्ग्स्वभ्रवाचं । दुर्योणइति किं । वज्रेण हत्वा इणक्स विश्वाणः । हन्ति रक्षो हन्त्यासदहन्तं । हन्तीति किं । चतस्र मे । अश्वेदपआपितं । उपइतिकिं । अनायु-

धास भासता सचन्तां। अनायुधास इतिकिम्॥ ८॥

अस्त्वा सतो निराविध्यदभ्यादेवं क आसतः॥ न्यावृणङ्नकिरादेवोऽ न्याविध्यदेनमायुनक्॥ ४१॥

एतान्यपि यथागृहीतानि। असन्नस्त्वासतं इन्द्र-वक्ता। अस्त्वितिकिं। देवानां पूर्व्ये युगे सतः। सतश्च योनिमसतश्च। निराविध्यद्गिरिभ्यआ। निरितिकिं। भुवद्विश्वमभ्यादेवमोजसा। अभीतिकिं। मनेमि त्व-मस्माद्दादेवं। क आसतो वचसः सन्ति। कइतिकिं। सतश्च योनिमसतश्च। इन्द्रो यः शुष्णमशुषन्न्यावृणक्। नीतिकिं। वज्रेण हत्वा वृणक्। ययोः आचन किरा-देवमोहते। नकिरिति किं। अदेवोपदभ्नोविष्ट। न्याविध्यद्दिलीविशस्य। नीतिकिं। यमेन दत्तं त्रित-एनमायुनक्। एनमिति किं। अयं रथमयुनक्सप्तर-श्मिम्॥

अहिहन्नारिणक्पथ आयुक्षातामुदा-वताः॥ रिस्फमारैग्य आयुक्त कुरु अव-णमावृणि॥ ४२॥

एतान्यपि यथागृहीतानि। योधौलीनामहिह-

मारिषकपथः। परिष्कन्निति किं। पायुक्ता मप्नुभा। उदावता त्वक्षसा। नजाम्येतान्योरिस्फमारैक्। रि- स्फमिति किं। य पायुक्ता तु जागिरा। यदिति किं। पयुक्ता मप्नुम्युवः। कुच चवपमाहुविराजानं। अथ येषां विशेषणपदानां उदाहरणानि न विद्यन्ते तेषां छन्दः परिपूर्तिफलं। योनिमारैगित्यादीनि पदानि यानि तेषु दीर्घत्वं चादिस्वरस्य निपात्यते॥

शुनश्चिच्छेपं निदितं नराव्राशंसंपूष- णम्॥ नराच शंसं दैव्यं ता अनानुपू- र्व्यसंहिताः॥ ४३॥

शुनश्चिच्छेपं निदितं मण्डलात्। नराशंसं पूषणम- गोह्मम्। नरा च शंसं दैव्यं च धर्तरि। ता अनानुपूर्व्य- संहिताः। नन्वेतेषां पदानां यदाऽनुपूर्व्येण संहिता- स्ति। संहितापदप्रकृतिः पदान्यपदादिभिः इत्यव- केतीत्यस्यापवादः। तज्ज्ञाप्रयोजनं अनानुपूर्व्य पद- सङ्घ्यदर्शनात्॥(11|13)

यतो दीर्घस्ततो दीर्घा विवृत्तयः॥

स्वरान्तरं विवृत्तिरित्युक्तं तत्र यतो दीर्घस्वरो भवति पुरस्तात्पश्चादुभयतो वा ततो दीर्घवृत्तयो वेदितव्याः।

गोषाइंद्रोन्वषाषति । यन्नानयत्परावतः । ताग्रापोदेवी-रिह्णा । विविधान्युदाहरणानि ॥

## द्विषंधयस्तूभयतः स्वरस्वराः ॥४५॥

द्वौसंधीयासांविहृत्तीनां ताद्विसुंधयः तास्तूभयतः स्व-रावेदितव्याः । मध्यगतस्वरस्य उभयतःस्वरौयासांविह्न त्तोनांताउभयतः स्वरस्वराः । अभूदुभा उ अंशवे ॥ तस्मा उ अद्य । मंत्राप्रयोजनं । अर्धचौंते कुर्यु रधोद्विषंधौ

## प्राच्यपंचालउपधानिभोदयाः शाकल्यस्यस्थविरस्य ॥ ४६ ॥

प्राच्यपंचालपदवृत्तयोरधस्ता त्प्रतिपादिताविहृत्तयः तासांशाकल्यस्यस्थविरस्यमतेन किंचिदुच्यते । प्राच्यपं-चाललक्षितानांविहृत्तीनां उपधाः तन्निभाः ताहृशाउ-दयाथासां तास्तथोक्ताः । एषदेवोअमर्त्यः । आंगिरसो जुह्व वाजे अस्मिन् । नो अह्प्रविंदसि ।

## इतरास्थितिः ॥ ४७ ॥

इतरातु अस्माकंशाकलानांस्थितिः प्राकृतोदयत्वंना-म । एषदेवः आंगिरसोजुव्हे । नोअह ॥

## इति वजटपुत्रोव्वटकृतौ प्राति-शाख्यभाष्ये संहितापटलंद्वितीयम ॥

## उदात्तश्चा नुदात्तश्च स्वरितश्चत्रयः स्वराः आयामविश्रम्भाक्षेपैः स्तउच्यंते ॥ १ ॥

प्रथमपटले संहितापरिभाषामनुक्रम्य द्वितीयेनसंहितागतलोपागमवर्णविकारानुक्त्वा अथेदानींस्वरसंधिमाह ॥ उदात्तश्चानुदात्तश्चस्वरितश्च संक्षेपतःस्वरास्त्रयोवेदितव्याः । इदानींतानुपलक्षयितुमाह ॥ आयामविश्रंभाक्षेपैस्तउच्यन्ते ॥ आयामोनाम वायुनिमित्तमूर्ध्वगमनंगात्राणांतेनउच्यन्ते सउदात्तः ॥ विश्रंभोनाम अधोगमनंगात्राणां वायुनिमित्तं । नः नी । आक्षेपोनाम वायुनिमित्तंतिर्यग्गमनंगात्राणां । क्व न्यक् ।

## अक्षराश्रयाः ॥ २ ॥

स्वरोक्षरमित्युक्तं । अक्षरमाश्रयीभूतंयेषांतेतथोक्ताः ॥ स्वराणामक्षरैः सह धर्मधर्मिभावसंबंधो नतुव्यंजनैः ।

## एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ॥ ३ ॥

उदात्तानुदात्तौस्वरौ तंयोस्तयोः स्वरितः स्वरो निष्पद्यतइत्यतआह । एकाक्षरसमावेशेसति पूर्वयोरुदात्तानुदात्तयोः स्वरितःस्वरोनिष्पद्यते । तेवर्धंतस्वतवसः । आ त्वाणोस्य । सुचावहृतंचम्वीव । व्यंवकंयजामहे । इन्द्रः सर्पिरासुतिः ।

## तस्योदात्ततरोदात्तादर्धमात्रार्धमेववा ॥ ४ ॥

तस्यस्वरितस्यस्वरस्य, द्विस्वरसंभूतस्यपृथक्श्रुत्यादयकथनंक्रियते । उदात्तात्मकाद्यात् उदात्ततराआदावर्धमात्रावेदितव्या ॥ व्यंबकं । अर्धमेववा । अर्धमात्रा-

वत् हिमात्रिस्यस्वरस्याधमयमुदात्तांशः कथितः। तेवधंत।

# अनुदात्तः परः शेषः स उदात्तश्रुतिः।

स्वरितस्य परः शेषोयदर्धमात्रो यदिमात्रिकः सउदात्तश्रुतिः। उदात्तवच्छ्रूयते। यथात्वपुनामयोः संयोगेसति कांस्यस्यधात्वंतरस्योत्पत्ति रेवमिहापिद्रष्टव्या।

# नचेत्। उदात्तं वोच्यते किंचित्स्वरितंवाक्षरंपरं॥ ५॥

चेच्छब्दो यदार्थे॥ यदिनभवति उदात्तमक्षरं स्वरितंवापरं। तेवधंत। दिवीवचक्षुः,। द्रुनन्नः सर्पिरासुतिः। यदि उदात्तंस्वरितंवापरंस्यात्, तदायोनुदात्तः परः शेषः स्यात्। सचकंप्रदत्युच्यतेवत्स्टचे:। नयोयुक्छतितिष्यो ३। यथादिवो ३ क्षरारंत। अभी ३ द्मेकमेकः। अहन्य १ न्यंसहसा॥ उदात्तपरस्योदाहरणं। शतचक्रंयो ३ ह्यो वर्तनिः। स्वरितपरस्योदाहरणं एवंचकृत्वा उदात्तपूर्वाः सर्वएवास्यकंपाः स्युः। अनुदात्तपूर्वेषुक्रियमाणेषुमात्राधिक्यं स्यात् सचदोषः। अयथामात्र वचनं स्वराणामितिदर्शयति चोदात्तपूर्वत्वंकंपनंक्रमइतो। स्वरैकदेशंस्वरितस्य चोत्तरंपदानिहन्यादिति।

# उदात्तपूर्वं स्वरितमनुदात्तंपदेक्षरं॥ ६॥

एवमुदात्तानुदात्तसंधौ वीनृस्वरानभिधायाथेदानीमेकपदप्रभवा नाह। स्वरितानुदात्तस्वरूपव्याविख्यासया। सर्वस्मिन्नेवपदे एकाक्षरमुदात्तंवास्वरितंवाभवति॥ शेषमनुदात्तमेयं तावदुत्सर्गः। सर्वानुदात्तैस्वरूपं तथाक्षु-

दात्तेर्वा स्वरितेत्यपदेशः स्यादुदात्तं क्रियते ॥ स्यादुदात्तं इंद्र । मध्योदात्तं । अग्निना । अंतोदात्तं । यान् । कः । आदिस्वरितं । स्वर्णरे । मध्यस्वरितं । हृदय्यया । अंतस्वरितं । कन्या । स्वरितएव । क्व । स्वः । द्विरुदात्तं । बृहस्पतिः । त्रिरुदात्तं । इंद्राबृहस्पती । सर्वानुदात्तं । वः । नः । एतेएकादशस्वराः पदेषुप्रत्येतव्याः तत्प्रतिपादनार्थमाह । एकस्मिन्पदे उदात्तपूर्वं स्वरितमक्षर मनुदात्तंप्रत्येतव्यम् ॥ सांहितिकस्यायंधर्मो नुदात्तस्यसतः उदात्तपूर्वस्य । इंद्रः । होता ॥

## अतोन्य त्स्वरितंस्वारं जात्यमाचक्षतेपदे ॥ ७ ॥

अतः प्रकृतादुदात्तपूर्वात्स्वरितात्स्वरा दन्यदेकस्मिन्नेवपदे स्वरितंस्वारं तज्जात्यमाचक्षते । व्यालिप्रभृतयः । किमन्य त्पदमवाभिप्रेतं ? अपूर्वत्वंवानीचपूर्वत्वंवा । अपूर्वोदाहरणं ॥ स्वः । क्व । न्यक् । नीचपूर्वस्य । कन्या । हृदय्यया । जात्यस्वरूपेणैवोदात्तानुदात्तसंगतिंविना जातोजात्यः । यत्तूक्तं । स्वरितस्योदात्तानुदात्तसंगतिरिष्यते । तदुदात्तपरस्यैवा नुदात्तसत्फलं । तस्य उदात्तपरस्य स्वरितपरस्यचकंपः । कन्या ३ वारवायती । क्वा ३ भीशवः ।

## उभाभ्यांतुपरंविद्या त्ताभ्यामुदात्तमक्षरं ॥ ८ ॥

## अनेकमप्यनुदात्तम् ॥ ९ ॥

तुशब्दोविशेषार्थः । उभाभ्यांतु आद्योदात्तपूर्वाभ्यांतु परंविद्यात् ताभ्यांपरंजानीयात् ॥ उदात्तमक्षर मुदात्तश्रुतिरुदात्तव द्विप्रचितः श्रूयते । अनुदात्तमनेकमपि बहून्यप्यक्षराणि । अत्राप्येतदेवकथ्यते ॥ यथा सर्वस्मिन्नेवपदे एकमक्षरमुदात्तं स्वरितंवाभवति । शेषमनुदात्तमिति ॥ तत्प्रचयंभवति।उदात्तात्परं अनुदात्तं स्वरितं स्वरितात्परंप्रचयंभवतीत्यर्थः । माद्यस्व । भद्व्रतप्रमतिः ॥

## नचेत्पूर्वन्तथागतात् ॥१०॥

चेच्छब्दोयद्यर्थे । यदिनभवति पूर्वंतथागतादक्षरात् स्वरितगतादुदात्तगताद्वा।स्वरितत्वंप्राप्तादुदात्तत्वं वाप्राप्तात् यदि पूर्वंनभवति॥ यदित्वेवंभूताक्षरात्पूर्वंभवति ॥ अथप्रकृत्यैवाऽवतिष्ठते ॥ माद्यस्वस्वर्णरे । भद्व्रतप्रमतिर्वसिष्ठः ।

## उदात्तवत्येकीभाव उदात्तंसंध्यमक्षरम् ॥ ११ ॥

इदानीं पदांतपदाद्योः संधौ उदात्तानुदात्तस्वरितप्रचितानां बलाबलमाह । यस्मिन्नेकीभावे परंपूर्वमक्षरंवोदात्तं भवति । इतरस्तुचतुर्णांस्वराणा मन्यतमः स उदात्तवानेकीभावः तस्मिन्नुदात्तवत्येकीभावे उदात्तंसंध्यक्षरंजानीयात् ॥ द्वयोरुदात्तयोः । तानिनराजुजुषाणोपा । वृद्रेहिंमत्स्यंधसः । अत्र मध्यगतणाकार उदात्तोधस्तनं स्वरितमुपरितनं चानुदात्तमुदात्तीकरोति ॥(१)शरदोनयातींद्रः । प्रचितउदात्ते नलुप्तः ।

---

(१) नयाति इन्द्रः ।

अनुदात्तोदये पुनः स्वरितं स्वरितोपधे ॥ १२ ॥

उदात्तस्ताव स्वरांलुंपत्यथस्वरितोनुदात्तं लुंपत्येतद्दर्शयति। अनुदात्तोदये पुनरयंविशेषः। स्वरितपरोनुदात्तः स्वरितमापद्यतेक्षीरसर्पिर्मधूदकं।

ऋकारयोश्चप्रश्लेषेक्षैप्राभिनिहितेषुच।
उदात्तपूर्वरूपेशाकल्यस्यैवमाचरेत्॥१३

ह्रस्वयोरिकारयोः प्रश्लेषेक्षैप्रसंधिषुचाभिनिहितसंधिषुच अविशेषेण उदात्तपूर्वरूपेष्वनुदात्तोतररूपेषु शाकल्याचार्यमतेन एवमाचरेत्। एवमितिस्वरितनिर्देशः। स्रुचीवघृतं। योजान्विन्द्रतेहरी। तेवर्धंत। ऋकारयोरितिकिं। सद्योजज्ञानोविहीमिद्धोअख्यत्। उदात्तपूर्वरूपेष्वितिकिं। उतेमाहुर्नैषोअस्तीत्येनं। सतुवस्त्राण्यध। हिरण्यशृंगोयोअस्य।

मांडूकेयस्य सर्वेषु प्रश्लिष्टेषुतथास्मरत्॥ १४ ॥

मांडूकेयाचार्यस्यमतेनसर्वेषुप्रश्लिष्टेषुउदात्तपूर्वरूपेषु-(१)तथाचरेत्। नकुर्यात्। इंद्र। विश्वोमिद्रः।

इत्त्येकीभाविनोधर्माः॥ १५ ॥

एवंप्रकाराः एकीभाविनांअक्षराणां धर्माः प्रत्येतव्याः।

(१) उदात्तंकुर्यात्स्वरितमित्यर्थः।

उदात्तवत्स्येकीभावेत्यतआरभ्य समाप्ताविति शब्दः।

**परः प्रथमभाविनः ॥ १६ ॥**

परस्तूदात्तैः एकीभावंप्राप्यते प्रथमभाविनः स्युः। द्वयोरप्याचार्ययो र्मतेनउदात्तभाविनः स्युः ॥ उदात्तवत्स्येकीभावे इत्येतद्विप्रथमसूक्तं ॥ आच्याजानु। प्रास्यपारं

**उदात्तपूर्वं(१)नियतं विवृत्याव्यंजनेनवा ॥ स्वर्यतेंतर्हितंनचेदुदात्तस्वरितोदयं ॥ १७ ॥**

उदात्तः पूर्वोयस्मात् इत्युदात्तपूर्वः। उदात्तपूर्वं नियतंअनुदात्तं विवृत्या व्यजनेनवा अंतर्हितमक्षरंस्वर्यते। यथेंद्र। अग्निमीळेपुरोहितं। इंद्रेणासंहि। नचेदुदात्तस्वरितोदयमितिकिं। ज्यादियंसमनेपारयंती। इंद्रसोमंसोमंसोमपतेपिबेमं। क्व १ वोऽश्वाक्वा ३ भीशवः।

**वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहितौचतान् ॥ प्रश्लिष्टंच यथासंधिः स्वरानाचक्षते पृथक् ॥ १८ ॥**

विवृत्तौभवावैवृत्ताः। स्वरांतरंतु विवृत्तिरित्युक्तं। तिरोंतर्धानंव्यञ्जनंयस्येतितैरोव्यञ्जनः। क्षैप्राभिनिहितौचप्राश्लिष्टं तानेतान्यथासंधि। ~~(यस्मिन्संधौयथासंधि)~~तद्यथा क्षिप्रसंधौभवः क्षैप्रइत्यादिस्वरान्कथयंति। व्या-

(१) निहतमिति कपुस्तकपाठः।

लिप्रभृतय: । पृथक्नाना । एतेचाधस्तात्सोदाहरणा: प्रतिपादिता: संज्ञार्थं पुनर्वचनं ।

**स्वरितादनुदात्ताना**
**मपरेषांप्रचय:स्वर: ।**
**उदात्तश्रुतितांयांत्येकं**
**द्वेवा बहूनि वा ॥ १९ ॥**

स्वरितात्परेषामनुदात्तानां प्रचय: स्वरोभवति । संहितायां प्रचय: स्वरोभवति । संहितायां प्रचय: स्वरो ऽधस्तान्नप्रतिपादित इत्यत आह । उदात्तश्रुतितांयांति उदात्तश्रुतीनिभवंति एकमक्षरं द्वेवाअक्षरे बहूनिवाक्षराणि । अग्निमीळे । नासत्याभ्यांबर्हिरिव । इमंमेगंगेयमुनेसरस्वति । वाजेवाजे वत वाजिनोन: ।

**केचित्त्वेकमनेकंवा**
**नियच्छंत्यन्ततोक्षरं ।**
**आवाशेषात् ॥ २० ॥**

तुशब्दोविशेषणार्थ:। केचित्त्वाचार्या एकमक्षर मनेकं वाक्षरं द्वे अक्षरे वा नियच्छंतिनीचीकुर्वंति । अंततआरभ्य निमित्तमेवोदात्तं स्वरितंविनेत्यर्थ: । आशेषाद्वा यावदेकमक्षरं मनेकंवा अक्षरं द्वे नियच्छंति । एकेनापिप्रचितस्वरूपंदर्शितंभवत्येवेत्यर्थ: ।

**नियुक्तं तूदात्तस्वरितोदयं ॥ २१ ॥**

तुशब्दोवधारणार्थ: । सर्वएवाचार्या नियुक्तंनिश्चित

मविप्रतिपत्त्यांतुअनुदात्तंकुर्वंति । उदात्तोदयं उदात्त-परंस्वरितपरंच । वाजेवाजेवत वाजिनोनोधनेषु । तमे-वऋषिं तमुब्रह्माणा माहुर्यज्ञन्यम् ।

नियमंकारणादेके प्रचयस्वरधर्म-वत् । प्रचयस्वरआचारः शाकल्यान्यतरेतयोः ॥ २२ ॥

नियमंनियमनं अनुदात्तभावं कारणादेकेमन्यंतेआ-चार्याः । किंतत्कारणमितिचेत् प्रचयस्वरधर्मयुक्तं मध्य-यनं यथास्यादिति । यदिहि उदात्तस्वरितोदयं प्रचितं-नानुदात्तम्भवेत् । अथ प्रचितोदात्तयोः कोविशेषः स्या-दिति । प्रचितोहि स्वरितोदात्तपरो ऽनुदात्तोभवति नतूदात्तः । एवंचकृत्वा, प्रचितस्वरे आचारोयं शाक-ल्यस्या न्यतरेयस्यच एतत्कारणकोद्रष्टव्यः । उक्तान्ये-वोदाहरणानि ।

परिग्रहत्वेनार्षान्ता त्तेनवैकाक्षरीकृतात् । परेषान्यसमाचारं व्यालि स्तौचे त्स्वरौपरौ ॥ २३ ॥

तुशब्दोविशेषणार्थः । एतावानेवविसंवादो यस्तमेन स्वरलक्षणेन सहपरिग्रहोवेष्टकः । एतावान्वेष्टकेविशेषः । अनार्षान्ता दनार्षइतिकरण उच्यते । सयद्यक्षरआद्युदा-त्तः पराश्चासस्यमध्येवर्तमानः पूर्वपदांतमादिनास्पृशति । द्वितीयपदादिमंतेनस्पृशति । तस्यायंविकारः परस्प-

धिकृतः । सचउत्तरपदादि व्यंजनादिस्वरादिर्वाभवति । यदिव्यंजनादि सदाप्रचयेप्राप्ते अयमपवादः । अनार्षोदितिकरणा त्परेषामक्षराणां न्यासमनुदात्तत्वमाचार्यंमन्यते व्यालिराचार्यः । यदातु स्वरादिर्भवति तदानेनस्वरादिना एकाक्षरीकृतात् परेषांन्यासमेतितुल्य । तौयदिस्वरौपरौभवतः । उदात्तस्वरितौ ॥ सत्यानृते-इतिसत्यानृते । अवपश्यन् । सुप्राव्य ऽ इतिसुप्रऽअव्यः । तेनैवैकाक्षरीकृतात् । अललाभवंतीरीत्यललाभवंतीः । तौचेत्स्वरौपराविति किं । शतक्रतोइतिशतऽक्रतो । अविहर्यंतक्रतोइत्यविहर्यंतक्रतो ।

यथासंधीयमानाना
मनेकीभवतांस्वरः ।
उपदिष्टस्तथाविद्या
दक्षराणामवग्रहे ॥ २४ ॥

इदानीमवग्रहस्वरूपस्वरं यथायेनप्रकारेण संधीयमानाना मेकीक्रियमाणाना मनेकीभवतां प्रश्लेषमनापुवतां विहृत्तिव्यंजनतिरस्कृतानां स्वरउपदिष्टः । उदात्तपूर्वं नियतंविहृत्या व्यञ्जनेनवा । स्वर्यतेंतर्हितं । स्वरितादनुदात्ताना मित्यादिना च । तथान्वक्षराणा मवग्रहे विजानीयात् । ननु प्रोविहृत्तौ स्वरउक्तः सइहभवत्येव । कस्मादयत्नः कृतः । मात्राकालत्वा द्वग्रहानंभावोऽस्तिति । उषःऽउषः । नावाऽइव । गणऽपतिं । गोऽपते । पुरःऽहितं । अनेकीभवतामितिकिं । अन्हाम्हा ।

पद्यादींस्तु द्युदात्तानां
मसंहितवदुत्तरान् ॥ २५ ॥

पद्यं पदार्थम् । द्युदात्तानां पदानां पद्यादीनुत्तरान-संहितवत् संहितवर्जनीयान् । स्वरविधौ । ऋतस्य पथा-मन्वेतवा उ नेषागव्यूतिरपभर्तवा ऽउ । द्युदात्तानामिति-किं । यज्ञपते गोपते उर्वरापते ।

जात्यवद्वा तथा वान्तौ
तनूशचीति पूर्वयोः ॥ २६ ॥

जात्येन तुल्यं जात्यवत् यथा जात्यस्यान्तो निहन्यते । उ-दात्ते परभूते । एवं तनूशचीपदयोः पूर्वपद्ययोः सतोरं-तो निहन्यते । तथा वान्तौ कुर्यात् । यथा भक्त्या प्रति-पादितं । तनूनपादुच्यते गर्भआसुरः । इन्द्रं कुत्सो-वृत्रहणं शचीपतिं । असंहितवद्वा कुर्यात् । तनून-पादुच्यते इन्द्रं कुत्सो वृत्रहणं । संहितवद्वा कुर्यात् । तनू-नपादुच्यते । वृत्रहणं शचीपतिं । पृथक्त्वा । यदुच्चा-रणं तुल्य योगनिवृत्त्यर्थम् । तेनैव तस्मिन्न जात्यवदेवा ध्ययनं यथाख्या दितरयोर्माभूदिति । द्युदात्तानामेव । तनूनपात्पथऋतस्य । शचीपते शचीनां । ननु पदा-नां लक्षणं न कर्तव्यं । सिद्धेषु हि पदेषु संहिताप्रवृ-त्तिः । सत्यं । यथा पुष्पाण्याहृत्य फलाहरणं । यथा वा दार्वाहारस्य मध्वाहरणमेवं तत् ।

त्रिमात्रयो रुत्तरयो रत्यापि प्र-
चयस्वरे। माचन्यस्ततरैकेषाम् ॥ २७ ॥

चीर्षिस्त्रिमात्राद्ययुक्तानि तन्त्रिमात्रयो रुत्तरयोरंत्यापि मात्राप्रचयस्वरे वर्त्तमाना एकेषामाचार्याणाम्मतेन न्यस्ततरानीचतरास्यात् । उपरिस्विदासी ३ त् । नत्वाभी-रिवविंदती ३ं ॥

## उभेव्यालिः समस्वरे ॥ २८ ॥

व्यालिस्त्वाचार्य उभेअंत्येमात्रे उभयोस्त्रिमात्रयोरि-तराभ्यांसमस्वरे मन्यते । प्रचितस्वरइत्यर्थः । स्विदासी-त् । विंदती ३ं

## असंदिग्धान् स्वरान्ब्रूयात् ॥२९॥

संदेहोनाम अस्पष्टता । उदात्तानुदात्तस्वरित प्रचि-तान्स्वरान् नसंदेहः । नवक्रान्ब्रूयात् ।

## अविक्रष्टान् ॥३०॥

अविक्रष्टोनाम सुश्लिष्टता स्वराणां स्वरैःसहस्वरसं-धीनुपश्लिष्टान् कुर्यादित्यर्थः ।

## अकंपितान् ॥३१॥

कंपितान्कंपनंनाम स्वराश्रितपाठदोषः प्रायेण द्र-विणात्यानां भवति । तस्मुपसंलक्ष्यसवर्ज्यः ।

## स्वरितं नातिनिर्हन्यात् ॥३२॥

नातिप्रेरयेत् । स्वरितमा क्षेपेण ।

## पूर्वौनातिविवर्तयेत् ॥३३॥

पूर्वावुदात्तानुदात्तौ उक्तौ नातिविवर्तयेत् । आया-मविस्रंभाभ्यां नातिदूरंनयेत् ।

जात्योऽभिनिहितश्चैव क्षैप्रःप्रश्लिष्टएवच । एतेस्वराः प्रकंपंतेयत्रो-च्चस्वरितोदयाः ॥

इतिपार्षदव्याख्यायांआनंदपुरवास्तव्योव्वटकृतौप्रातिशाख्यसूत्रभाष्येतृतीयंस्वरपटलम् ॥

स्पर्शाः पूर्वेव्यंजनान्युत्तराण्यास्थापितानामवशंगमंतत् ॥१॥

चत्वारःसंधय स्तथाहिपूर्वेस्वराः व्यंजनान्युत्तराणि ॥ अनुलोमान्वक्षरसंधयःपूर्वाणि व्यंजनान्युत्तरेस्वराः प्रतिलोमाअन्वक्षरसंधयः । स्वरसंधिस्तु प्रश्लेषाद्यनेकप्रकारउक्तः । इदानीं परिशिष्टोव्यञ्जनसंधिरुच्यते । स्पर्शाःपूर्वेव्यञ्जनान्युत्तराणि । आस्थापितानां संधानमवशंगमन्नाम तत्संधानंवेदितव्यं । अवद्वयोर्व्यञ्जनयो रविकारः सम्नवशङ्गमःसंधिः । आरैक्पंथांयातवे । वषट्तेविष्णावास । सूर्यायत्प्रत्येशंसंतीं । तद्वामजानन्पुवः । इर्ममिवक्रमश्रुधी हवं । आस्थापितव्यञ्जनसंधयउक्ताः । तेचद्विविधाः । तत्रावशंगमाउक्ताः । वशंगमाअथवारभ्यः

घोषवत्पराः प्रथमा[illegible]तीयान्स्वान् ॥२॥

घोषवद्व्यञ्जनपराः प्रथमाः स्पर्शाः तृतीयान्स्पर्शान्स्वानापद्यंते । स्ववर्गीयान् । वक्ष्यवदंति । 'आपतु-

भिरोषधिः । यद्वादिवि । स्वानुत्तरसूत्रार्थकृतं इकारोऽस्थान्त- रमितिपरिभाषयापिसिध्यति (see 1.56. P.41)

## उत्तमानुत्तमेषूदयेषु ॥३॥

(अद्योत्पूर्वजातिरेक अनुनासिको वा । 1/4/45)

प्रथमस्पर्शाः स्वानुत्तमानापद्यन्ते । उत्तमेषूदयेषुस- त्सु । अर्वाङ्नरादैव्येन । वराम् । अतिसूर्यं । तन्नो- मित्रोवरुणः । स्वानित्युच्यतेपरवर्गीयेष्वपिपंचमेषूदयेषु- सत्सुपदान्तीयपंचमोयथास्यान्नतुपरकीयपंचमः । स्पष्टा- र्थं । सूत्रांतरं ।

## सर्वैः प्रथमैः स्पर्शैरुपधीयमानः शकारः शाकल्यपितुर्मतेनछका- रमापद्यते ॥ ४ ॥

प्रथमागंतमर्वाक्छ-फाविव । तनायंसोमः स्वमेच्छ- वाङ्क्छ्वत्तमं ॥ घनेनवच्चिच्छ्रथिष्ठमिवान् ।

## पदान्तैस्तैरेवतृतीयभूतैस्तेषांच- तुर्थानुदयोहकारः ॥५॥

पदस्यांतैरेवप्रथमैः स्पर्शैः (नतुङकारेघोषोष्मपरेइत्ये- वमादिरतः) पदान्तैस्तृतीयत्वंप्राप्तैरुपहितोहकारः तेषा- मेवप्रथमानांचतुर्थानापद्यतेउदयभूतःशाकल्यपितुर्मतेन । आतूनइन्द्रमद्र्यग्घुवानः । वावाड्ढव्यानि (पदान्तैस्तैरेव- तृतीयभूतैरित्यवाच्यं । हकारस्यचतुर्थभावंकृत्वापश्चाद्घोष- वत्पराः प्रथमास्तृतीयानित्यनेनतृतीयभावंकरिष्यामस्त- थातावद्रूपंभवति । लघुचसूत्रं स्यान्नैतदस्ति । परस्प-

दादेरदृष्टत्वात् (तृतीयभावो दुर्लभः स्यात् । तस्मात्सा-धूक्तांपदांते तेरेवैव तृतीयभूतेरिति)

विस्थानेस्पर्शउदयेमकारः सर्वेषा-मेवोदयस्योत्तमंस्वम् ॥६॥

विस्थाने अन्यस्थानेस्पर्शेउदयेमकारः सर्वेषामेवाषा-यीणांमतेनउदयभूतस्योत्तमंपंचमंस्वमापद्यते । यकुमार-नवंरथं । अहङ्कृत्वङ्कृत्वहन् । तन्तेमाता । विस्थानग्र-हणांचसंधिज्ञापनार्थं । पवर्गेतु अवशंगमेनभवतीति ।

अंतस्थासुरेफवर्जंपरासुतांतांपदा-दिष्वनुनासिकान्तु ॥७॥

सएवमकारोंतस्थासुपदादि भूतासुरेफवर्जितासुपरा-सुसतीषुतांतामंतस्थामापद्यते । यदिनामानुनासिकां । यंय्येंयुजं । भद्रं वोल्लिप्सीः । तंवद्वंद्रं नसुक्रतुं । पदादिग्र-हणांक्रियतेपदमध्येवशंगमसंधिनिवृत्त्यर्थम् । अम्यक्सात-द्वंद्र । नोवमकारस्यांतस्थाभावः ।

तथानकारउदयेलकारे ॥८॥

तेनैवप्रकारेणनकारोलकारे परभूतेलकारमेवानुना-सिकमापद्यते । भूवण्णौवयोजिगीवोल्लक्षमादत् ।

ञकारंशकारचकारवर्गयोः ॥९॥

सएवनकारः ञकारमापद्यतेशकारेचवर्गेप्रत्ययेपरे । घनेवृवृञ्ज्ञिञ्छथिहि । मघवञ्छग्धि । भास्माञ्जगम्यात् ।

तकारोजकारलकारयोस्तौ ॥१०॥

। तकारः ञकारलकारयोः परभूतयोस्तावेवापद्यते । ञकारे ञकारं लकारे लकारं । प्रयोञ्जिगासि । अंगादंगाल्लोम्नोलोम्नः ।

## तालव्येऽघोषउदयेचकारं ॥११॥

चकारछकारशकारा अघोषास्तालव्याश्च एतेषुतकारश्चकारमापद्यते ॥ तच्चचुः । वह्वथमस्तियच्छर्दिः । तच्छंयोरा । तालव्यादितिकिं । तत्सावतयामसि । अघोषइतिकिं । यद्याम्नि । यद्वोदेवाः ।

## छकारंतयोरुदयःशकारः ॥१२॥

तयोनकारतकारस्थाननिर्दिष्टयोः ञकारचकारयोरुदयभूतः शकारश्छकारमापद्यते । घनेववज्रिञ्छ्नथिहि । तच्छंयोः । ननुचसर्वैः प्रथमैरुपधीयमानः इत्यनेनसिद्धं चकारादुत्तरस्यशकारस्यछत्वं । सत्यंसिद्धं यदिनामशाकल्यस्यापितुमतेननैवंवक्तव्यं ।

## नशाकल्यस्य ॥१३॥

नतुशाकल्यस्याचार्यस्यमतेनशकारश्छकारमापद्यते । वज्रिञ्श्नथिहि । तच्शंयोः ।

## तानिवर्गमानि ॥१४॥

तानिशब्दलोपोद्रष्टव्यः । छंदोवत्सूत्राणिभवंति । तानिसंधानानिवर्गमानिवेदितव्यानि । घोषवत्पराः प्रथमस्तृतीयानित्येवमादीनि । यस्मापितानांमध्येनद्यवापठितानियानिव्यञ्जनानिसंयोगंगच्छंति । अतोवर्गमानीत्युच्यंते ।

रेफोष्ममणोरुदययोर्मकारोनुस्वा-
रन्तत्परिपन्नमाहुः ॥१५॥

रेफेऊष्मणिचउदयभूते मकारोनुस्वारमापद्यते तस्मं-
स्थानंपरिपन्नमाहुराचार्याः वशंगमस्यैव द्वितीयासंज्ञा-
कार्यार्थाकृता।"सेतिचास्यपरिपन्नोपधाचेत्।"परिपन्नंप्रा-
कृतमूष्मसंधिमित्यादिना। वशंगमानीत्यस्याप्यत्रयोगोयु-
क्तरूपः। छंदोभंगभयादधस्तादुक्तः। होतारंरत्नधातमम्
त्वांहत्यदिंद्राणांसातौ। इंद्रोहंति वृषभंशंडिकानां। वसुं-
सूनं सहसः। एवमेव वशं व्यंजनसंध्यनंतरमागमानाह।

ङकारेऽघोषोष्मपरे ऽन्तरेके ककारम्॥१६॥

ङकारेऽघोषोष्मपरेसतिअन्तराङकारस्याघोषोष्मणाश्च
एकेआचार्याः ककारमागममाहुः। तवायंसोमस्त्वमेह्य-
र्वाङ्क्शश्वत्तमं। प्रत्यङ्क्सविश्वाभुवना। अघोषग्रह-
णांकिं। दध्यङ्हयन्मध्वाथर्वणः। ऊष्मग्रहणांकिं। प्रत्य-
ङ्चित्वाविभ०।

टकारनकारयोस्तु आहुःसका-
रोदययोस्तकारम्॥१८॥ उः शि ३९५।नक्ष।४।३।२९-

टकारनकारयोःपुनःसकारोदययोरंतरातकाराग-
ममाहुरेकेआचार्याः। यत्रेत्वंवित्त्वेचविदंध्वप्राट्त्सप्रेति।
त्वंतान्त्संचप्रतिधासि।

ञकारेशकारपरे चकारं॥१९॥ शि ३९६।अ७।७।

नकारस्थानगत ञकारग्रहणं। ञकारेशकारपरेसति।

अंतराचकारमागममाहु रेकेचाचार्याः । घनेवचश्चिकित्सु थिह्यमिवान् ।

## तेऽन्तःपाताः ॥२०॥

अंतर्मध्येपदयोःपतंतीत्यंतःपाताः एतेंतःपातसंज्ञाः संधयोवेदितव्याः । ङकारेघोषोष्मपरेंतरैकद्दत्यादयः ।

## अकृतसंहितानामूष्मांतानां पटलेस्मिन्विधानं ॥२१॥

येषामूष्मांतानांपदानामधस्तात्संधिर्नविहितः तेषामिहपटले संधानमधिकृतंवेदितव्यं । ओकारंह्रस्वपूर्वंत्वचरिफौघोषवत्परःप्रत्येतव्योनतुस्वरपरस्तद्यथा । एषदेवोरथर्यति । नत्वेषदेवोअमर्त्यइति ।

## चित्कम्भनेनोष्मलोपः ॥ २२ ॥

चित्कंभनेनेत्यत्र सकारलोपोनिपात्यते । चास्कंभचित्कंभनेन|चिद्विष्कयादिहनभवति । उपद्यास्कंभथुःस्कंभनेन।

## ककुह्मान् ॥ २३ ॥

ककुह्मानिति हकारोनिपात्यते । स्वानुत्तमानुत्तमेषूद्दयेष्वितिनकारेप्राप्ते । सुमोदगर्भोवृषभः ककुह्मान् ।

## सम्राट्शब्दः परिपन्नापवादः ॥२४॥

सम्राडित्ययंशब्दः परिपन्नस्यवशंगमस्यसंधे रपवादभूतोज्ञातव्यः । विराट्सम्राड्विभ्वीः । शब्दग्रहणं संपूर्वस्यराजतेरेकपदीभूतस्यमवंप्रत्ययांतस्य सर्वविभक्तिकस्य सर्वलिंगयुक्तस्यच ग्राहकंभवति । सम्माजंत-

मञ्जरीणां । समाजावस्य । समाजेस्य । समाजोरव-
आक्रधो । समाजौ(?)ख्यरेभव। एकपदार्थत्व|इहमाभूत् ।
संराजभोरलभेयाय ।

## विसर्जनीय आकारमरेफीघोष-
## वत्परः ॥ २५ ॥

सन्ध्योपधोविसर्जनीयआकारमापद्यते । अरेफीरेफर-
हितः। घोषवद्व्यञ्जनपरः ॥ पुनानायंस्यनिविशमानाः ।
रिफितस्यसंधिर्वक्ष्यति । घोषवत्परइतिकिं । ताँवि
श्वरूपाः पशवः ।

## ओकारं ह्रस्वपूर्वः ॥ २६ ॥

सन्ध्योपधोविसर्जनीयो ह्रस्वपूर्वओकारमापद्यते । घो-
षवत्परः सन् । देवोदेवेभिरागमत् । अरिफितइत्येव ।
प्रातर्जितंभगं । घोषवत्परइत्येव । यःपंचचर्षणीरभि ।

## तौसंधीनियतप्रश्लितौ ॥ २७ ॥

तावेतौ संधीनियतप्रश्लितसंज्ञितौ वेदितव्यौ । पूर्वो-
नियतः संधिर्विसर्जनीयआकारमिति|द्वितीयप्रश्लितः ।
ओकारंह्रस्वपूर्वइति ।

## सर्वोपधस्तु स्वरघोषवत्परोरेफीरे-
## फी तेपुनारेफसंधयः ॥२८॥

सर्वोपधो दीर्घोपधो ह्रस्वोपधश्च| स्वरघोषवत्परश्चरे-
फीविसर्जनीयोरेफमापद्यते । तेपुनःरेफसंधयउच्यंते ।
स्वरपरः । प्रातरग्निंप्रातरिंद्रंहवामहे । वारिम्यंडुकाः ।

अग्निरक्षि । शंनोदेवीरभिष्टये । घोषवत्परः । प्रातर्मि
त्रावरुणा । अग्निर्वीरं । अश्वावतीर्गोमतीर्नउषासः --
स्वरघोषवत्परइतिकिं अग्निस्तुविश्रवस्तमं ।

## रेफोदयोलुप्यते ॥२९॥

रिफितोविसर्जनीयोरेफोदयःसन् लुप्यते । युवोरजां-
सिसुयमासोअश्वाः ।

## द्राघितोपधाह्रस्वस्य ॥३०॥

ह्रस्वपूर्वस्य रिफितस्य विसर्जनीयस्य रेफोदयस्यलुप्य-
तेविसर्जनीयः । उपधादीर्घमापद्यते । प्रातारत्नं । अ-
ग्नीरक्षांसि ॥

## अकामनियतावुभाविमौ ॥३१॥

अकामस्चनियतस्च उभाविमौसंधीप्रत्येतव्यौ ।
कामः । द्वितीयोनियतः ।

## अघोषेरेफारेफीचोष्माणांस्पर्शउ-त्तरे ॥ तत्सस्थानमनूष्मपरे ॥३२॥

अघोषेस्पर्शउत्तरेरेफीअरेफीचविसर्जनीय ऊष्माणा-
मापद्यते । तस्याघोषस्यपरत्वावस्थितस्य समानस्थानं ।
अनूष्मपरेस्पर्शे । ऋषिःकोविप्रः । यःककुभः ॥ अग्निश्चमो-
म । यद्वोदेवाश्चकृम । देवास्तत्सर्वे । सनःपर्षत् । अनूष्मपरइ-
तीति । मरुःचोणस्य । शतक्रतुःत्सरत् ।

## तमेवोष्माणमूष्मणि ॥३३॥

अघोषेऊष्मणिपरत्वावस्थिते तमेवोष्माणमापद्यते वि-

सर्जनीयः। योवशिवतमः॥ देवीरुर्वीः। येनसपत्नाः। अघोषइतिकिं। अग्निर्होता॥

## प्रथमोत्तमवर्गीयेस्पर्शेवा ॥३४॥

विकल्पतःतत्समस्थानमूष्माणमापद्यते विसर्जनीयोरेफारेफीच। यःककुभः। यःपंच।

## ऊष्मणिचानते ॥३५॥

अघोषेऊष्मणिच अनते त्वमूर्धन्यापत्तिर्नति रित्युपरिष्टाद्वक्ष्यति। विकल्पतोविसर्जनीयःस्यात्। योवः। देवीःषलुर्वीः। येनःसपत्नाः। अनतइतिकिं। निष्षिष्वरीस्ते। व्यापन्नऊष्मसंधिः सविक्रांतः प्राकृतोपधः॥ व्याशुद्वविसर्जनीयोविक्रांतः। व्यापन्नेऊष्मसंधिः सवेदितव्योनाम्ना। यत्रविसर्जनीयोव्यापद्यते। विक्रांतसंधिस्तुप्राकृतोपधोवेदितव्यो विसर्जनीयःश्रूयते।

## ऊष्मण्यघोषोदये लुप्यतेपरेनतेपि ३६

ऊष्मणिपरे कथंभूते? अघोषोदये नते ऊष्मवि-सर्जनीयोलुप्यते। समुद्रस्थः॥ प्रवस्पट्। कस्विद्वृत्तः। निष्ठनिद्धि। अघोषोदयइतिकस्मात्। देवीःषट्। त्रिःसमाङ्गः। किमर्थमिदमुच्यते। वयःषकारामाभूवन्निति। नैतदस्तिप्रयोजनं। प्रतिषिध्यंतेद्विर्वचनं। नतूष्मास्वरोष्मपरइति। एवंतर्हि परस्यद्विर्वचनार्थं। ऊष्मणीवेति।

## सोन्वक्षरसंधिवक्रः ॥३७॥

संधिरन्वक्षरवक्रसंज्ञोवेदितव्यः। तत्रक्रमः॥ संधिशब्दोद्रष्टव्यः।

अव्यापत्तः कखपफपुत्त्वान्तः ॥३८॥

कखपफेषुपरत्वावस्थितेषु अव्यापत्तिरेवहृत्तिः ॥ यः कृतदित् । अगस्त्यःखनमानः । यःपंच ॥ याःफलिनीः । वृत्तिग्रहणंयथाशास्त्रं तथापाठप्रवृत्त्युपलक्षणार्थं । तथाहि ।"प्रथमोत्तमवर्गौ येस्पर्शेवोष्मणि अव्यापत्तिः कखपफेषुवृत्तिरित्येवमादयोविकल्पाव्यवतिष्ठंते । यत्रचैकः पाठोभिमतस्तत्रयत्नंकरोति संधिविक्रांतएवैषइति । तस्माद्वृत्तमेवार्थः प्रत्येतव्यः ।

रेफंस्वर्धूःपूरघोषेष्वविग्रहे ॥३९॥

रेफमापद्यतेअघोषेषुप्रत्ययेषुपरेषु स्वरादीनांविसर्जनीयोरेफमापद्यते । स्वः धूः पूः अघोषेषुप्रत्ययेषु । अविग्रहेऽपृथक्पदेसति । स्वः । काव्येनास्वर्चनाः । तिष्ठद्रथंनधूर्षदं । मित्रायुवोनपूर्पतिं । अविग्रहइतिकिं । स्वःसनिष्यवः । पूश्चपृथ्वी । ॥

नाचाइन्दुःस्वधितीवाहएवभूम्यादददेहोभिरुपर्वसूयवः । आवर्त्तमोहोराचाप्यदोपितोप्रचेताराजन्वर्त्तिनीरहेतिच ॥४०॥

इतिचविसर्जनीयो यथाप्राप्तंनभवति अतःनिपात्यते । परिष्यसुवानोअचाइंदुः । रेफलोपः । प्रस्वधितीवरीयते । मोतसूरोअहएव । दिविषभूम्याददे । ददइतिकिं ॥

भूमिरावपनंमहत्। अक्षोभिरद्भिः। तांत्वासुषर्वसूयवः। गावोनन्नजंव्युषाआवस्तमः। अहोरात्राणिविदधत्। यद्दोपितोअजगन्। त्रयनस्सभ्यमसुरप्रचेताराजन्। अनुष्ठनीसचतेवर्तनीरह।

यथादिष्टं नामिपूर्वः षकारंसकारमन्योरिफितः ककारे। मकारेच प्रत्ययेंतःपदंतु सर्वत्रैवोपाचरितः ससंधिः॥४१॥

यथादिष्टं यथोक्तमापद्यते। वक्ष्यमाणेसंधौ नामिपूर्वोविसर्जनीयः षकारमापद्यते। सकारमन्यःअनामिपूर्वः अरिफितश्च ककारेपकारेंतःपदंतु सर्वत्रैवैतदधिकृतंवेदितव्यं। उपाचरितसंज्ञः ससंधिर्वेदितव्यः। अयोयुयंस्थनिष्कृतौः। यातंछर्दिष्पाउतनःपरस्पा। निकाव्यावेधसश्शश्वतस्कः। यथादिष्टमितिकिं। यःपंच। अरिफितइतिकिं। भोजान्जिग्युरंतःपेयं। उपाचरितसंज्ञायाः प्रयोजनं। प्लुतोपाचरितेनतिः॥

अंतःपादं विग्रहेकारपूर्वः पतिश्रव्देह्यक्षरेपुंस्प्रवादे॥४२॥

अंतःपादमित्यधिकारवचनं। विग्रहइत्यंतःपदंतु सर्वत्रैवेत्यस्यनिवृत्त्यर्थं॥ इकारपूर्वोविसर्जनीयः सकारमापद्यते। पतिशब्देप्रत्ययेद्व्यक्षरं पुंस्प्रवादेपुंशब्दस्यवाचिनि। उत्तिष्ठन्नुषसस्पते। वाचस्पतिंविश्वकर्माणमूतये। अंतः

पादमितिकिं । तंजानतंजानतीःप्रत्युदायन्नुषासःपतिः अकारपूर्वइतिकिं । अधीषमाणायाःपतिः । इत्वरमितिकिं । ऋतस्यनःपतयोमृडयंतु ॥ पुंस्प्रवादइतिकिं । अतःपत्नीदंशस्यत । शब्दग्रहणंपुंस्प्रवादग्रहणंचोत्तरं ।

## करंकृतं कृधिकरत्करित्यपिपरेषु ॥४३॥

करं । कृतं । कृधि । करत् । कः । एतेष्वपिपरेषु अकारपूर्वोविसर्जनीयः सकारमापद्यते । अहंन्य १ न्यं-सहसासहस्करं । सोमंनचारुं मघवत्सुनस्कृतं । उ-रुणस्कृधि । कुविन्नोवस्यसस्करत् । निकाव्यावे-धसःशश्वतस्कः ।

## पादांतगतेपरीतिच ॥४४॥

पादांतप्राप्ते परीत्यस्मिन्पदेपरभूते अकारपूर्वोविस-र्जनीयःसकारमापद्यते । तदुत्तानपदस्परि । पादांतगत-इतिकिं । यदोषधीभ्यःपरिजायते । अकारपूर्वइतिकिं दक्षाद्दितिःपरि ।

## असोंतोरेफवतः पारशब्देपरिकृ-तानिकरतीतिचैषु । अपादांती-येष्वपिप्रत्ययेषु ॥४४॥

अरेफवतोरेफरहितस्य असइत्यस्यांतः सकारमा-पद्यते । पारशब्देपरभूते परिकृतानिकरतीति एषुपर-भूतेषु अपादांतीयेष्वपिसकारमापद्यते । अतारिष्मत-मसस्पारमस्य । इंद्राविष्णूअपसस्पारेअस्य । अविष्करं-

तंमनसस्परिध्यया। कृतानि इंद्रस्येव प्रतवसस्कृतानि करति सुपेशसस्करति। असोंतइतिकिं। सुजातासः परिचरंति। सद्योअस्याध्वनः परमस्पृथ। यदोषधीभ्यः परि। अरेफवतइतिकिं। रजसः पारंईखितं। पादांताधिकारनिवृत्यर्थं अपादांतीयग्रहणं।

## वास्तोरित्येतत्पतिशब्दउत्तरे॥४५॥

यथाप्राप्तमुपाचरति। शब्दग्रहणं लिंगविभक्तिवचनग्रहणार्थं। वास्तोष्पतेध्रुवास्थूणा। वास्तोष्पतिंव्रतपांनिरतक्षन्।

## आविर्हविर्ज्योतिरित्युत्तरश्चेत्ककारः॥४६॥

आविः। हविः। ज्योतिः। एतेषांविसर्जनीयः षकारमापद्यते। उत्तरोयदिककारः स्यात्। आविष्कृतंमहित्वना। हविष्कृणुध्वमागमत्। ज्योतिष्कर्तायदुश्मसि।

## अथोपांतपश्यंतिशब्दौ॥ ४७॥

अपिचपांतपश्यंतिशब्दौ यद्युत्तरौभवतः। एतेषामेवशब्दानां अथविसर्जनीयः षकारमापद्यते। पांतं। हविष्पांतमजरं। पश्यंति। ज्योतिष्पश्यन्ति। शब्दग्रहणमुत्तरार्थं।

## इलायागानमसोदेवयुर्द्रुहोमातुरिलस्तानिपंदप्रवादे॥ ४८॥

इलायाः। गाः। नमसः। देवयुः। द्रुहः। मातुः

इ्ल: । तान्येतानि प्रश्नादेउपाचरितंलभते । इडाया-
स्पदेसुदिनत्वेअन्हां । यत्रतेचिह्नास्पदेभ्योदात् । उपो-
एनंजुजुषुर्नमसस्पदे ॥ प्रवोछारिरिचेदेवयुष्पदं । मा-
नस्तेनेभ्योयेअभिद्रुहस्पदे । मातुष्पदेपरमेअंति । इल-
स्पदेसमिध्यसे ।

पूर्वः पुरः पूरितिपूर्वपद्यान्पदानि-
चापोद्यनवैतदेवम् ॥ ४६ ॥

पूर्वः । पुरः । पूः इत्येतान् पूर्वपद्यान् अपोद्यपरिव-
र्जयित्वा पदानि नववक्ष्यमाणानि वर्जयित्वा, एतदुपचा-
रप्रकरणं विहितमेवंप्रत्येतव्यं । अपवादविधिरयं सामा-
न्यविधेः प्रभवितुमर्हति । अंतः पदंतुसर्वत्रैवास्यविधेस्ता-
वदयमपवादः । पूर्वः पूर्वीयजमानोवनीथान् । पुरः प्र-
स्रवणावर्लि । भिनायुधोनपूर्पतिंसुशिष्टौ । ननु रेफस्वर्धूः
पूरघोषेष्वविग्रहे इत्यनेनैव सिद्धत्वादिति यद्योदयेत्तंप्र-
तिब्रूमः । प्रतिकंठंतावन्नभवति । येन सर्वापवादकंस्यात् ।
सर्वापवादकं हितत्पठितं "सर्वशास्त्रार्थं प्रतिकंठसूत्रमि-
ति । अपवादस्तुविसर्जनीयस्यभवति । रेफमापद्यतेवि-
सर्जनीयः । स्वर्धूः पूरघोषिष्विति । अयमप्युपाचरितापवा-
वादएव । अन्तः पदंतु सर्वत्रैवेत्यस्योत्सर्गस्य । अतोद्वयो-
रुत्सर्गयोद्वावपवादौ युक्तावुपाविति नातिरिक्तं ॥ इदानीं-
नवपदान्युच्यंते ।

अस्यायः सामावृहताऽस्यपूर्व्य-
उरुज्योतिर्जातइमोवृधोन्यः ॥५०॥

अस्याय:। दीर्घायुरस्याय: पति:। अस्याइतिकिं। यस्यातिवीर्यीणां। सोम:।सोम: पतीरयीणां। इडत:। अद्ध्वीरस्यइडत: पतिभू:। अस्यपूर्व्य:। उतनोअस्यपूर्व्य: पतिर्दन्।अस्येतिकिं। अहंभुवंवसुन: पूर्व्यस्पति:। उरुज्योति:। उरुज्योति: कृणुहिमत्सिदेवान्। उर्वितिकिं। ज्योतिष्कर्त्तायदुस्मसि॥ जात:। भूतस्यजात: पतिरेकआसीत्। इम:। उपत्वेम: कृधिनोभागधेयं। इध:। इंद्रासिसुन्वतोइध: पतिर्दिव:। अन्य:। स्विष्टमद्यान्य:करत्।

## ब्रह्मणो ह्वेवातस्ततो विदु वसुः पशु रेतानिकविशब्दउत्तरे॥५१॥

ब्रह्मण:। वातस्ततइतिद्वेपदे। विदु:। वसु:। पशु: एतानिउपाचारंलभन्ते। कविशब्देपरभूते। ब्रह्मण:। रत्नाणोब्रह्मणस्कवे। अग्नेवातस्तस्कवि:। इ इतिकिं। पवमानस्तत: कवि:। विदु:। प्रमर्षिष्टाभिविदुष्कवि: सन्। वसु:। सद्यानोवसुष्कवि:। पशु:। पशुष्कविरग्यचायमान:। शब्दग्रहणात् प्रातिपदिकमात्रंगृह्यते।

## पथिशब्दे जिन्वथश्चेतथोमहः।५२।

पथिशब्देप्रत्यये जिन्वथश्चेतथोमहइत्येतानि उपाचारंलभंते। शब्दग्रहणात् प्रातिपदिकमुक्तार्थम्। जिन्वथ:। आवर्त्तनिंमधुनाजिन्वथस्पथ:। चेतथ:। विश्वांअनुस्वधयाचेतथस्पथ:। मह:। कदर्यम्णोमहस्पथा।

## पृथुशब्देविश्वतोवीलितोरजः।५३।

पृथुशब्देपरभूते विश्वतोवीलितोरजइत्येतेषांविसर्ज-

नीयः सकारमापद्यते । विश्वतः । गिरिर्नविश्वतस्पृथुः पतिर्दिवः । वीलितः । रभ्रचोदः श्नथनोवीलितस्पृथुः । रजः । विद्यामेषिरजसस्पृथ्वसा ।

## कामपोषपूर्धिशब्देषुरायः ॥ ५४ ॥

कामपोषपूर्धिइत्येतेषुपरभूतेषु रायइत्येतत्पदंउपाचरति । कामः । रायस्कामोवज्रहस्तं । पोषं । रायस्पोषं यजमानेषु(१)। पूर्धि । रायस्पूर्धिस्वधावोस्ति ।

## पादादिरंतश्चदिवस्परीतिच ॥५५॥

दिवस्परीत्येतद्वैपदंनिपात्यते । पादादौपदांतेच वर्त्तमानं । दिवस्परिसुग्रथितंतदादः । अयंसयोदिवस्परि रघुयामापवित्रवा । पादादिरंतश्चेतिकिं । वृष्टिंदिवःपरिस्रव । ननुषकारपूर्वविसर्जनीयानुवृत्तौ सत्यां पदांतगतेपरौत्यनेनैवसिद्धत्वात् । यदिहांतश्चदिवस्परीत्युच्यते । तदतिरिक्तमिति । नातिरिक्तंतस्यावकाशःदिवोषंतेयस्य इत्यादिष्वेवंइहांतग्रहणेनैव द्वैपदंनिपातितः स्यात् । पादादावेवनतु अंतेतस्मान्नातिरिक्तं ।

## दिवस्पृथिव्या अधमस्पदीष्टपूर्वपादादौयदि ॥५६॥

दिवस्पृथिव्या अधमस्पदीष्टएतद्वैपदंनिपात्यते । यत्रपूर्वंद्वैपदंपादादौयदिस्यात् । दिवस्पृथिव्याः पर्योजउद्धृतं । विश्वस्यजंतोरधमस्पदीष्ट । पूर्वपादादावितिकिं । प्रये-

---

(१) सुधारयेति क्वपुस्तकपाठः ।

दिवःपृथिव्यानवृंहणा ।

सस्पदीष्ट ॥५७॥

एतद्वैपदंनिपात्यते । योनोद्वेष्टग्रधरःसस्पदीष्ट ।

श्रवसोमहःसहसइलायाःपात्वि-
त्येकंपुत्रशब्देपराणि ॥५८॥

श्रवसः । महः । सहसः । इलायाः । पातु । एकं । इत्येतानिपदानिउपाचरंति । किमविशेषेणेत्याह । पातुइत्येतस्मिन्पदेपरभूते एकं प्रथमं पदमुपाचरति । पुत्रशब्देपराण्युपाचरंति । श्रवसः । वाजोनुतेश्रवस्पुत्रवंतं । महः । महस्पुत्रासोग्रसुरस्यवीराः । सहसः । सहसस्पुत्रो-ग्रद्भुतः । इलायाः । इलायास्पुत्रोवयुनेजनिष्ट ।

रायस्खांमहस्करथोमहस्परंनि-
ष्कव्यादंनिष्कथनिष्पिपर्तन ॥५९॥

इत्येतानिपदानि द्वैपदानिनिपात्यते । सरायस्खामुपसृजागृणानः । महस्करथोवरिव । कस्विदस्यरजसोमहस्परं । निष्कव्यादमनोनशत् । यदामर्यतिनिष्कथ । निष्पिपर्त्तन । विश्वस्मान्नोग्रंहसोनिष्पिपर्त्तन ।

कबन्धंपृथुकणवासः पुत्रः पातु पथा-
पथः । पायुः पृष्ठंपदंतेषां प्रवादा-
उदयेदिवः ॥ ६० ॥

कबंधं । पृथु । कणवासः । पुत्रः । पातु । पथा । पथः ।

पायुः । पृष्ठं । पदं । इत्येतेषांपदानां प्रवादाः उदयेव-र्त्तमाना दिव इत्येतस्यपदस्य उपाचारंजनयंति । दि-वस्कवंधमवदर्षदुदिणां । पृथु । अरिचंवांदिवस्पृथु । को शासः । दिवस्कशासइंदवः । पुत्रासः । दिवस्पुत्रास-असुरस्यवीराः । पातु । सूर्योनोदिवस्पातु । पथा । दि-वस्पथावध्वः । पयः । दिवस्पयो दिधिषाणा अवेषन् । पायुः दिवस्पायुर्दुरोणपुः । पृष्ठं । दिवस्पृष्ठं भंदमानः सुमन्मभिः । पदं ।(१) अभिप्रियादिवस्पदं ।

## रजसस्पात्यंतस्पाथाः कस्काव्याच-तुरस्कर । स्वादुष्किलनिस्पातुद्यौ ष्पितर्वसतिष्कृता ॥ ६१ ॥

एतानिपदानि यथागृहीतं निपात्यंते । विषक्रमे र-जस्पात्यंतौ । अंतस्पथाः । अरिफितस्य विसर्जनीयस्य य-दुक्तमंतः पदंतुसर्वत्रैवेति तदिहरिफितस्यदृश्यते । अ-तोनिपात्यते । अंतस्पथाअनुपथाः । कस्काव्यामरुत-कोइपौंस्या । कनिष्ठआह चतुस्करेति । स्वादुष्किलायं । सरस्वती निदस्पातु । द्यौ ष्पितःपृथिवि । वसतिष्कृता । पर्णोवोवसतिष्कृता ।

## तपोष्पवित्रं चिष्पृत्वौ धीष्पीपाय विभिष्पतात् । द्यौष्पिता रजस-स्पृष्टो ददुष्पजाय नस्करः ॥६२॥

---

(१) अभिप्रियाद्दिवस्पदा इतिचपाठः ।

एतानिपदानिनिपात्यन्ते । तपोष्पवित्रं विततंदिव-स्पदे । अपालामिंद्र त्रिष्पूत्वी। धीष्पोपाय इहदिवेषु मा-नुषा । यद्वांरथो विभिष्पतात् । द्यौष्पिताजनितासत्यमु-क्षन् । धर्त्तोदिवो रजसस्पृष्ट ऊर्ध्वः । ददुष्पज्राय साम्ने । अधास्वंहि नस्करः ॥

## वसुष्कुवि न्मनुष्पिता, पितुष्पिता, पितुष्परि । प्रणस्पुरो, मयस्करं, नभस्पय, स्त्रयस्परः ॥६३॥

एतेचोपचरिा यथागृहीतंभवंति । वसुष्कुवि द्वसुभि-काममावरत् । यामथर्वा मनुष्पिता । गर्भेमातुः पितु-ष्पिता । अहमिद्धि पितुष्परि । सद्धवाद्व प्रणस्पुरः । प्रे-तिकिं । भद्रंभवातिनः पुरः । मयस्करत्परतरेचना-क्षन् । हरिरोपशंकृणुति नभस्पयः । येत्रिंशति त्रयस्परः ।

## नकारआकारोपधः पद्यांतोपि स्व-रोदयः । लुप्यते ॥६४॥

अतउत्तरं नकारविकारा उच्यंते । ईमित्यंतलोप ए-षदयेत्वस्मान्मकारलोपात्प्राक् । आकारोपधोनकारः पृथ्यांतोःपद्यांतोपिच विग्रहाभिकारनिवृत्त्यर्थंपद्यांतग्रहणं। अंतःपादाधिकारानुवृत्त्यर्थंच । स्वरोदयःसन् लुप्यते । स-र्गांइवसृजत सुष्टुतीरुप । महांइंद्रो यआदा चर्षणिप्रा। आ-कारोपधइतिकिं । केतुंकृण्वन्नकेतवे । स्वरोदयइतिकिं पयोदृष्ट्वान्विधावतोश्वरान्तन् । अंतःपादाधिकारानुवृत्तिः किं , तयेहविभ्रवां अवसे वजवानासादय ।

अजांजग्रसाना अधन्वा न्देवहूतमान् । वद्बधानां इंद्रसोमांस्तृषाणान्नो देवदेवान् । हंतदेवांइतिच ॥६५॥

पादान्तेएतेषुपदेषुनकारालुप्यन्तेपादांतीशार्थआरंभः। अजान् । आसूर्योवृहतस्तिष्ठदज्जांऽऋजु । जग्रसानान् । सृजःसिंधूंरहिनाजग्रसानांआदित् । जधन्वान् । त्वमपोयदृवेजघन्वांअत्यांइव । देवहूतमान् । युक्ष्वाहिदेवहूतमांअश्वांअग्ने । वद्बधानान् । त्वमुत्यांऋतुभि र्वद्बधानांअरंहः । इंद्रसोमान् । यथापिबःपूर्व्यांइंद्रसोमांएव । इंद्रेतिकिं । सुन्वंतिसोमान्पिबसित्वमेषां तृषाणान् । धन्वान्यज्रांअपृणक्तृषाणांअधोक् । नोदेवदेवांअच्छ । हंतदेवान् ॥ यजामहैयज्ञियान्हंतदेवांईळामहै । हंतेतिकिं । यथायजऋतुभिर्देवदेवानेव ॥ इतिच ॥

एताअन्यदाःपदवृत्तयः ॥६६॥

एतास्त्वाज्जानित्यादिका अधस्तनाश्च नकारोपध इत्यादिका अन्यदाःपदवृत्तयउच्यंतेनादिताः ।

विवृत्यभिप्रायेषुचपीवोअन्नांरयिवृधः । दधन्वांयो जुजुवांयः स्ववांयातुदद्यांवेति ॥६७॥

विवृत्यभिप्रायेषुच संधिषु नकारआकारोपधोलुप्यते । अंतस्थाव्यञ्जनोदयइत्येषु पदेषु । पीवोअंनारयिवृधः

सुमेधाः । दधन्वाँयोनर्यो अप्स्व १ तरा । नृनुन्नाँयो सु-हुरायुवाभूत् ॥ सुमृळीकः स्ववाँयात्ववाङ् । दस्माँवाय-त्युष्यतिरेवयाः ॥

हतं, योनौ, वचोभि, र्यां न्युवन्यू-न्वनिषीष्टेति । ईकारोकारोप-हितो रेफमेषु ॥६८॥

हतं । योनौ । वचोभिः । यान् । युवन्यून् । वनिषी-ष्ट । एतेषुपदेषु प्रत्ययभूतेषु ईकारोकारोपहितस्सनकारः रेफमापद्यते । उत्पर्णीँहतमूर्म्यो मदन्ता । योनौविदस्यूँ र्योनावकृतत्थापात् । पर्णीँवचोभिरभियोधदिंद्रः । स-खी यँाइन्द्रचकृषे । युवन्यून् । रुद्रस्यसूनूँ युवन्यूंरुदश्याः वनिषीष्ट । प्रियँाअपिधीँ वनिषीष्टमेधिरः ।

स्वरेषुच ॥ ६९ ॥

स्वरेषुप्रत्ययेषु ईकारोकारोपहितो नकारोरेफमाप-द्यते । रश्मीँरिवयच्छतं । अभीशूँरिवसारथिः । परिधीँर-तिताँ इहि । वध्रूँरिमाँ अबरान् । अंतः पादाधिका-रानुवृत्ते रिहनभवति । पतोनधाग्द्धनतिधीनतः ।

दस्यूँरेकोनॄँरभिच ॥ ७० ॥

दस्यूँरेकोनॄँरभिच अनयोस्संहितयो रेफमापद्यते । त्वं-हनुत्यदमायोदस्यूँरेकः । पादान्तार्थतोपारम्भः । नॄँर-भि । येनास्व १ र्णंततनामनॄँरभि । ऋकारोपधत्वा न-कारस्य रेफविधानमेतत् ।

ते स्पर्शरेफसंधयः ॥ ७१ ॥

तएते इतंशोनाविव्याद्यारभ्य स्पर्शरेफसंधयो वेदितव्याः स्पर्शोष्मसंधीन् स्पर्शरेफसंधीनभिप्रायांश्च परिपातयतीत्यादिभिः संज्ञाव्यवहारः ।

नास्मानुपैतावान् स्फुरान्गक्षान्देवान्याड्वहान् । हिरण्ययचक्रान्मायावान् घोषांस्तानश्विनाविद्वान् पयस्वान्पुत्रानाधेह्यायजीया न्यतीनुरोः ॥ ७२ ॥

अस्मानुप । एतावान् । स्फुरान् । गक्षान् । देवान् । अयाट् । वहान् । हिरण्यचक्रान् । मायावान् । घोषान् । तान् । अश्विना । अविद्वान् । पयस्वान् । पुत्रानाधेहि । आयजीयान् । यतीनुरोः । एतेनकाराः प्रकृत्याभवंति । अस्मान् । धेनुर्वागस्मानुपसुष्टुतैतु । उपेतिकिं । प्र.स्मां-अवपृतनासुप्रविन्धु । एतावान् । एतावानस्य महिमा । स्फुरान् । अनुयन्नावः स्फुरान्रुजिप्यं । गक्षान् । गक्षानिद्-दुषोरातिम । देवानयाट् । देवानयाड्ढां अग्निप्रियेते । अ-याडितिकिं । देवाँआवीतये वह । कस्मैदेवा आवहाना-शुहोम । हिरण्यचक्रान् । पश्यंहिरण्यचक्रानयोदंष्ट्रान् । मायावान् । निमायावानब्रह्मादस्युरर्त । घोषाः । आयते-घोषानुत्तारायुगा । तानश्विनाग्निर्मेषोनुमेयः । तानश्वि-ना । तानश्विनासरस्वतीमिन्द्रंसुत्रामाणम् । अश्विनेति किं । तांइन्द्रसहसेपिव । अविद्वान् । अविद्वानित्या-

परश्चेताः ।.पयस्वान् । पयस्वानग्न आगहि । पुत्रानाधेहि । दृशास्यां पुत्रानाधेहि । आधेहीतिकिं । पुंसः पुत्रां उत । धेहीतिकिं । मृग्यंप्रत्युदाहरणं । आदजीयान् । होतुर्होतुरायजीयान् । यतीनुरोः । यतीनुरोः प्रियाधामः प्रियव्रतान्महस्व । सरस्वयतीनुरोः । उरोरितिकिं । मृग्यंप्रत्युदाहरणं ।

चरति चक्रे चमसां श्चोचिच्च-
रसि च्यौल श्चतुरश्चिकित्वान् ।
एतेषुसर्वत्र विसर्जनीयवद्दीर्घो-
पधः ॥ ७३ ॥

चरति । चक्रे । चमसान् । च । चो । चित् । चरसि । च्यौलः । चतुरः । चिकित्वान् । एतेषुपदेषु परभूतेषु सर्वत्र अंतः पादंपदांतिवर्तमानो दीर्घोपधोनकारो विसर्जनीयवत् प्रत्येतव्यः । विसर्जनीयधर्माल्लभते नकारइत्यर्थः । कतमेतेइतिचेत् "अघोषेरेफरेफोचोष्माणां स्पर्शउत्तरे। तस्मिँस्थानुसपरेति । चरति । अंतर्मंश्चां श्चरतिरोचनेन । चक्रे। पर्श्तांश्चक्रे वायव्यान् । चमसां । विभ्राजमानांश्चमसां अहेवावेनत् । च । अस्मांचतांश्च प्रहिनेषिवस्यषा । चो । यांश्चोनुदाधृविः । चित् । तांश्चिद्देवापिगच्छतात् । चरसि । अर्सिमश्चांश्चरश्योजसा । च्यौलः । भुवोनूँश्च्यौलो विश्वस्मिंभरेज्येष्ठश्च । चतुरः । रायःसमुद्रांश्चतुरः । चिकित्वान् । विद्वांश्चिकित्वा न्वयंश्चवर्धसे । दीर्घोपधइतिकिं । अहंचहन्नंनमुचिमुताहन् ।

# अस्माँचमसा न्पशून्न ॥७४॥

अस्मान् । चमसान् । पशून् । नावनकारो विसर्जनीयवत्कार्यंलभते । अस्मांचतांश्चमहि । यदावाख्यच्चमसांचतुरः । पशूंचस्थातॄञ्चरथंचपाहि ।

# तांस्ते सर्व्वांस्तांदेवास्त्वं तांस्त्वायस्त्वावदंस्त्वंच ॥७५॥

एतेषांद्वेपदानां नकारोविसर्जनीयवद्भवति । तांस्ते । तांस्तेअश्यामपुरुकृत्पुरुक्षो । सर्व्वांस्तान् । सर्वांस्तांइंद्रगच्छसि । देवास्त्वम् । देवास्त्वंपरिभूरसि । तांस्त्वायस्त्व । तांस्त्वायस्त्वसहस्र । आवदंस्त्वम् । आवदंस्त्वंशकुनेभद्रं ।

# विसर्जनीयं परेष्विति तेस्पर्शोष्मसंधयः ॥७६॥

येषुपरेषुसंधिषु विसर्जनीयंवयंवक्ष्यामः । येचएतेचरति चक्रादृत्यादयस्त उभयेपिस्पर्शोष्मसंधयो वेदितव्याः । एकत्रस्पर्श एकत्रोष्मेत्यन्वर्थसंज्ञा । एवमधस्तना अपिसंज्ञावेदितव्याः । दिङ्मात्रंत्वेतत् प्रदर्शितम् ।

# न्हँ:पतिभ्योन्हँ:प्रणेत्रं न्हँ:पात्रं स्वतवाँ:पायुः । संधिविक्रांतएवैषः ॥७७॥

एवेत्यवधारणवचनम् । नावद्वितीयः पक्षः । न्हँ:पतिभ्यः । न्हँ: पतिभ्योयोनिंकृण्वाने । न्हँ:प्रणेत्रम् । नाराशंसंन्हँ:प्रणेत्रं । न्हँ:पात्रम् । कादित्यान्हँ:पात्रंदे-

वयतां । स्वतवाँ:पायुः । भुवस्तस्यस्वतवाँ:पायुरग्ने ।

## न्हूँ:पाह्विशृणुधीतिच ॥७८॥

न्हूँ:पाह्विशृणुधीगिर इत्ययंविक्रांतसंधिरेव । शृणुधीतिकिं । रज्ञानॄन्पाह्यसुरत्वमस्मान् ।

## नकारस्यलोपरेफोष्मभावे पूर्वस्तत्स्थानादनुनासिकस्वरः ॥७९॥

नकारविकारानुक्त्वाऽथेदानीं नकारसहचरिता न्स्वरविकारानाह । यत्रयत्रनकारस्य लोपभावउक्तः रेफभावऊष्मभावश्च तत्रतत्र पूर्वोनकारस्थानादनुनासिकःपूर्वः स्वरो वेदितव्यः ॥ स्वरग्रहणं व्यञ्जनानुनासिक्यपरिग्रहार्थं । लोपभावेनकारस्य । सर्गांइवसृजतं । महाँइंद्रोन्तवत् । पीवोअन्नाँरयिवृधः । रेफभावः । रश्मीँरिवयच्छतम । रुद्रस्यसूनूंर्यु वन्यूंरुदश्याः । ऊष्मभावः । महांश्चरस्योजसा । ताँस्त्वमग्नयाम । न्हूँ:पतिभ्योयोनिम् ।

## आदिस्वरश्चोत्तरेषांपदेपि ॥ ८० ॥

उत्तरेषांपदानामादिस्वरोनुनासिकोवेदितव्यः । पदेपीत्यपिशब्दप्रयोगः संहितायामेव तद्विधानमितिद्योतनार्थः ।

## माँस्पचन्या माँश्चत्वेमँश्चतोश्च॥८१॥

माँस्यचन्याः । माँश्चत्वे । मँश्चतोः । एतानिपदानि । माँस्पचन्याः । यन्नीक्षणंमाँस्पचन्याउखायाः । माँश्चत्वे । माँश्चत्वेवापृशनेवावध्रे । मँश्चतोः । अध्नंमंश्चतोर्वरुणस्यबभ्रुं ।

ईमित्यंतलोपएषूदयेषुगर्भंगावो-
वत्सम्मृजंतिपृच्यते। सखायोवि-
व्याचपुनारिणंतिरथमित्यन्वचा-
रसन्धिरेवसः ॥८२॥

इदानींवर्णलोपउच्यते । ईमित्यस्यांतलोपो भवति-
एषूदयेषु सत्सु । गर्भं । गावः । वत्सं । मृजंति । पृच्यते ।
सखायः । विव्याच । पुनः । रिणंति । रथं । इतिकारणः
समाप्तिवचनः । अन्वचारसंधिरेव सोयं वेदितव्यः । यो-
यमस्मात् प्रतिपादितःएषस्य सचस्वराश्च पूर्वइत्यादिकः॥
गर्भम् । यमीगर्भमृतावृधः । गावः । समीगावो मतयोयं-
ति । वत्सम् । समीवत्संनमातृभिः । मृजन्ति । तमीमृज
न्त्यायवः । पृच्यते । समीपृच्यतेसमनेव । सखायः । समी-
सखायो अस्वरन् । विव्याच । समीविव्याच सवनापुरूणि।
पुनः । संवत्सरेवावृधे जग्धमीपुनः । रिणन्ति । एरिणंति
बर्हिषि प्रियंगिरा । रथम् । समीरथं न भुरिजोरहेषत ।

पुरुपृथ्वधिपूर्वेषु शकारउपजाय-
ते । ह्रस्वेचपूर्वपदांते चंद्रशब्दे
परेंतरा ॥८३॥

पुरु । पृथु । अधि । एतेषुपूर्वपदेषु सत्सु ह्रस्वेच पूर्वप-
दस्यांते सति चंद्रशब्देचपरे अंतराशकारागमउपजायते ।
पुरु । महिश्चत्रं पुरुश्चंद्रं विविद्वान् । पृथु । पृथुश्चंद्रमवसे
चर्षणिप्राः । अधि । अधिश्चंद्रं बृहत्पृथु । ह्रस्वेचपूर्वपदांते-

हरिश्चंद्रो मद्दषाः । ह्रस्वग्रहणं विस्पष्टार्थम् । दीर्घांतस्य पञ्चस्यचंद्रशब्दस्याभावात् । पूर्वपद्यांतइतिकस्मात् । अभिचंद्राभर्तवेनोहिरण्या ।

## परीतिपद्ये कृपरे षकारः ॥ ८४ ॥

परीत्येतस्मिन्पूर्वपद्येकृपरेसतिअंतराषकारागमउपजायते । परिष्कृण्वन्निष्कृतम् ।

## वनेतिरेफःसदशब्दउत्तरे ॥८५॥

वनइत्येतस्मिन्पूर्वपद्ये सदशब्दउत्तरे अंतरारेफोजायते । तिष्ठद्रथं नषूर्षदं वनर्षदं ।

## परिष्कृण्वन्ति वेधसः ॥ ८६ ॥

परिष्कृण्वंतीति निपात्यते षकारागमः । परिष्कृण्वंति वेधसअपद्यार्थं वचनं । वेधसइतिकिं । अन्यं प्रत्युदाहरणं ।

## अस्कृतोषसं ॥ ८७ ॥

अस्कृतेति निपात्यते । सकारागमः । निरस्वसार मस्कृतोषसं । उषसमितिकिं । युजंह्या १ न्यमकृत प्रवेपती ।

## शौद्धाचराः संधयएतउक्ताः ॥८८॥

यएते पुरुपृष्ठादय स्तेशौद्धाचरसंज्ञा वेदितव्याः । शौद्धाचरागमोपैतो त्यादिसंज्ञाप्रयोजनं ।

## मेधातिथौ वृरणांत अतान्तौ स्पशांतस्याप्रत्ययौ निरुंसते ॥८९॥

मेधातिथावृषौ । अग्निंदूतंवृणीमहे इत्यारभ्य अस्यनूनमितियावन्मेधातिथिः ॥ वरुणेति यस्यसमासस्थस्य वरुणांतः । एवमेवव्रतांतोपि गृह्यते । स्पर्शप्रत्यये अंतस्थाप्रत्यये निर्दिष्टे । ह्रस्वोभवतः । इंद्रावरुणानूनु वां । इंद्रावरुणयोरहं हुवे । व्रतांतः । युवंदक्षं धृतव्रत मित्रावरुणादूळभं । मेधातिथाविति किं । इंद्रावरुणावामहं हुवे । अस्य । इंद्रावरुणा युवमध्वराय नः । स्पर्शांतस्थाप्रत्यये इति किं । तामित्रावरुणाहुवे ।

## आदित्या देवा वरुणा सुरेति येत्यादिषु ॥ ९० ॥

आदित्या । देवा । वरुणा । असुरा । एतानिपदानि ह्रस्वानिभवंति । या इत्यादिपदेषुपरभूतेषु । तानितु उपरिष्टाद्वक्ष्यंति । अतउपरिष्टा देवोदाशरिष्यामः ।

## वयमित्यत्रमित्रा ॥ ९१ ॥

वयमित्येतस्मिन्पदे परभूते मित्राइत्येतत्पदं ह्रस्वोभवति । मित्रवयंच सूरयः ।

## यासुप्रतीकं निष्कृतं पुरोहितिः क्षत्रं दाशति शवसा भिषज्यथः ९२

या । सुप्रतीकं । निष्कृतं । पुरोहितिः । क्षत्रं । दाशति । शवसा । भिषज्यथः । एते यादयोधस्तादुपदिष्टाः ॥ या । प्रसाक्षितिरसुर यामहिप्रिया ॥ सुप्रतीकम् । उक्षांचक्षुर्वरुण सुप्रतीकं ॥ निष्कृतम् । वक्षित्यादेव निष्कृतमादित्या ॥ पुरोहितिः । इयंदेव पुरोहितिः ॥ क्षत्रम् । युवं-

नीयेषु वरुणाचर्ष ॥ दाशति । इंद्रायोवां वरुणदाशतित्मन् ॥ शवसा । यथादित्यशवसान्नमस्वान् ॥ भिषज्यथः । यद्वादेव भिषज्यथः ॥

## सोचिन्वगस्त्येदशमेचमण्डले ॥६८॥

सोचिदितिनिपात्यते ॥ ओत्वं विसर्जनीयस्य ॥ अगस्त्येऋषौ दशमेचमंडले ॥ सोचिन्नुनमरातिनो वयस्मराम ॥ सोचिन्नुसख्यानर्यं इनस्तुतः ॥ अगस्त्येदशमेच मंडलइतिकिं ॥ सचिन्नवासां पतीरयीणां ॥ सचिद्धिवेदनिहितं ॥

## सान्वीयते ॥६९॥

सान्वीयत्व आत्वंनिपात्यते ॥ सचिकित्वां ईयतेसान्वीयते ॥ ईयतइतिकिं ॥ प्रत्युदाहरणं प्रत्येतव्यं ॥

## सःपलिक्नीः ॥७०॥

विसर्जनीयस्यालोपोनिपातितः ॥ नता अग्रन्नजनिष्टहि षः पलिक्नीः ॥

## हिषस्तव ॥७१॥

अत्रविसर्जनीयस्यालोपोनिपात्यते ॥ नहिषस्तवनोमम ॥ हीतिकिं ॥ सतवोती ॥ नहीत्येतत्पदे हीतियत्पदावयवग्रहणं तच्छन्दोभंगभयात् ॥

## जुगुक्षतो दुदुक्षन्गाअदुक्ष इक्षन्वधे स्यदुक्षतानुदक्षि ॥ दक्षं न

पत्मन्दचुषो भिदच्च त्वक्ष्णासो
दच्चि ह्रियानस्यदचोः ॥७२॥

यथापठितान्येतानिनिपातितानि। जुगुचतः। सुमतिन्न जुगुचतः। दुदुचन्। सहस्रधारां बृहतींदुदुचन्। गाश्रदुचत्। निर्ज्योतिषातमसो गाश्रदुचत्। गादूतिकिं। अधुच्च त्विष्युषीमिषं। दुचन्दघे चरिंयज्ञेमन्दिनं दुचन्दधे। दघदूतिकिं। (१)प्रत्युदाहरणमृग्यं। विश्वाहाशुक्रंपयो अस्य दुचता। अनुदच्चि। त्वम्बिभाश्च नुदच्चि। अन्चितिकिं नीचातंधच्चयतसं। दचंन। दचन्न त्रिप्रवन्तत्षायां। नेतिकिं। द्वविर्नद्रावयतिदारुधचत्। तस्यपत्मन्दचुषः। पत्मन्निति किं। प्रत्युदाहरणमृग्यं। अभिदचत् सयोव्यस्यादभिदचदुर्वीम्। अभीतिकिं। मृग्यंप्रत्युदाहरणं। आदस्यते क्षणासोदच्चि। क्षणासदूतिकिं। नीचातंधच्यतसन्नशुष्कं हि यानस्यदचोः॥ संदृष्टिरस्यहि यानस्यदचोः। ह्रियानस्येतिकिं। धच्चोर्नवाताः परिमन्त्यच्युताः।

इति श्रीपार्षदव्याख्यायां आनन्दपुरवास्तव्यवज्रटपुत्रोव्वटकृतौ प्रातिशाख्येचतुर्थं सन्धिपटलम्।

अन्तः पादन्नाम्युपधं सकारं षकारमप्यूष्मपरैर्यथोक्तं।

(१) निर्धुक्तन्वक्षणाभ्यः सपुस्तकेप्रत्युदाहरणन्दत्तम्।

## अन्यैरेकारात् ॥ १ ॥

अन्तः पादमिति पादस्यमध्ये। नामिनोयस्योपधाभूताः सतथोक्तः सकारः। ऋकारादयोऽनामिनः स्वराइत्युक्तं। सकारः षकारमापद्यते। इत्येतदधिकृतं वेदितव्यं। अनुस्वपरैर्नामिभिरुपहितः अत्ययस्वपरैरित्यधिशब्दः यथोक्तमित्यधिकारोपसंहारवचनं। अन्यैरेकारादितिनामिसामान्यप्रसक्तौ अस्यनिवृत्तिवचनं। यच्चगोषु दुःखान्यम्। अन्तः पादमितिकिं। तन्नइन्द्रस्तइरुणस्तदग्निस्तत्। नाम्युपधइतिकिं। परः सोअस्तुतन्वा ३ तनाच। यथोक्तग्रहणंकिं। ताभियोतिस्वयुक्तिभिः। अन्यैरेकारादितिकिं। येस्यामनोयज्ञियाः।

## नतिरत्रपूर्वात्ततोव्यापत्तिर्भवतीतिविद्यात् ॥ २ ॥

एकस्मिन्विषयेयत्रकार्यद्वयंप्रवर्ततेतत्रावश्यंभावीक्रमः। तत्रयथायोगंकार्यक्रमोभवतीत्येतद्दर्शनायाह। नतिरत्रपूर्वेतियदिह्विव्यापत्तिः पूर्वंक्रियतेपश्चान्नतिः। तदा तमेवोषाणामूष्मणीतिमकारोनाम्यस्यसकारस्यव्यवधायकः स्यान्नामिभिः सहततोनप्रवर्ततेनतिरतः पूर्वमेवनतिःक्रियतेपश्चात्तमेवोषाणामूष्मणीति।

## सूतीनकिः स्वैर्युरुनह्यभिचीनिहीतिसः ॥ ३ ॥

सु। जती। नकिः। स्वैः। वि। उरु। नहि। अभि। चौ। नि। हि। इत्येतैर्नामभिरुपहितः सकारः षका-

रमापद्यते । सु । प्रसुषविभ्योमरुतः । जतौ । जतौषट्-
छतोतिवः । नकिः । नकिः षोअस्त्यरणोजहुर्हितं । स्वैः ।
स्वैः षएवैरिरिषीष्टयुर्जनः । वि । रोदसीविषआवः।उरु ।
उरुषसरथंसारथयेकः । नहि । नहिषस्तवनोमम । अभि ।
अभिषद्युम्नैरुतवाजसातिभिः । चौ १ वीषपवित्राष्टद्यं १
तदाद्धे । नि । निषडीयतांतन्वातनाच । हि । यू-
पादमुंचोषअमिष्टहिषः ।

## इणकारेणैवसत्स्थः ॥ ४ ॥

इणकारेणैवपदेननाम्यन्तेनोपहितः सत्स्थइत्येतयोः स-
कारः षकारमापद्यते । सत् । दिविषद्भ्यादरे । स्थः ।
यदिन्द्राग्नीदिविष्ठोयत् । इणकारेणैवेतिकिं । युवांहिस्थः
स्वर्पतौ ।

## स्वबहूकारेण ॥ ५ ॥

सुइत्येतत्पदंनम्यतेषबहूकारेणनामिनोपहितंचेत् ।मो-
ष्व १ द्यदुहंणान् अभीष्व १ र्यः । अबहूकारेणेतिकिं ।
सुदीतिभिः सुदीदिहि ।

## पदादयस्थितिस्किितिसिति ॥ ६ ॥

पदानामादिभूताः सकाराः षकारानापद्यन्ते युु-
कारकुकारनकारपराः सन्तः । इतिकरणः प्रकारार्थः।
स्थिति । गोभिः ष्यामसधमादः । स्किति । यजुष्कंनं-
प्रथमन्देवयानम् । स्निति । अधिष्णुनाधव्वसानोअब्ध्ये ।
अबहूकारेणेत्येव । तवप्रियासः सूरिषुस्याम । उपद्यां-
स्कम्भथुः स्कम्भनेन ।

ति ॥ ७ ॥

अरेफस्य पदस्यक्षितिपदादिर्नम्यते । नक्षिप्रातेश- तंचन । अरेफस्येतिकिम् । प्रतिम्मरेथांतुजयद्भिरेवैः । अवह्वन्नरेणैवेत्येव । वङ्कामिस्मपूषणमंतरेण ।

एकारेणापिस्विति नः परंचेत् ॥८॥

एकारांतेनापिनाभ्युपहितंसुइत्येतत्पदंनम्यते नः पदं- परंचेद्भवति । तेषुणोमरुतोम्लयंतु । नः परमितिकिं । त्वेसुपुत्रशवसः । अप्राप्तप्राप्तिवचनोपिशब्दः ।

दीर्घोनस्थिति ॥ ९ ॥

दीर्घोनाभ्युपधाभूतोपिस्थितिपदादिर्नम्यते । वीरैः स्थामसधमादः । दीर्घग्रहणंकिं । गोभिः ष्यामसधमादः ।

उचनास्पर्शपूर्वं ॥ १० ॥

उइत्येतत्पदंपूर्वंस्थितिपदादिर्नमते । स्पर्शपूर्वंयदि- नभवति । एषउस्यपुरुव्रतः । अस्पर्शपूर्वमितिकिं । उदुष्यशरणोदिवः ।

तकारवर्गस्तु टकारवर्गमंतःपद- स्थोपि षकारपूर्वः ॥११॥

तकारवर्गस्तु पुनष्टकारवर्गमापद्यते यथासंख्यं ॥ अंतःपदस्थोपिनानापदस्थोपिषकारपूर्वःसन् ॥ कःखिद्वृक्षो निष्ठितोमध्ये अर्णसः ॥ आपोष्ठिष्ठा मयोभुवः ॥ ष- कारपूर्वइति किं ॥ युवंस्त्रियःस्वपती ॥

सितां सधस्थात्स्तनिहि स्तवाम स्तवे स्तुवंति स्तुहि सीं स्तुतः स्थ ॥ साहि स्तः स्तुप् सत्सि सत्सत् स्वनीति स्तोभेत्यादिश्चापि बहूच्चरांतैः ॥१२॥

सितां । सधस्थात् ॥ स्तनिहि ॥ स्तवाम ॥ स्तवे ॥ स्तुवंति ॥ स्तुहि ॥ सीं ॥ स्तुतः । स्थ ॥ साहि ॥ स्तः ॥ स्तुप् ॥ सत्सि ॥ सत्सत् ॥ स्वनि ॥ इत्येषां पदानामादि स्तोभेत्येतस्यचपदस्य [redacted]र्नभ्यते ॥ अपिबह्वच्चरांतैर्नामभि रुपहितोपि ❀ अबह्वच्चरांते रित्यर्थोपिशब्दः ॥ सितां ॥ पदिषिता ममुंचता यजत्राः ॥ सधस्थात् ॥ निष्षीमद्भ्योधमथोनि ष्षधस्थात् ॥ स्तनिहि ॥ निष्टनिहि दुरिताबाधमानः ॥ स्तवाम ॥ तमुष्टवाम यंगिरः ॥ स्तवे ॥ विश्वायद्वामनु ष्टवे ॥ स्तुवंति ॥ अनुष्टुवन्तिपूर्वथा ॥ स्तुहि ॥ तमुष्टुहींद्रं योह्सत्वा ॥ सीं ॥ निष्षीमद्भ्योधमथोनि ष्षधस्थात् ॥ स्तुतः । नूष्टुत इंद्रनूगृणानः ॥ स्थ ॥ आपोहिष्ठा ॥ साहि ॥ विषाह्यग्नेगृणते मनीषां ॥ स्तः ॥ नास्यते सहिमानं परिष्टः ॥ स्तुप् ॥ सोमोविराजमनुराजतिष्टुप् ॥ सत्सि ॥ अग्नेनिषत्सि नमसाधिबर्हिषि ॥ सत्सत् ॥ नहिषस्मदन्तरः पूर्वोअस्सत् ॥ स्वनि ॥ यदिक्रोशमनुष्वणि ॥ स्तोभेत्यादि ॥ परिष्टोभंतुविश्वतः ॥ परिष्टोभंतुनोगिरः ॥

## निपरीति स्वसीत्यादौचकारव-र्गीयोदयौ ॥१३॥

नि परि ॥ इत्येतौनामिनौ स्वसिइत्थंभूतौ पदा-दौनमतःकिमविशेषेणनेत्याह ॥ चकारवर्गीयोदयौ चे-त्स्यातां ॥ चकारवर्गपराविल्यर्थः ॥ नि ॥ महांतंकोश-मुदचानिषिंच ॥ परि ॥ सहस्रधारः परिषिच्यतेहरिः ॥ परिष्वजध्वंदश ॥ परिष्वजंते ॥ चकारवर्गीयोदयावि-तिकिं ॥ व्युच्छंतीपरिस्वसुः ॥

## इकारेचोत्तरेपरान् सेससीतिस्व-रोदये ॥१४॥

इकारेचउत्तरेचकारःसमुच्चयार्थीयो निपरीति समु-च्चिनोति परान् पदादीन्नमतः ॥ कथंभूतान्पदादीनित्यत-आह ॥ सेससीइतिकरणःप्रदर्शनार्थः ॥ स्वरोदये इका-रस्यविशेषणमेतत् सेससीतिपदादौ न्दकारस्वरपरा-न्नमतइत्यर्थः ॥ से ॥ परियत्तंनिषेदथुः ॥ स ॥ निषद्दा-पीतये मधु ॥ शुनंनरःपरिषदन्नुषासं ॥ निषीदहोत्तऋ-तुथायजस्व ॥ निपरीतिकिं ॥ इमंयमप्रस्तर माहिसी-द ॥ इकारइतिकिं ॥ विसमनाभूमिः ॥ स्वरोदयइति-किं ॥ दिवस्परंति परिसृ्रोअंतान् ॥

## सेध स्वापय सस्वजे सस्वजाते स-साटच ॥ १५ ॥

चकारोच्चारणादेता न्पदादीन्निपरीनमंतः ॥ सेध ॥

याचस्रते निषेध ॥ स्वामय ॥ निष्वापयामिषूद्दशा ॥ सस्वजे । तमिंद्रःपरिषस्वजे । सस्वजाते । समानंवृक्षं-परिषस्वजाते । ससाद । निषसादधृतव्रतः ।

संतंसंतःसंतिपूर्वीःस्थुःस्थाःस्थादि-तिचोत्तरः ॥१६॥

इतिच पदादीन्सकारानुत्तरोनामीनमति । कश्चोत्त-रःपाठक्रमेण परीति । संतं । अग्नेवत्समम्परिषंतं । संतः । नाद्वयःपरिषंतोवरंत । संतिपूर्वीः । ताइंविश्वतः परि-षंतिपूर्वीः । पूर्वीरितिकिं । यच्चोनवाताः परिसंत्यच्यु-ताः । स्थुः । यश्चानिद्वेषो धूषतापरिष्ठुः । स्थाः । परिष्ठा इंद्र मायया । स्थात् । मानोमर्त्तस्य दुर्मतिःपरिष्ठात् ।

ह्विषिंच तूषिंच रजःसुषीदन्नितो-षिच्चता भिषतः किमुष्वित् ॥ सू-रिभिष्याम दिविषंतु केष्ठप्रति-ष्फुर वीषधस्था कमुष्वित् ॥१७॥

ह्विषिंच । तूषिंच । रजःसुषीदन् । इतोषिंचत । अ-भिषतः । किमुष्वित् । सूरिभिष्याम । दिविषंतु । केष्ठ । प्रतिष्फुर । वीषधस्था । कमुष्वित् । एतानियथागृहो-तानि निपात्यंते । अध्वर्यवातुह्विषिंच । तूषिंच । यादृ-षिंचहरिर्मींढ्रोरुपस्थे । रजःसुषीदन् । बुध्नेनद्योनां र-जःसुषीदन् । इतोषिंचत । परोतोषिंचत । षोत्वषत्वे नि-पात्येते ॥ अभिषतः ॥ महोविश्वांअभिषतः । अभीषत

तदाभर। अभिषत इतिनिपातनंच यथाश्रुतमेव गृहीतुंन्याय्यं। अंतोभीषतस्तदाभरेत्यत्र षत्वंनप्राप्नोति। अभिशब्दस्य दीर्घत्वात्|सत्यमेवतत्। यदिनामाधस्तादेव परिभाषितं|यथासामवशाः संधयो नियतविषया अपवादकाभवंति नतुसर्वत्र। सामवशादितिचैवापदांजानीयात् अनुलोमाना मन्वचरसंधीनां|नान्येषांतदिति। तथाज्ञापकंभवति। नुषप्रेति। असंनुषप्रपूर्व इत्युदाहरणं। अत्रप्रेतियद्विशेषणं तत्वनूसमर्त्तः शवसेत्यस्यनिर्धारणार्थं|यदिनुशब्दो दीर्घोपिविधातंषत्वस्यनकुर्यात्। तदाप्रशब्दग्रहणं सार्थकंस्यादिति। तस्मात्सामवशाः संधयोपवादका अनुलोमान्यचरसंधीनां नान्यत्रेतिसिद्धं। किमुष्वित्। किमुष्विदस्मै निविदोभनंत। किमितिकिं। इंद्रंकउस्विदाचके। सूरिभिः ष्याम। अंतोष्ठत्वाणि सूरिभिःष्याम। दिविषंतु। उतस्थानासो दिविषंत्वग्ने:। कोष्ठ। कोष्ठानरश्रेष्ठतमाः। प्रतिष्फुर। प्रतिष्फुरविरुज। त्रीषधस्था। त्रीषधस्था सिंधवस्त्रिः। कसुष्वित्। कमुष्विदस्य सेनया। कमितिकिं। उवक्छेकउस्विदंतमः।

उपुवाणो, दिविषन्त्सूरिभिःष्या, मृच्छंतिष्मनूष्ठिरंवंसुषोदति। नुषप्रष्ठिष्ठोयशसामच्छोषा। विषाभूयामोषुयुतिष्ठनेतिच ॥१८॥

उपुवाणः। दिविषन्। सूरिभिःष्यां। च्छंतिष्म। नु-

इदानीमपश्चाद: । रेफपर: ऋकारपर: ऋकारपरश्च सकार: प्रकृत्यासम्भवति । पुनातिते परिस्रुतं । इन्द्रस्यथन्तु प्रसवेविसृष्टा: । तिसृणांसप्ततीनाम् ।

## संस्पृक् स्त्रसरस्वरेति चाचराणां ॥ २४ ॥

सं । स्पृक् । स्त्र । सर । स्वर । एतेषांचाचराणां सकारा:प्रकृत्याभवंति । पद्यादौ अपद्यादौ वासतां । सं । सुसमिद्धो न आवह । स्पृक् । दिविस्पृग्यात्यरुणानि । स्त्र । तेदेवा: परिस्त्रतेष्वेषु लोकेषु । शाखायनब्राह्मणमेतत् । ननुनैवैत दुदाहरणं ॥ ब्राह्मणंह्येतत् नच-ब्राह्मणस्याप्येतल्लक्षणंस्मृतं । व्रतत्रय विधानात् । एवंतर्हि यथाजलाहारस्य मत्स्याहरणं । पुष्पाहारस्यफलाहरण मविरुद्धं एवमेतदपि । सर । विसर्माणंकृणुहि । स्वर । मेयंविप्रा अभिस्वरा ।

## सेतिचास्य परिपन्नो पधाचेत् ॥२५॥

सद्यतिइत्थंभूतस्य चाचरस्यादिसकार: प्रकृत्याभवति । यदितदक्षरं सकारादनुस्वारस्योपधाभूतंस्यात् । सुसंसन्मिषो अतिथि: । परिपन्नोपधाचेदितिकिं । निषदापीतयेमधु ।

## संयोगस्य चाप्यनुनासिकादे: ॥२६॥

संयोगस्यचापि कथंभूतस्यानुनासिकोवर्ण आदिभूतोयस्य तस्यय:सकारलक्षणोचरविशेष: उपधाभूत: सप्रकृत्याभवति । सुसन्दृशं सुमतीनां । सुतङ्कामा मावम-

ष्टेवयोषा । संयोगस्थेतिकिं । अभिस्वरा निषद्यागाः । अनासिकादेरितिकिं यज्ञगोषुदुष्वन्यम् ।

सहस्रं सनिता स्थात्रां सावित्रं- सूवरीस्नुषे । समुद्रं सहशासारे सायकः साधनीसह । सनितः स्पष्टः सहशः सखायंसमैरेते सा- नुशब्दश्चपद्याः ॥२७॥

एतेपद्याः । सानुशब्दश्चसप्रवादः प्रकृत्याभवंति । सहस्रं । चतुःसहस्रंगव्यस्य । सनिता । सनेमतस्सुसनिता ॥ स्थात्रां । भूरिस्थात्रां भूयाविशयंतीं । सावित्रं । सुसावित्रमामाधिषद्गतिप्रैवैकदेशे । सूवरी । सुषूमावहुसूवरी । स्नुषे । सुपुत्र आदुसुस्नुषे । समुद्रं । चतुःसमुद्रंधरुणं । सहशा । त्रिसहशाजीविताभिप्रचक्षे । सारे । हिरण्यकेशोरजसोविसारे । सायकः । द्युम्नीसुशिप्रोहरिमन्युसायकः । साधनी । आहणोपशुसाधनी । सह । यथावःसुसहसति ॥ सनितः । सनितःसुसनितरुग्रा स्पष्टः । अनुस्पष्टोभवत्येषोअस्य । सहशः । यमाद्भवसुसहशः सुपेशसः । सखायं ॥ तीव्रंसोमंपिवति गोसखायं । समैः । त्रिसप्तैः शूरसत्वभिः । सानुशब्दः । पृदाकुसानुर्यजतोगवेषणः ॥ इदाहित उषोअद्रिसानो । शब्दग्रहणमुक्तप्रयोजनम् ।

सुतेसोमे, वरुणेप्रामिचर्षणि स्व- भिष्टौत्येवमुपधाय सर्वे ॥२८॥

इत्येवंशब्दोपधाभूताःसर्वएवपदादिसकाराःप्रकृत्याभवंति । सुते । सुतेसुतेन्योकसे । सोमे । यस्मिन्सोमेसोमश्राभवः । वचथो । सुसंश्रितावच्योवचथोत्थाः । पप्रामि । पप्रामिसत्यमघवन्तथा । चर्षणि । इर्यश्वंसत्पतिं चर्षणीसहं । स्वभिष्टि । वृत्रजिमिंद्रःस्वभिष्टिमुम्नः ।

अभिसत्वारयिस्थानोयासिसीष्ठाः सिसक्तिच । तिस्तिरेतिस्तिराणाच सिसिचेसिसिचुश्चन ॥२९॥

चकारःसमुच्चयार्थः एतेषुयथाप्राप्तंषत्वं प्रतिषिध्यते । अभिसत्वा । अभिवीरो अभिसत्वासहोजाः । रयिस्थानः । रयिस्थानोरयिमस्मासुधेहि । यासिसीष्ठाः देवस्यहेलो वयासिसीष्ठाः । सिसक्ति । छायेवविश्वं भुवनं सिसक्ति । तिस्तिरे । तिस्तिरेवर्हिरानुषक् । तिस्तिराणा यतस्रुचावर्हिस्तिस्तिराणा । सिसिचे सेकेवकोशं सिसिचेपिबध्यै । सिसिचुः । बहुसाकं सिसिचु रुत्समुद्रिणं ।

गोष्ठादिवगोपतमा उपस्तुत्सप्रवादोनार्षदः पर्यषस्वजत् । स्वादुषंसदः पुरुषंतिश्चन्द्रः सुषंसदं सुषमिधानुसेषिधत् ॥ ३० ॥

एतेषुपदेषुषत्वंनिपात्यते । गोष्ठादिव । गावोगोष्ठादि-

वेदते । गोपतमाः । दिविष्यामपार्येगोषतमाः । उपष्टु-
त् । धियायचो वस्तवताउपष्टुत् । सप्रवादोनाषेदः ।
सर्वविभक्त्यन्तः । यन्नापेदायम्नव: । पुरुसद्गतोनाषेदं ।
पर्यषस्वजत् । यन्तोग्न्योनाधित: पर्यषस्वजत् । स्वादुषंसदः
स्वादुर्षसदः पितरोवयोधाः । सितिचास्य परिपन्नोपधाचे-
दित्यस्यनिषेधस्य प्रतिप्रसवः । पुरुषंतिशब्दः सर्वविभ-
क्त्यन्तः । याभिर्ध्वसंतिं पुरुषंतिमावतं । ध्वस्रयोःपुरु-
षन्त्योः । संयोगस्य चाप्यनुनासिकादेरित्यस्य प्रतिप्र-
सवः सुषंसदं । परिप्रयंतं वय्यंसुषंसदं । सितिचास्यपरिप-
न्नोपधाचेदित्यस्य प्रतिषेधस्यप्रतिप्रसवः । सुषमिधा ।
अग्ने भवसुषमिधासमिद्ध: । समित्यपरनिषेधस्य प्रति-
प्रसवः । अनुसेषिधत् । पद्यादेः सकारस्य षत्वेप्राप्ते
परस्यषत्वंनिपात्यते वध्युक्तांअनुसेषिधत् । गोष्ठादिवे-
त्यादिपंचस्वप्राप्तेषत्वेवचनं ।

## (१) तकार(४)पूर्वपद्यांतो (२) व्यापन्नो(३)रेफ-संहिते । नामिपूर्वः ॥ ३१ ॥

तकारेपरचावस्थिते पूर्वपद्यस्यांत: । कथंभूत: । व्या-
पन्नः सत्वंप्राप्तः । सरेफसंलग्नेतकारे । नामिपूर्व: इतिपूर्वे
पद्यांतव्यापन्नस्यविशेषणं । षकारमापद्यते । प्रयाचंयाचि
प्रदिशोविदुष्टरः । आविष्टो वर्द्धतेचारुरासु । तकारइति-
किं । सद्यंतइन्द्रनिष्टुतः पूर्वपद्यांतइतिकिं । त्वमग्ने प्रमति
स्त्वंपितासिनः । व्यापन्नोच्चारणं पदेष्टस्यसकारस्य-
षत्वंयथा स्यात् । सरेफसंहितइतिकिं । चतुर्विंशदाजि-

नः । नाभिपूर्वग्रहणं पुनः क्रियमाणमेवारम्भ सञ्ज्ञाः करोति । अग्नेष्ट्वास्येनप्राश्नामि ।

## विग्रहेतु त्वातइत्यनुदात्तयोः ॥३२॥

विग्रहेतु पुनः त्वा । ते । इत्येतयोः परत्रावस्थितयो रनुदात्तयोः व्यापन्नं षत्वमापद्यते । त्वा । हविष्ट्वासन्तं हविषायजाम । ते । अभिष्टे अद्यागीर्भिः । अनुदात्तयो रितिकिं । यद्वतद्विदुस्ते अमृतत्वं ।

## अग्निरेकाक्षरस्यादौ ॥ ३३ ॥

अग्निरित्ययं विसर्जनीयोव्यापन्न सकारादेरेकाक्षरस्य पदस्यादौ वर्त्तमानोनम्यते । अग्निष्टं ब्रह्मणासह । एकाक्षरस्यादाविति किं । अग्निस्तुवि श्रवस्तमः ।

## नकिश्च ॥ ३४ ॥

नकिरित्ययं विसर्जनीयोनम्यते । चकाराद्व्यापन्न सकारादावेकाक्षरेपदे परभूते । नकिष्टं कर्मणानशत् ।

## अधीतनूष्विति ॥ ३५ ॥

अपि च तनूष्वित्येतस्मिन्पदे परभूते नकिरित्ययं विसर्जनीयो व्यापन्नोनम्यते । नकिष्टनूषुयेतिरे ।

## तत्ततन्युस्ततक्षुस्तं तौग्रामित्युत्तरेषु निः ॥ ३६ ॥

इत्येतेषु उत्तरपदेषुसत्सु निरित्ययंविसर्जनीयो व्यापन्नोनम्यते । तत् । निष्टत्क्षभार चमसन्नष्टद्यात् । त-

तन्युः । मिहमसूरो अतिनिष्टतन्युः । ततच्युः । येना-
देवांस्वधया निष्टतच्युः ॥ तं ॥ निष्टमृक्ष्युः सुयुजारथेन ॥
तौग्र्यं ॥ निष्टीग्र्यं पारयथः समुद्रात् ॥

पायुभिः पर्तृभिस्त्रिभि र्ददिर्वेर-
स्मयुः शुचिः ॥ उत्तरेत्वमिति

इत्येतेषांपदानांविसर्जनीयोव्यापन्नः त्वमित्येतस्मि-
न्पदेउत्तरेनम्यते । पायुभिः । अदब्धेभिःसवितः पायुभि-
ष्ट्वं । पर्तृभिः । पर्षितोकंतनयंपर्तृभिष्ट्वं । त्रिभिः । त्रिभि-
ष्ट्वंदेवसवितः । ददिः । ददिष्ट्वमिंद्रापांसिवाजान् । हरि-
वोददिष्ट्वं । वेः । पावकशोचेवेष्ट्वंहियज्वा । अस्मयुः । ए-
तंशं समिंद्रा स्मयुष्ट्वं । शुचिः । शुचिष्ट्वमसि प्रियोनमित्रः ।

ईयुष्टे वावृधुष्टेसश्चिष्टव ॥३७॥
गोभिष्टरेम क्रतुष्टम्

एतेद्वेपदाव्यापंनीषाकृत षत्वानिपात्यंते । ईयुष्टे ।
ईयुष्टेये पूर्वतरामपश्यन् । वावृधुष्टे । पुरुशंसेन वावृ-
धुष्टइंद्रं । सश्चिष्टव । अस्मेसश्चिष्टव । गोभिष्टरेम ॥
गोभिष्टरेमाममतिंदुरेवां । क्रतुष्टं । इंद्रक्रतुष्टमाभर ।

नाहुर्निष्षिंध्वरीःप्रभोः ॥ वन्दा-
रुः षष्टि राविस्त्रिवांहोरित्यनु-
दात्तयोः ॥३८॥

यदुक्तं त्वातइत्यनुदात्तयो स्तदेतेषांपदानां संबंधिनोविसर्जनीयस्य नभवति । प्राहुः । प्राहुस्तत्रीणि दिविबंधनानि । निःषिध्वरीः । निष्षिध्वरीस्त्वओषधीः । प्रभोः । प्रभोस्तेसतःपरियंतिकेतवः । वंदारुः । वंदारुस्ते तन्वंवंदेअग्ने । षष्टिः । त्रिःषष्टिस्त्वा मरुतोवावृधानाः । आविः । आविस्तेशुष्मो भवतुप्रियोमदः । चिः । त्रिस्ते अन्नंकृणवत् । बाह्वोः । बाह्वोस्ते बलंहितं ।

ऋकाररेफषकारान्नकारं समानपदेवग्रहे नमंति । अंतःपदस्थं मकारपूर्वा अपिसंध्याः॥३८॥

ऋकारश्चरेफश्चषकारश्च ऋकाररेफषकाराः नकारंनमंति । समानपदेएकपदे वर्त्तमाने नकारेणसह । कथंभूतेपदेअवग्रहेदिखंडे । कथंभूतंनकारं । अंतःपदस्थं पदमध्यं वर्त्तमानं । अमकारपूर्वाइति ऋकारादीनांविशेषणं । अपिसंध्यसंध्याअपि । संध्याःप्राकृताः । ऋकारस्य । पथामनु प्रविद्वान्पितृयाणं । रेफस्य । प्रयाणेजातवेदसः । तदारभस्तदुहणो । षकारस्य । विदुर्विषाणं परिपानमंतिते । समानपदइतिकिं । त्रिरश्विनाव्रतेजने । अवग्रहइतिकिं । उष्ट्रानां विंशतिंशता । अंतःपदस्थमितिकिं । जुहुराणश्चिन्मनसा परियन् । अमकारपूर्वाइतिकिं । यमासाकृपनीलं । योअग्निः क्रव्यवाहनः । अद्यानुक्षीनसातनोतसोम्याः । अनुव्रतेजने इत्यत्रप्राप्नोति पूर्वोनंता नतिषु नस्यमुत्तरमितिवचनान्नभवति ।

## संध्यङ्गमाप्यनिंग्ये ॥४०॥

सन्धौ भवःसंध्यः । संधिजङ्गमाप्यनिंग्ये पदेवर्त्तमानो-नकारंनमति । यदिक्षोभमनुष्वषा । संध्यइतिकिं । म-ह्वीमे पञ्चवषनाम ।

## नमध्यमैः स्पर्शवर्गैर्व्यवेतम् ॥४१॥

ननमंतिनकारमृकाररेफषकाराः मध्यमैः स्पर्शव-र्गैर्व्यवहितं । चवर्गटवर्गतवर्गामध्यमाः । ऋजुनीतोनो-वरुणः । मानिवर्त्तनवर्त्तय । मभिष्टनेते मद्रिवः ।

## परिप्रऋषीन्द्रादिषु चोत्तमेन ॥४२॥

परि । प्र । ऋषि । इंद्र । इत्येवमादिषुपदेषु पद्मा-दिषु उत्तमेनापिस्पर्शवर्गेण पकारादिनाव्यवहितं न-कारमृकाररेफषकारान नमंति । परि । परिपानमंति-ते । यमस्यमाता पर्युह्यमाना । प्र । प्रमिनतो मनुष्या युगानि । ऋषि । ऋषिमनाय ऋषिकृत्स्वर्षाः । इंद्र । इ-दंत्वत्याम मिंद्रयानं । भादिगृहणादिहनभवतिनिषिधः । सुमनाबांभवत्वघन्याध्यः ।

## तथाशकार सकार व्यवेतंसर्वा-दिषु ॥ ४३ ॥

यथाधस्तनयो मध्यमोत्तमवर्गयोर्व्यवेतं नकारमृकार-रेफषकारान नमंति तथासकारशकारव्यवेतंन नमंतिस-र्वादिषुपदेषु । पञ्चक्षिंपरिभयानमर्षः । इन्द्राश्वितपनी-

पद्रिसानो। सर्वदिग्भ्यां परिप्रकर्षौद्राद्रि निदर्शनार्थं।

## पूर्वपदांतगंच ॥ ४४ ॥

पूर्वपदस्य चांतगतं नकारमकाररेफषकारा ननमंति। कर्मन्कर्मंच्छतमूतिः स्वर्जकारः।

## नाभिनिर्णिक्प्रवादादौ ॥ ४५ ॥

नाभिनिर्णिक्शब्दयो रादिभूतंनकारं ऋकाररेफषकारा ननमन्ति। नाभि। रथेन इषनाभिना। निर्णिक्। अतःमहस्ननिर्णिजा। पतरेवचचराचंद्र निर्णिक्। आदिशब्दोच्चारणं निर्णिकशब्दस्योच्चारणस्य णत्वंसाधयति।

## यकार स्पर्शसंहितम् ॥ ४६ ॥

यकारसंलग्नं स्पर्शसंलग्नं नकारऋकाररेफषकारा ननमंति। यकारसंहितं। द्युम्नीसुशिप्री हरिमन्युसायकः। स्पर्शसंहितं। इवप्रे परिषिच्यसे। सुषुम्नेषितत्वता यजामसि। यकारस्पर्शसंहितमितिकिं। प्रातर्याव्णः सहस्कृत।

## कर्मनिष्ठां दीर्घनीथे ॥ ४७ ॥

इत्येतयोः पदयो र्नकारऋकाररेफषकारा ननमंति। अग्निर्वीरं श्रुत्यं कर्मनिष्ठां॥ दीर्घनीथेदमूनसि।

## भानुशब्दे ॥

भानुशब्दस्य नकारं ऋकारादयो यथासंभवं ननमंति॥ स्वर्भानोरध॥

## हिनोमिच ॥ ४८ ॥

हिनोमिइतिच नकारमृकारादयो ननमंति । यांवांश्चोवां परिहिनोमि मेधया ।

## ऋस्वोदयंत्वेषपूर्वं वमादिषु ॥ ४९ ॥

हृस्वउदयमस्य नकारस्य सतथोक्तः । तंह्रस्वोदयं । त्वेषपुरुइत्येवमादिषुवर्त्तमानौ नकारं रेफषकारौ ननमतः । त्वेष । यतोजज्ञ उग्रस्त्वेषनृम्णः । पुरु । पुरुनृम्णाय सत्वने । ऋस्वोदयइतिकिं । पुरुणीथा जातवेदः ।

## त्रिशुभ्रयुष्मादिषु चोभयोदयं ॥ ५० ॥

त्रि । शुभ्र । युष्माइत्येवमादिषुपदेषु । उभयोदयं ऋस्वोदयं दीर्घोदयं चनकारं रेफषकारौ ननमतः । त्रि । त्रिनाकेत्रिदिवेदिवः । त्रिनाभिचक्रमजरमित्यस्य तु नाभिनिर्णिक्प्रावदेत्यनेन सिद्धः नप्रतिषेधः । शुभ्र । वहेथेशुभ्रयावाना । युष्मा । युष्मानीतो अभयं ।

## अहकारेष्वधिक चाक्षरेषु पुरः पुनर्दुश्चतुर्ज्योतिरादिषु ॥ ५१ ॥

हकारवर्जितेषुअधिकाक्षरेषुच पदेषुचतुरक्षरादिषु चेत्यर्थः । उभयविशेषणविशिष्टानि पदानिगृह्यंते । पुरः । पुनः । दुः । चतुः । ज्योतिः । इत्यादिषुच नकारोवर्त्तमानोरेफारेफनिमित्तात् नतिंनलभते । पुरः । पुरोवावान-

माजिघ्नु । पुनः । पुनरागाः पुनर्नव । दुः । दुर्भियंतुः परिप्रीतोनमित्र । चतुः । सजिह्वया चतुरनीकऋजते । ज्योतिः । शंनोअग्निर्ज्योतिः रनीकोअस्तु । अइकारेष्विति किं । कुमारदेष्णा जयतः पुनर्हणः । अधिकष्वसरेष्विति किं । दुर्णामा योनिमाशये ।

## उस्रयाम्णो नुस्रयाम्णो सुषाम्णो वृषमण्यवो धिषवण्या प्रणयः ॥५२॥

एतेषु षट्सु पदेषु णत्वं निपात्यते । यकारस्पर्शसंहितमित्यनेन निषिद्धं सत् । उस्रयाम्णो । अरं म उस्रयाम्णो । अनुस्रयाम्णो । अरमनुस्रयाम्णे । सुषाम्णो । युवं वरो सुषाम्णो । स्पर्शसंहितानि चैतान्युदाहरणानि । वृषमण्यवः । समानमेकं वृषमण्यवः पृथक् । अधिषवण्या । अवनाधिषवण्याक्रता । क्रमाउतेप्रणयो ३ वर्धमानाः । एतानि चैणि यकारसंहितानि ।

## दूढ्य दूणाश दूडभ प्रवादादुर्भूतमक्षरं तेषु नंत ॥ ५३ ॥

दूळ्य । दूणाश । दूडभ । एते प्रवादाः कृतदंत्यमूर्धन्यभावा निपातिताः । न चात्र ऋकाररेफषकारा अन्यतमोपि विद्यते । अतः कारणमपि दर्शयति । दुरित्येतदक्षरं मात्रिकं । तद्भूतं हिमाविकांस्तु एतेषु नंतढधकारनकारदकारेषु । दूळ्य । नदूळ्ये अनुदत्तासि वामं । मन्युजनस्यदूळ्यः । दूणाशं । दूणाशं सख्यं तव चित्तमादूणाशा । दूडभ । दूळभेभिः

वहणोदूलभासः। परितेदूडभः।

**अव्यवेतंविग्रहे विप्रकृष्टोरेफो-**
**ष्माणौ सर्वपूर्वौयथोक्तं ॥ ५४ ॥**

अव्यवेतंअव्यवहितं नकारंविग्रहे नानापदेवर्त्तमानं, नकारमेवविग्रहंहि । विप्रकर्त्तारस्त्रयो मध्यमवर्गाः। तैरव्यवेतं, नकारमेव रेफोष्माणौ रेफषकारौ, नकारं-नमतः। सर्वपूर्वौ कवकारपूर्वावपि । यथोक्तं येनप्रकारे-णोक्तमेतदधिकृतं वेदितव्यं। वक्ष्यति नयत्यर्थंच प्रपरीति पूर्वाविति । अध्वरेषुप्रणीयते । वाजीसन्परिणीयते। अव्यवेतमितिकिं । इहश्रवो वीरवत्तक्षतानः । प्लुता-कारांतं मषकारमितिप्राप्तिः । सर्वपूर्वाविति किं। शि-क्षाणो अस्मिन्पुरुहूत । विग्रहग्रहणं समानपदाधि-कार निवृत्यर्थं। रेफोष्मग्रहणं मृकारनिवृत्यर्थं । यथो-क्तग्रहणादिहनभवति । बलंधेहितनूषुनः।

**आनीन्नुत्यं नोनुवुर्नोनुमश्च न-**
**यत्यर्थंच प्रपरीतिपूर्वौ ॥ ५५ ॥**

आनीत्। नुत्यं। नोनुवुः। नोनुमः। इत्येतानि च पदानि नयत्यर्थंच (अर्थग्रहणा न्नयतेः सर्वाणि रूपाणि) गृह्यंते। प्र। परि। इत्येतौपूर्वौ नमतः। आनीत्। अ-येदुप्राणी दममग्निमेता । नुत्यं। प्रणुत्यंविप्रमध्वरेषु साधुं। त्वमितिकिं। प्रनूसमर्त्तः । नोनुवुः। अभिप्रणो-नुवुर्गिरः। नोनुमः। इमाअभिप्रणोनुमः। नयत्यर्थंच। परि। वाजीसन्परिणीयते। अध्वरेषुप्रणीयते। पूर्वावि-

तिवचनात् व्यवस्थितस्यनभवति । प्रवंहायेमिमीषसि ।

पुरुप्रिया ब्रह्मसुतेषु नेषिप्लुता-
कारांतं सषकारमिंद्र । नतेसुस्मे-
तिसवनेषु पर्षिस्वर्यमाप्रोरुप-
रीतितैर्नः ॥ ५६ ॥ or be covered when preceded by any of these

पुरुप्रिया । ब्रह्म । सुतेसु । नेषि । प्लुताकारांतंसषका-
रं (मात्रिकोयोकारः सलक्षणवशाद्द्विमात्रिकः सप्लुत-
उच्यतेप्लुतोकारोन्तेयस्य पदस्यतत्तथोक्तं) सहषकारेण
वर्त्ततइतिसषकारंपदं । इन्द्र नतेसुस्मेति नतिंप्राप्नेसुस्म
इत्येतेपदे । सवनेषु । पर्षि । स्वः । अर्यमा । प्र । उरु ।
परि । इत्येतैः पदैरुपस्थितंसत् नः इत्येतत्पदं नम्यते ।
पुरुप्रिया । पुरुप्रियाण ऊतये । ब्रह्म । ब्रह्माणइन्द्रोपया-
हि । सुतेषु । शक्रोयथा सुतेषुणः । नेषि । नेषिणो यथा-
पुरा । प्लुताकारांतंसषकारं । स्वराणोअभिवाय । अर्षा-
णः सोमशंगवे । प्लुताकारांतमितिकिं । तेनसोमाभिर-
क्षनः । सषकारमितिकिं । यत्रानश्चक्रा जरसंतनूनां ।
प्लुतगृहणादिहनभवति । पूषानोयथावेदसां । इन्द्र ।
समिन्द्रणो मनसानेषि गोभिः । नतेसुस्मेति अभीषुणः
सखीनां । मोषुणः परापरा । तजषुणोमहो यजत्राः ।
आसुष्वाणोमघवन् । नतेइतिकिं । प्रसूनआयुर्जीवसे-
तिरेतन । इन्द्रसूरीन्कृणुहि स्मानोअर्द्धम् । रारन्धिसव-
नेषुणः । पर्षि पर्षिणः पारमंहसः । स्वः । ईशानासोयेदध-
तेस्वर्णः । अर्यमा । अर्यमाणो अदितिः । प्र । प्रणस्वा-

ह्वीभि स्तुतिभिस्तिरेत । उरु । उरुयवा असातये । परि । परिघ: शर्म यन्त्या ।

हेळोमुंचतं मित्रायराया पूषाग-
ध्यविषच्छकारवत् नव्येभिस्त्मे-
नेवाजान्कृणोत इनयप्रतरंपरेषुन॥

हेळ: । मुंचतं । मित्राय । राया । पूषा । गध्यि । अविषत् । छकारवत् । छकारसंयुक्तं पदं । नव्येभि: । त्मने । वाजान् । कृणोत । इ पदेनयप्रतरमित्येतेषु पदेषु परभूतेषु नइत्येतस्यपदस्ययदुक्तं पुरुप्रियादिभि रुपपदै णत्वंतन्नभवति । हेळ: । परिनो हेळो वरुणास्यवृज्या । मुंचतं । प्रनोमुञ्चतंवरुणस्य । मित्राय । प्रनोमित्राय वरुणायवोच: । राया । प्रनोराया परीणसा । पूषा । प्रन: पूषाचरथं । गध्यि । एन्द्रनोगध्यिप्रिय: । अविषत् । सवाजेषु प्रनोविषत् । छकारवत् । प्रनोयच्छत्वर्यमा । नव्येभि: । प्रनोनव्येभि स्तिरतंदे । त्मने । नूमित्रोवरुणो अर्यमानस्त्मने । वाजान् । प्रनोवाजान्रथ्यो ३ अश्वबुध्यात् । कृणोत । देवी:षडुर्वी रुरुन:कृणोत । उर्वीतिणत्वेप्राप्ते प्रतिषेध: । इनयप्रतरं । प्रनोनय प्रतरंवस्योअच्छ । इइति-किं । प्रणोनयवस्योअच्छ ।

गोरोहेणनिर्गमाणो न्द्रएणाद्रन्द्र-
एणांस्वर्णपराणुदस्व । अग्नेरवे-
णावाणांप्रक्रएणाम् ।

इत्येतेषु नकारः सौवर्णैः परिपूर्णः पदैर्गोतीमिः सैर्नमयति ।
गोरोहिण्या गोरोहिण्यातोयग्रो नजिन्निः । निर्णमाभिः । निरस्त-
तापष्कंगी निर्गमाभि । इन्द्रएणाः । इंद्रएणानियच्छत । इ-
न्द्रएणां इंद्रएणां प्रथमोऽश्यतिष्ठत् । ख १ यो ॥ ख १
गांवस्तोक्ष्यसाभ्मरोचि । पराणुदस्व पराणुदस्व मघवन्न-
मित्रान् । अग्नेरवेण मरुतां । वाणां । वाणांपथारथ्येव-
स्वानीत् । शक्राएणां । शक्राएणांपोपयदिश्वयांधिया ।

## एषानतिर्दंत्यमूर्धन्यभावः ॥५७॥

अंतःपदंताद्यः सकारइत्येवमादि यदुक्तंतन्नति रि-
तिवेदितव्यं । दंत्यानांवर्णानां मूर्धन्यभावो नतिरित्यु-
च्यते । नतिसंज्ञायाःप्रयोजनं । नति प्रतोपाचरितप्रति ।

## इति श्रीपार्षदव्याख्यायामानंदपुर-
## वास्तव्य वजटपुत्रोव्वटकृतौ प्रा-
## तिशाख्ये नतिपटलंपञ्चमम् ॥

## स्वरानुस्वारोपहितो द्विरुच्यते-
## संयोगादिः सक्रमोविक्रमेसन् ॥ १ ॥

स्वरेणानुस्वारेणाच उपहितःसंयोगादिर्वर्णः अविक्र-
मेवर्तमानःसन् द्विरुच्यतेसएषविधिः क्रमसंज्ञोवेदित-
व्यः । आग्वारथं यथोतये । सोमानंस्वरणं । स्वरानु-
स्वारोपहित इत्विकस्मात् । स्वावतःपुरुवसो । संयं गादि-
रिति कस्मात् । भातेपितमरुतां । अयंसत्यसशममें (१) प-

(१) अविक्रम इति विषयस्सप्तमीप्रयोगात्तस्मिन्समवर्गीयेस्प-
र्शपरितत्सस्थानमूष्माणमापन्ने प्यनापन्नेपि जिह्वामूलीयोपध्मानीय-
योर्विसर्जनीयस्य द्वित्वन्नभवति । इतिवृत्तिः ।

सामभि स्तूयमाना: । अथवा:परेषां प्रथमद्वितीयानामे-
वस्पर्शानां द्विर्वचनमिष्यते।न सर्वेषां । तस्मात्त्रि:षड्विति
अघोषाएवद्विर्वचनं भवति न परस्य । इष्टशानामिष्टमिति ।
कथमध्यवसीयतइतिचेत् ? अघोषएवघोषोदये लुप्यत इति ।
यत्रानेनलघुनास्पर्शग्रहणेन सिद्धे अघोषस्पर्शोदयइति ।
तिष्ठमाकुइत्यत्रमकारस्य द्विर्वचनप्रतिषेधार्थं यद्घोषग्र-
हणंकरोति तज्ज्ञापयति नसर्वेषांस्पर्शानां द्विर्वचनं भ-
वतीति।शाखान्तरेष्वपि दृश्यते । अपूर्वो: खयइतिशर:
परेषांखयांद्विर्वचनं भवति । हकारात्सर्वेषांविभाषाद्वि-
र्वचनमिष्यते ब्रह्मब्रह्म । स्पर्शइतिकस्मात् अश्व: । ष-
ह्व: । मह्य: । प्रस्व: । जगुप्स ।

## नावसितम् ॥७॥

न खलुपदावसाने वर्त्तमानंरेफात्परंव्यञ्जनंक्रा-
मति । दर्त् । वर्क् ।

## नरेफः ॥८॥

रेफश्च नक्रामति । पर्वतीरस्य । नैतदुदाहरणं ।
नपरक्रमोपधेत्यनेनैवसिद्धत्वात्।इदन्तर्हियुक्तं यत्रपरक्रमः
प्रतिषिध्यते। दर्त् । वर्क् । अप्राप्तप्रास्यर्थं ।

## वोष्मासंयुक्तो नुपधः ॥९॥

अनुपध: संयुक्त: ऊष्मावाक्रामति । ह्रुयाम्यग्निम् ।
श्रीतन्तिकोशा: । अनुपधइतिकस्मात् ? मुहुराक्रादुक्तोष्टत:।
वर्ष्मा ३ अह ।

## नतूष्मास्वरोष्मपरः ॥१०॥

नतुखलुअस्वास्वरपरोवाजस्वपरोवाक्रामति । प्रत्यु- षदृशिं । परिषं । उषःपरः यः सोमसख्येतव । किमर्थ- मिदमुच्यते । वयः सकारामाभूवन्(१) ।

## न परक्रमोपधा ॥ ११ ॥

नतुखलुपरक्रमस्य उपधाक्रामति । मव्यत्तदुल्वं । प्रा- स्तौत् ।

## सहातिहाय पवमानयस्य हेत- नेचेत्युपहितः पदादिः छकारः॥१२॥

सह । अतिहाय । पवमान । यस्य । हेतनेच । इत्ये- तैः पदैरुपहितः पदादिश्छकारोनक्रामति । सह । सह- स्तोमाः सहछन्दसः । अतिहाय छिद्रागावाधि । पव- मान । यत्रब्रह्मा पवमानछन्दस्यां । यस्यछायाम्तं । हेतनेच । अधस्माय छतन्वे ३ तनेचछर्दिः । पदादि- ग्रहणा मुत्तरार्थं । हेइतिकस्मात् । उतोतदस्मै म- ध्विच्छद्यात् ।

## दीर्घाच मेतिवर्जं ॥ १३ ॥

दीर्घाचउपहितः पदादिश्छकारो नक्रामति । मा- इत्येतद्दीर्घं वर्जयित्वा । मर्माणिते वर्मणा छादयामि । दीर्घादितिकस्मात् । उपच्छायामिव । मेतिवर्जमितिक- स्मात् । माच्छेदरश्मीरिति । पदादिरिति किं एछामस्या ।

## संयुक्तं तु व्यंजनं शाकलेन ॥ १४ ॥

---

(१) स्वरोऽस्वपरइतिकस्मात् । अदर्शयती तिवपुलकैरदयते

## अभिनिधानं कृतसंहितानां स्पर्शांतस्थानामपवाद्यरेफं ॥ संधारणं संवरणं श्रुतेश्च स्पर्शोदयानां १७

अभिनिधान मित्यधिकारः । यदित ऊर्ध्वमनुक्रमिष्याम: कृतसंहितानां (संहिताकार्येषु कृतेषु) पश्चाद्भवंतीत्यर्थः । केषामभिनिधानं ? स्पर्शानां अंतस्थानांच, अपवाद्यरेफं स्पर्शोदयानां तद्भवति । किंपुनस्तदभिनिधानं नाम । सन्धारणं वर्णस्यसंवरणंच वर्णश्रुतेः । एतदभिनिधानं वेदितव्यं । अर्वाग्देवा अस्य । उपमा षड्द्वाद्वा । यद्वा अदः सलिले । पुरुयोदग्ध्वासिवना । सद्याचित् । उल्कामिव । दधिक्राव्णः । कृतसंहिताग्रहणं "यद्याद्यामीति" असंयुक्ताभिनिधाने ट्कोयमग्रहणार्थम । स्पर्शान्तस्थाना मितिकस्मात् ? अक्ष्णः । विष्णु । स्म । पृश्निः । अपवाद्यरेफ मितिकस्मात् । अर्चंत्यर्क अंकिनः । स्पर्शोदयाना मितिकस्मात् । अद्याद्याश्वःश्वः । अच्छानय हदूरिता । सिनीवाल्यै जुहोतन । वम्रिर्वासं महोरपः ।

## अपिवावसाने ॥१८॥

अवसानेपिचवर्तमानाना मेतेषां वर्णाना मभिनिधानं वेदितव्यं । वाक् । यत् । विट्प् ।

## अंतस्थाः स्वे रूपेच परेपिरक्ताः ॥१९॥

अंतस्था अभिनिधीयंते । स्वेरूपेच प्रत्यये परेरक्ताअपिरक्ता अपि । शय्यंयुक्तं । कल्लीनं । अंगादंगा ल्लोमोलो-

म:। तंव्वोदस्म ऋतीषहं। तमव्वं तं। द्वेस्वेषीतिकिं। सिनीवाल्यै।

## लकारऊष्मस्वपिशाकलेन॥२०॥

लकारोभिनिधीयते। ऊष्मस्वपिप्रत्ययेषु। शाकलेनविधानेन। नारायासोनजल्हव:। वनस्पते शतवल्श:। शाकलेनेति कस्मात्। नजल्हव:। शतवल्श:।

## खकारेचैवमुदये ककार: ख्यातेर्धातो:॥२१॥

खकारेचोदये ख्यातेर्धातो: ककार:। अकख्यद्देवी। शाकलेनेतिकिं। अख्यद्देव:। एवंकथंशाकलेनाभिधीयते।

## रपूर्वतेर्वा पकार:॥२२॥

रप्शतेश्च पकार:शकारे एवं शाकलेनाभिधीयते। विरप्शी गोमती। शाकलेनेति कस्मात्। विरप्शीगोमती।

## पदांतीया यरवोष्मोदयाश्च स्पर्शा:पदादिष्ववरे मकारात्॥२३॥

पदांतीया:स्पर्शा:, मकारं वर्जयित्वा, यरवाऊष्मा इत्येतेषुच पदादिषुवर्त्तमानेषु उदयेषु शाकलेनाभिधीयंते। यद्यामि तदाभर। तद्रासभो नासत्या। यान्वोनर:। ऊष्मा। दध्यङ्‌ह्यते। अर्वाक्‌छफाविव। शमंन्सास। स्पर्शग्रहणं अंतस्थाधिकार निवृत्यर्थं। पदांतीया इतिकस्मात्? त्वन्ताग्वंचेमल पंत.पारुलचघस्य तका-

रस्यनभवतीनिपपदांतत्वात् पदादिष्वितिइतिकस्मात् । उद्रूतिसुभग इत्यत्रउकारस्यपदादित्वात् पूर्वस्यनभवति । अवरेमकारादितिकस्मात् । सम्राज्ञी श्वशुरेभव ।

## असंयुक्तं शाकलम् ॥ २४ ॥

लकारऊष्मस्वपि शाकलेनेत्येव मादि यदनुक्रांतं शाकलंतदसंयुक्तं भवतीति शाकलमताभिधानंत्वसंयुक्त-स्यभवतीति वेदितव्यं । उक्तान्येवोदाहरणानि ।

## तन्नपद्येस्वित्युत्तरे ॥ २५ ॥

नखलुशाकलं वेदितव्यं । सुइत्येतस्मिन्नुत्तरे पद्ये । अप्स्वग्नेसधिष्टव । स्वित्युत्तर इतिकस्मात् । यद्यक्षामि ।

## वात्वनेकाक्षरान्त्याः ॥ २६ ॥

अनेकाक्षरांत्या स्तस्पर्शाः वाशाकलमापद्यन्ते पद्ये-स्वित्युत्तरे । वाजमवेत्सुपय उस्त्रियासु । अनेकाक्षरांत्या-इतिकस्मात् इत्सुक्रतुंवरुणो अप्स्व १ ग्निं ।

## सर्वत्रैकेकरणस्थान भेदेवाशा-कलम् ॥ २७ ॥

सर्वत्रपद्येचापद्येच एकेआचार्याः करणभेदे स्थान-भेदेच विभाषाशाकलमिच्छन्ति करणभेदे क्रियतइति-करणं प्रयत्नः वर्णात्मगुणतत्वतातस्मिन्भेदे सतस्मिनः ।

स्थानभेदे ।(१)यदृक्षा: । यद्द इष्ट । उभयोर्भेदे । यत्स्व-ग्ने । नृषद्वरसत् । करणस्थानभेदइतिकस्मात् । तत्तदग्नि: यत्तयमं । आत्वनेकाक्षरांत्यादिति । प्रकृतेवाग्रहणेपुन-र्वाग्रहणं अनेकाक्षराधिकारनिवृत्त्यर्थं ।

प्रथमेस्पर्शवर्गे ॥२८॥

प्रथमस्पर्शवर्गस्य एकेआचार्या: शाकलमिच्छंति । स्यक्त्ववंति । अर्वाग्रथं । प्रत्यङ्विश्वंस्व: ।

स्पर्शायमाननुनासिका: स्वान्परेषु स्पर्शेष्वनुनासिकेषु ॥२९॥

अननुनासिकास्पर्शा: स्वान्यमानापद्यन्ते । अनुनासि-केषु स्पर्शेषु परेषु । पलिक्नीरित् । परिग्मन् । बृवघ्ने प-रिषिच्यसे । परिज्मानमिव । आत्मांतेवात: । अमत्ना-दन्यंपरि । वघ्नासूनो । दाहविगदघ्नमि । आत्मनंतोयं । गृभ्णामिते । स्पर्शाइति कस्मात् । ब्रह्म । दधिक्राव्ण: । अननुनासिकाइतिकस्मात् । अर्वाङ्नरा । समन्यायंति । स्वानितिकिमर्थमुच्यते । संदृ:प्रकरणेनतस्तेतस्या: अ-ष्टाउष्मायमाइतिवर्णा: कृतसंख्या निर्दिश्यंते । नतथा-यमा: । तस्मादिदं स्पर्शायमाननुनासिका स्वानिति इत्युच्यमानेविंशतित्वात्स्थानिनोमादेशानामपियमानां-विंशतित्वप्रसंग:स्यमाभूत् । चतुर्णामेवयमानां प्रथमा प्रथमं द्वितीया द्वितीयंएवमापंचमा दापद्योरन्निमुच्यते

(१) अन्जाइत्यप्युदाहरणंखपुस्तके ।

स्पर्शेष्विति कस्मात्। उपस्थाएका। अनुमामिकेष्विति कस्मात्। यद्बांहिष्ठं।

## न स्पर्शस्योष्मप्रकृतेः प्रतीयाद्य मापत्तिम् ॥३०॥

न खलु स्पर्शस्योष्मप्रकृते र्यमापत्तिं विजानीयात्। प्रद्रोधुवक्‌मस्त्सु।

## नाभिनिधानभावं ॥३१॥

अभिनिधानभावं च ऊष्मप्रकृतेः स्पर्शस्य न प्रतीयात्। घनेव वच्चिन्क्षुयि क्ष्वि।

## यमः प्रकृत्यैव सदृक् ॥३२॥

यमः प्रकृत्या एव सदृक् भवति यस्य यमापत्तिरुच्यते तत्स्वरूपो वेदितव्यः। प्रकृत्यर्थे किमुक्तं भवति। यमः प्रकृत्याश्रयाणि कार्याणि लभत इत्यर्थः। तस्मात् उपध्मातेव इत्यत्र सोष्मानुरूपो भवतीत्यर्थः। पलिक्नीरित्यत्र ककाररूपो यमो वेदितव्यः। अग्मंनिति गकाररूपो वेदितव्यः। जघ्नथुरित्यत्र घकाररूपः। परिज्मानमिति जकाररूपः। अप्नस्वतीरिति पकाररूपः।

## श्रुतिर्वा यमेन मुख्यास्ति समानकाला ॥३३॥

अथवा यमोच्चारणेन समान काला श्रुतिर्भवा, श्रुति-

रस्ति । यथा यमस्तद्रूपो लक्ष्यते । पलिक्नीः यक्ष्म गृह्णामि । यस्माद्यमा अनुनासिकास्थानाश्चत्वारः संतो विंशतिस्थानिनां सद्रूपालक्ष्यन्ते तस्मादिदमुच्यते ।

## अनन्यास्तु प्रकृतेः प्रत्ययार्थे ॥३४॥

अनन्यास्तुप्रकृतेः प्रत्ययार्थेयमावेदितव्याः प्रकृत्यर्थे । किमुक्तंभवति यमःप्रकृत्याश्रयाणि कार्याणिलभतइत्यर्थः । तस्मात्उपध्मातेव इत्यत्रसोष्मात्पूर्व्येणसङ्घोच्यते सकृदिति ढकारेणसङ्घोच्यते यमः ।

## नसंयोगं स्वरभक्ति र्विहन्ति ॥३५॥

न खलु संयोगकार्याणि स्वरभक्तिर्विहन्ति । यामृजूर्णिः श्रेणिः सुम्नआपिर्क्षदेचत्तुः । स्वरसंख्यापरमिति स्वरभक्ति व्यवायेपिपरं रेफादितिक्रामति ।

## यमान्नासिक्या स्वरभक्तिरुत्तरा-गार्ग्यस्य ॥३६॥

यमादुत्तरा नासिकस्थाना स्वरभक्तिरागमोभवति । गार्ग्यस्य भगवतोभि प्रायेण । पलिक्नीरित् परिष्मानमिव ।

## ऊष्मासोष्माणः ॥३७॥

तस्यैवाभिप्रायेण घोष्मणो यमादुत्तरोनासिकास्थान-ऊष्मा, आगमोभवति । अमस्मादस्यंपरि ।

वर्जयेत्तम् ॥३८॥

तमूष्माणं वर्जयेत्। अमश्नादन्यं।

नादःपरोभिनिधानाद्ध्रुवं तत्कालस्थानम् ॥३९॥

घोषवतः अभिनिधानात्परो नादश्चागमोभवति। ध्रुवसंज्ञंच तद्भवति। तत्कालस्थानमभिनिधानकालस्थानमित्यर्थः। अर्वाग्देवाः। यद्वाग्वदः। तत्रैकआहुः। "ध्रुवकालमनिर्दिश्य मल्पत्त्वात्कवयोविदुः। यद्विप्रागणुमात्रायाः कालभेदेपितत्समं ॥७॥ नादोह्यभिनिधानेन पीड्यमानेननश्यति। तस्मादुच्चार्यतेयस्य यावद्वर्णात्मनःपरं ॥८॥ एकांतलोपं कवयोवर्णयंति ध्रुवस्यच। नासिकास्थानं रक्तस्य यथाद्वपाणिनिर्दिशेत् ॥९॥ सप्तमौकालनिर्दिष्टे पूर्वस्यविधि रिष्यते। पंचम्यास्तूत्तरस्याहुः तस्मात् कण्ठस्वराभवेत ॥१०॥ इति। ध्रुवसंज्ञायाः प्रयोजनं। सवर्णपूर्वस्य सस्य ध्रुवस्येति।

अश्रुति त्वघोषात् ॥ ४० ॥

अघोषात् अभिनिधानात्तु ध्रुवं अश्रुतिर्भवति। गायत्र्याम यत्ते।

नासिकास्थान मनुनासिकाच्चेत् ॥ ४१ ॥

नासिकास्थानं ध्रुवं वेदितव्यं । अनुनासिकादभि नि-धानात् यदिपरं भवति । अर्वाङ्नरा । तन्मेजुषस्व ।

## अन्तस्थायाः पूर्वस्वरूपमेव ॥ ४२ ॥

अन्तस्थायाः ध्रुवं पूर्वस्वरूपमेव भवति । यंयंयुजं वयं वयंते । तंवोदस्मं । पर्वतश्चित् । इमंल्लोगं ।

## व्याडेः सर्वत्राभिनिधानलोपः ॥४३॥

व्याडेः राचार्यस्य सर्वत्राभिनिधा नस्य लोपोभवति । उपध्मातीव धमति । अर्वाग्देवाः। सर्वत्रग्रहणा मन्तस्थाधि-कार निवृत्यर्थं ।

## परक्रमे स्वररेफोपधेन ॥ ४४ ॥

व्याडेराचार्यस्य परक्रमेच स्वरोपधेचरेफोपधेच नलो-पो भवति अभिनिधानस्य । परक्रमे अक्तत्त्वं । स्वरोप-धेअर्वाग्देवाः ॥ कथमिद मुभयत्र उदाह्रियते । लोपेच अलोपेच द्वयोर्गकारयो रुत्तरस्मिन्नभिनिधानलोपः । पू-र्वस्मिन्नलोपः । तस्मा दुभयत्रो दाह्रियते । रेफोपधे । परावर्भारभृत् ।

## सवर्णपूर्वस्य सहध्रुवस्य विपर्ययोध्रु वशिष्टे परेषां ॥ ४५ ॥

एतस्मिन्ध्रुवशिष्टे विधाने, अपरेषामाचार्याणां स-वर्णपूर्वस्य ध्रुवसहितस्य विधानस्यविपर्ययो वेदितव्यः । कश्चविपर्ययः। अलोपइति प्रकृतं। तस्यविपर्ययोलोपः ।

यद्देवाः । "व्याडेः सर्वत्राभिनिधानलोपइति । एवंसिद्धे नियमार्थ मिदमुच्यते । सवर्णपूर्वस्यैव स्यात् । इह माभूत् । अर्वाग्देवा इतिपरक्रमस्वररेफोपधेन इत्येवानुवर्त्तते । सह भुवस्येति कस्मात् यत्तत्त्वमं ।

रेफा त्स्वरोपहिता द्यंजनोदयाद्दकारवर्णा स्वरभक्तिरुत्तरा ॥४६॥

रेफात्स्वरोपहिताद्व्यञ्जनोदया ऋकारवर्णास्वरभक्तिरुत्तरा उपजायते । यदद्यकर्हिकर्हिचित् । अर्चन्त्यर्कमर्किणः । स्वरोपहिता दितिकस्मात् । आर्द्रांपदंकृणुते । व्यंजनोदयादितिकस्मात् । सुहूपकृत्तुं ।

विच्छेदात्स्पर्शोष्मपराच्चघोषिणः ॥ ४७ ॥

विच्छेदात्घोषिण्या अभिनिधाना त्स्पर्शपराच्च ऊष्मपराच्च स्वरभक्तिरुत्तरा उपजायते । अर्वाग्देवाः । शतवल्शः । स्पर्शोष्मपरादिति कस्मात् ? यद्यद्यामि तदाभर । घोषिण्याइति कस्मात् ? सम्यक् स्रवंति ।

द्राघीयसीतूष्मपरा ॥ ४८ ॥

ऊष्मपरात्तु या स्वरभक्तिः सा द्राघीयसी वेदितव्यां । यदद्य कर्हि कर्हिचित् । ऊष्मपरेति कस्मात् ? अर्चन्त्यर्कं मर्किणः ।

ह्रुतराक्रमे ॥ ४९ ॥

इतराच स्वरभक्तिः । इतराकतरा? याऊष्मपरा सा द्राघीयसीतस्याअपेक्षयाइतराहस्वा । अर्चंत्यर्कं । अनूष्मपरेति कस्मात् ? वर्ष्यां २ वह । अदर्श्यायती ।

## सर्वत्रैकेस्वरभक्तेर भावं ॥ ५० ॥

सर्वत्रांतःपदेच नानापदेरेफाच्च विच्छेदाच्च स्वरभक्तेरभावं एकेआचार्या मन्यंते । वर्ष्यान् अग्निरित्थं । अर्वाग्देवाः ।

## रेफोपधामपरे विद्यमानां ॥ ५१ ॥

रेफोपधांस्वरभक्तिं अपरेआचार्या विद्यमानांमन्यंते । बर्हि । अर्चंति । रेफोपधामितिकस्मात् अर्वाग्देवाः ।

## अक्रांतोष्मप्रत्ययाभाव मेके ॥ ५२ ॥

अक्रांतऊष्माप्रत्ययः यस्याः स्वरभक्तेः तस्याः अभावंएके आचार्यामन्यंते । वर्षं । अदर्शि । जल्हवः । अक्रांतइति कस्मात् । वर्ष्यान् । अदर्श्यायती ।

## पूर्वोत्तरस्वर सरूपतांच ॥ ५३ ॥

पूर्वोत्तरस्वर स्वरूपतां उत्तरस्वरस्वरूपतांच स्वरभक्तेरेके आचार्यामन्यन्ते । नकेवलमृकाररूपास्वरभक्ति र्भवतीत्यर्थः । धूर्षदमितिउकार रूपास्वरभक्तिः बर्हिषदइति इकाररूपास्वरभक्तिः ।

ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहु रपदांतभाजं ॥ ५४ ॥

उष्मोदयं प्रथमं स्पर्शमपदांतभाजं एके आचार्या द्वितीयमाहुः । यथाः ईश्वरं प्रत्य चंजगार । प्रत्यङ्ख्सूमसुंयन् । शतक्रतुःत्सरत् । विरप्शीगोमती । अपदांतभाजमिति कस्मात् । ऋक्सामाभ्यां । विराट् सम्राट् । अप्स्वग्ने ।

(१)कशातौ खकारयकारा उएके॥५५॥

कशातेर्धातोः ककारशकारयोः स्थानेखकारयकारौ कर्तव्यौ एकेआचार्यामन्यन्ते । अख्यद्देवः ।

तावेवख्याति सदृशेषु नामसु ॥५६॥

तावेवखकारयकारौ ख्यातिसदृशेषुनामसुकर्तव्यौ मन्यन्तेएके आचार्याः । सख्ये सखायस्तन्वे तनूभिरिति ।

इति श्रीपार्षदव्याख्यायां आनंदपुरवास्तव्य वज्रटपुत्रोव्वटकृतौप्रातिशाख्यभाष्ये षष्ठंपटलं समाप्तम् ॥

इति प्रथमोध्यायः ॥ ओं

(१) ख्याताविति खपुस्तकपाठः ।

मर्थं व्यञ्जनग्रहणं कृतंद्रष्टव्यम्। यदुक्तमधस्ता त्प्रतिपद-विधानस्य व्यञ्जनेसावकाशत्वात् मत्त्विवर्त्येत्यत्र उभयप्र-सङ्गे शास्त्रानुपूर्व्येणैव पूर्वमेवातस्यापत्तौ कृताथासु-काराभावादेव प्लुतरप्राप्ते व्यञ्जनग्रहणानर्थक्यमिति। तदेतदसम्यगुक्तं कथं। येनैकस्मिन्नुभे तुल्यबले युगपत्प्रा-प्तुत: तत्र शास्त्रानुपूर्व्येणसंधिर्भवति। यथातवेमे इत्यत्रव-दित्यस्यपदावस्थायामेव उदात्तपूर्वंस्वरितमनुदात्तमित्यनु-दात्तत्वे कृतेउत्तरेणसंधौ क्रियमाणे उदात्तपूर्वंनियतं विहत्याव्यञ्जनेनवा। स्वर्यते न्तर्हितमिति स्वरितस्य प्रा-प्नोति। इकारोदय एकारमकार इतिचसंधिः। तयोःशा-स्त्रानुपूर्व्येण पूर्वसंधिर्भवति। अतोन्यत्र पूर्वानुत्सर्गान्बा-धित्वाउतरे व्यपवादाभवंति। यथा भूतदेवानामवमे अ-वोभिरित्यत्र अवीरतेवा स्ववोरथा इति। प्रतिपदवि-धानमपि अभिनिहितं संधित्वं बाधित्वाअपवादान्तरं कृ-त्येतिकरणादीप्रकृत्यास्वरेषु चाप्योमिति प्रकृतेर्भावोभ-वति। एवंमत्त्विवर्त्येत्येव मादिष्वप्यपवादत्वात् दीर्घत्वं प्रस-ज्यते। तस्माद्व्यंजनग्रहणं क्रियते। अन्यस्त्वृकारादित्यन-र्थकं। कथं। पदान्तादिष्वेव विकारशास्त्रं विधीयते नहि-ऋकारांतं पदमस्तिकवा प्रयोजयतीति। सर्वत्र पूर्वप-दांता: स्तवंते वसुमघवोःपर्योरित्यत्र प्रयोजयति। यद्य-स्ति पितृवसु मातृवसुरितिवा यथादिष्टं गुणं अनादि-ष्टानां यत्नस्वदेवमादीनां(१)प्रतिविशेषणार्थं। यदि सर्वे-षांऋस्वाणां सामान्येनैवदीर्घत्वंस्यात्। इतरेषा मनुका-मर्थमानर्थक्यं स्यात्। नानर्थकं नियमार्थमेव तथ्यात् यथा अमुष्यामतुष्मिन्न वेति।

(१) प्रतिषेधार्थमितित्व पुस्तकपाठः।

सैवप्लुतिः ॥२॥

साएवप्लुतिरिति वेदितव्या । वाक्र्हस्वस्य दीर्घता । प्लुतिसंज्ञायाः प्रयोजनं । प्लुतोपाचरिते नतिरिति ।

यास्वरेषूपदिष्टा ॥३॥

याच स्वरसंधिषूपदिष्टा एवांषग्निमविषु साचप्लुतोपधेति ऋस्वस्यदीर्घता वेदितव्या ।

योनिमारैगादिषु चोदयादेः ॥४॥

योनिमारैगित्येवमादिषुच उदयादेर्ह्रस्वस्यदीर्घतानिपातिता साचप्लु ति रित्यववेदितव्या । तस्मा त्प्लु तादीनौ त्युच्यन्ते ।

मक्षिवत्युकारः प्लवतेसर्वचाप्य पदांतभाक् ॥५॥

मक्षित्यत्रोकारःप्लवतेसर्वत्राप्यपदांतभाक् । किंपुनः पदांतभाक् । मक्षूदेववतः । मक्षूमक्षूकृणुहि । मक्षूयुभिर्नरा । उकारग्रहणमकारस्याप्रसङ्गार्थं । नैतत्प्रयोजनं । पदांतादिष्वेवविकारशास्त्रविधिः । अथापदांतभागिति प्राप्नोतितन्निवृत्त्यर्थमुकारग्रहणं । सर्वत्रग्रहणं क्रियते सर्वत्रपूर्वपदांताः प्लवंतेवसुमघयोरितिनियमादिति । मक्षूमक्षूकृणुहीत्यत्रपूर्वपदस्यदीर्घत्वंनस्यादिति । अंतः पादाधिकारनिवृत्तिख्यापनार्थंवा । तस्मात् प्रनव्यसासहसः सूनुमच्छायज्ञेन । वै श्वानरंमनसा ग्निंनिचाय्याहविष्मंतः । अच्छावोग्निमवसइत्येवमादिषुदीर्घत्वंसिद्धंभवति ।

सुतायाःह्रीत्यतोन्येषुपदेष्वक्कीति-
विग्रहे ॥६॥

सुताःयाहीत्येताभ्यामन्येषुअक्कइत्येतत्पदंविग्रहेवर्त्त-
मानंप्लवते । अक्कावदतवसं । सुतायाहीत्यतोन्येष्विति-
कस्मात् । इन्द्रमक्कसुताइमे । अक्कयाह्याव्ह । विग्रहग्र-
हणमपदांतभाग्ग्रहणाद्दिनिवृत्त्यर्थम् । अधिकारार्थंचनि-
वृत्त्यर्थत्वात् । गोकामामेअक्कदयन्निति नभवति अधिका-
रार्थत्वात् । पुरुह्रूतंपुरुष्टुतमित्यत्रसार्धमद्यादिभिः सुतैः
पादांदावितिनभवति यथा । यद्वापुरुपुरुभुजेतिषष्ठं-
चाष्टाक्षरेऽक्षरमितिनभवति । यद्ययंविग्रहाधिकार
स्तत्वाप्यनुवर्तते । अंतः पादंविग्रहएवप्लुतइतिकिमर्थम् ।
तस्यप्रयोजनंतत्रैववक्ष्यामः ।

अनाकारोपधश्चांत्योयेत्युत्तरप-
दस्ययः । उदात्तादेर्व्यक्षरस्य ॥७॥

अनाकारोपधइतिउदात्तादेर्व्यक्षरस्योत्तरस्यपदस्य-
योन्त्यः सप्लवते । आपूयाध्वमाअभिगूर्यार्व । अना-
कारोपधइतिकस्मात् । परिदायरसंदुहे । अनाकारोप-
धश्चान्त्योयेत्युत्तरइतिकस्मात् वैश्वानरंमनसाग्निंनिचा-
य्याहवि अंतः इत्यव्रांतोयोयकारः आकारोपधोनभ-
वति । अंत्यइतिकस्मात् । इमांसमेतपश्यत । उत्तर-
पदस्येतिकस्मात् । मर्यश्रीस्पृहयद्वर्णः । उदात्तादेरिति-
कस्मात् । अप्रामिसत्यमघवन् । व्यक्षरस्येतिकस्मात् ।
सुवीर्यस्यपतयः स्याम । नैतदुदाहरणंयुक्तं । नास्येतिव्यं-

जनोपधइत्येवंसिद्धत्वात् । अतिथिग्वस्यवीरानितियथा । तस्मात् आमूरजप्रत्यावर्त्तयेत्येवंविधमन्यद्यं जनोदयंमृग्यं।

नास्येतिव्यंजनोपधः ॥८॥

नखलुअस्येत्ययमंतः प्लवतेव्यंजनोपधः सन् । राजा-भिकृष्टेहृपंमस्यवत्रः । तेजिष्ठयातिथिग्वस्यवर्त्तनी । व्यं-जनोपधइतिकस्मात् । अवास्याभिशुमतीरदीदेः ।

नियूयपिष्टतमयाभिपद्यप्रास्यसं-गत्यानुदृश्याभिहत्य । आरभ्य-संमील्यमचुंगमाभिरभिवृग्यय-चनिषद्यवीतिच ॥९॥

इत्येतानिपूर्वलक्षणप्राप्तानिनप्लवंते। नियूयपिष्टतमय । वनस्पतेरशनयानियूयपिष्टतमयावयुनानिविद्वान् । पि-ष्टतमयेतिकस्मात् । वनस्परतरशनयानियूयादेवानां । अभिपद्य । तएतेवाचमभिपद्यपाययया । प्रास्य । प्रा-स्यपारंनवतिम् । संगत्य । सर्वाः संगत्यवीरुधः । अनु-दृश्य । पूर्वेषांपंथामनुदृश्यधीराः । अभिहत्य । अभि-हत्यमपलान् । आरभ्य । येत्वारभ्यचरामसि । संमील्य । संमील्ययद्भुवना। मचुंगमाभिः मचुंगमाभिरूतिभिः । अ-ायव । अभिवृग्ययचहताः । यत्रेतिकस्मात् । अ-भिवृग्याचित् । निषद्यवि । पिबा निषद्यविमुचा । वी-तिकस्मात् । यत्र चानिषद्या इष्वः । चकार एवैक-स्य समुच्चयार्थः ।

नहि जह्यभिवीर्येण कृधीति कृणुथेतिच । एतान्येकाक्षरे पदे चैप्रीभाव्ये ॥१०॥

नहि । जहि । अभि वीर्येण । कृधीति । कृणुथ । इत्येतानिच पदानिच प्लवंते । एकाक्षरेपदे परे चैप्रसन्धौभूते प्रत्यये । नहि । नहीन्वस्यप्रतिमानं । जहि । जहीन्य १ विणं । अभि अभीष्व १ र्यः पौंस्यैः । इन्द्रमाता वीर्येणाऽपृष्टं । कृधीष्व १ स्मांअदितेः । कृणुथ । यच्चे चिदस्मै कृणुथान्यंचनं । एतानीति कस्मात् । उतोनोअस्या उषसोजुषितह्य १ कंस्य । एकाक्षरइति कस्मात् । तमर्यमाभिरक्षति । चैप्रीभाव्यइति कस्मात् । नहिनुते महिमनः समस्य ।

पराणि च ॥११॥

पराणि च यानि वक्ष्यामः तानिचप्लवंते चैप्रीभाव्ये । तान्युत्तरत्रोदाहरिष्यामः । चैप्रीभाव्यइति कस्मात् । मनोवातात्रधनुधर्माणिग्मन् ।

युक्ष्वमंदस्व विद्मेतिह्येति ॥१२॥

युक्ष्व । मंदस्व । विद्म । इत्येतानि प्लवंते । ह्येत्येतस्मिन्प्रत्यये । युक्ष्व युक्ष्वाह्यरुषीः । सार्धमद्यादिभिः प्लुतैरिति सिद्धसंयोगपरार्थग्रहणं । समंदस्वाह्यंधसः । विद्माह्यस्यवीरस्य । संयोग परार्थमेव ग्रहणं ।

## विद्धिपिबत्विति ॥१३॥

विद्धि । पिब । इत्येते प्लुवेते । तुइत्येतस्मिन्प्रत्यये । विद्धीत्व १ स्यनोवसो । पिबात्व १ स्यगिर्वणः । संयोगपरार्थं ग्रहणं ।

## जुहोत यज धासथशिशीतभरेतिस्विति ॥१४॥

जुहोत । यज । धासथ । शिशीत । भर । इत्येतानि-सुइत्येतस्मिन्प्रत्यये प्लुवेते आजुहोतास्वध्वरंजनं । संयोगपरार्थं ग्रहणं । तन्नः शद्धासथास्विंद्रियं । तंशिशीता स्वध्वरं । यथोदयानितिसिद्धे संयोगपरार्थं ग्रहणं । भर । त्वंपुरूण्याभरास्वश्व्या ।

## सुनुह्येत्येतेषु परेष्वघेति ॥१५॥

सु । नु । हि । इत्येतेषुपरेषु अघंइत्येतत्पदंप्लवते । सु । रुद्रस्यमर्या अघास्वश्वाः । नु । अघान्वस्य सदृशंजगन्वान् । हि अघाहिःग्नेक्रतोः । संयोगपरार्थं ग्रहणं ।

## हंपत्तेनमुंचताद्येतिवीति ॥१६॥

हंप । ऋतेन । मुंचत । अद्य । इत्येतानिविइत्येतस्मिन्प्रत्यये प्लुवंते । तंपाव्यमृहीमहं । इदंशृणोस्तहृते नाव्यायन् । एवोष्व १ स्मन्मुंचताव्यंहः । संवत्सर इदमद्याव्यख्यत ।

## सुन्वित्यनयो परयोरुकारः पदं ॥१७॥

सु । नु इत्येतयोरनयपरयोः उकारः प्लवते । सु । इमामूष्वा सुरस्य सुतस्य । नु । कदून्व १ स्याकृतं । अनयपरयो रितिकस्मात् । यस्मादूरस्य सीदुन्व १ योवा । संयोगपरार्थं ग्रहणं । पदमितिकस्मात् । वहस्यासुस्वरव्यं ।

## तयोरुत्तरेयोजघेति ॥ १८ ॥

तयोः सुनु इत्येतयोः उत्तरेइत्येतस्मिन्प्रत्यये । योज । घ । इत्येते प्लवेते । योज । योजान्विंद्रतेहरी । घ । प्रघान्वस्य महतः । यथोदयेतिसिद्धे संयोगपरार्थं ग्रहणं । एतावान्नैप्रोभाव्याधिकारः ।

## मृलयञ्जां वसुवित्तमं यत्सोम-जातवेदसं । भरतेत्येतेषु ॥ १९ ॥

मृलयञ्जां । वसुवित्तमं । यत् । सोमं । जातवेदसं । इत्येतेषुभरतेत्येतत् प्लवते । मृलयञ्जां । इव्यंमतिभरतामृलयञ्जां । वसुवित्तमं । भरता वसुवित्तमं । यत् । भरता यज्जुजोषति । सोमं । अपावप इरता सोममस्मै । जातवेदसं । प्रदेवंदेव्याधिया भरताजातवेदसं ।

## अपादांतः ॥ २० ॥

अपादांत इत्येतदधिकृतंवेदितव्यं । इतउत्तरं यद्वक्ष्यामः । वक्ष्यति चित्रमहित्वं गीर्गृणानः सतेपरन्वितीति । प्रनुमहित्वं इषभस्य वोचं । अपदांत इतिकस्मात् । मर्षोइंद्रः परमनुमहित्वं ।

## अद्येति करणादिषु ॥ २१ ॥

अद्ये त्येतत्प्लवते करणादिषु प्रत्यये । करणादौ न्युत्त-रत्रोदाहरिष्यामः ।

## करणं च चित्करते वृणीमहे भव-तं कृणोतु भवतस्वस्तये ॥ २२ ॥

ते इमे करणादयः । ये पूर्वसूत्रे निर्दिष्टाः । करणं । च । चित् । करते । वृणीमहे । भवतं । कृणोतु । भवतः । स्व-स्तये । इत्येतेषु अद्ये त्येतत्प्लवते । करणं । यतत्ते अद्या-करणं कृतं । च । अद्याचनोमृलयत । नैतदुदाहरणं । सार्धमद्यादिभिः प्लुतैः पादादावितिसिद्धत्वात् । ए-वं तर्हि । अधीहव मद्याचनेडय । एवमन्यान्यपि पादमध्यस्था न्युदाहरणानि । चित् । तदद्याचित्तउ-क्थिनः । करते । कोवामद्याकरते रातव्यः । वृणीमहे । सूक्तैरद्यावृणीमहे । भवतं । विश्विन्नो अद्याभवतं । कृणोतु । भद्रंसोमः सुवानो अद्याकृणोतुनः । भवत अवीश्चोअद्या भवतायजत्राः । स्वस्तये विश्वेदेवानो अद्यास्वस्तये ।

## पूर्विति चित्पुरुहूतो नृषूतः स-हस्राणि पुरुभुजा धियायते ॥ २३ ॥

पुरुइत्येतत्प्लवते । चित् । पुरुहूतः । नृषूतः । सह-स्राणि । पुरुभुजा । धियायते । इत्येतेषु प्रत्ययेषु । चित् । तिरः पुरूचिदर्णवं जगन्वान् । पुरुहूतः इंद्रः पुरू पुरुहू-

तः। रुष् तः। सिमापुरु त्रुषुतोष्वस्यानवे। सहस्राणी। त्वं पुरु सहस्राणि। यदा पुरुभुजा। पुरुपुरुभुजा। धियायते। एषपुरुधियायते।

# वह्निति त्वंदुहित दैव्यमुत्तरं ॥ २४ ॥

वह्नित्येतत्प्लवते। त्वं। दुहितः। दैव्यं। इत्येव-मुत्तरं। त्वं। आदाशुषे जातवेदो वहात्वं। दुहितः। चावहादुहितर्दिवः। दैव्यन्। आवहादैव्यञ्जनं।

# द्युम्नं रुद्रं नव्यमेतेषु वर्धय ॥ २५ ॥

द्युम्नं। रुद्रं। नव्यं। इत्येतेषु प्रत्ययेषु वर्धयइत्येतत्प्ल-वते। द्युम्नं। चार्यमसत्तो वर्धयाद्युम्न मिंद्र। रुद्रं। रुद्रं दि-वात्रर्धयारुद्रं। नव्यम्। दृहस्पतिं वर्धयानव्यमर्कैः।

# चिन्महित्वं गोर्गृणानःसतेपरं न्वित्यतेत्येचे न्मर्त्तशब्दाद्दिवः परे ॥ २६ ॥

चित्। महित्वं। गोः। गृणानः। सः। ते। इत्येवं-परंनुइत्येतत्प्लवते। अत्येचेत्यते मर्त्तशब्दे परेवा चदि-वः परेवा भवतः। चित्। चद्याचिन्नूचित्। महित्वं। प्रनु-महित्वं। गोः। इंद्र वेपोत्र करीषस्यनूगोः। गृणानः। नु-ष्टुतइंद्रनुगृणानः। सः। प्रनूममर्त्तः शवसा। ते। येचा

कनंतव्या कनंतनूतेमर्त्ता: ।उतो अभूमन् हिनूते अद्रिव: ।
अंत्येचेम्यत्तंशब्दाद्रिव: परेइतिकस्मात् । भसन्नुषप्रपूर्व्य: ।
नहिनुते महिमन: ।

तूतुजानोमतिभि र्भोजनानि
नोदद्धिस्तोमं भूरियोनिं त्वमेषु ।
भरेत्येत् ॥ २७ ॥

तूतुजान: । मतिभि: । भोजनानि । न: । दधि । स्तो-
मं । भूरि । योनिं । त्वं । इत्येतेषु प्रत्ययेषु भरइत्येतत्प्लव-
ते । तूतुजान: । अस्माइदुप्रभरातूतुजान: । मतिभि: । भृतिं-
नभरामतिभि: । भोजनानि । शचूयतामाभराभोजनानि ।
न: । सुपेशसं वाजमाभरान: । दधि । मानोमर्द्धीरा भराद-
धि । स्तोमम् भूषन्निव प्रभरा स्तोममस्मै । भूरि । संगृभ्या-
न आभरा भूरिपश्व: । योनिं । धासिमिव प्रभरायोनि
मग्नये । त्वं । विश्वावसून्याभरात्वंन: ।

न नुचिद्य: ॥ २८ ॥

नुइत्येतच्चिद्य इत्येवमुत्तरं नप्लवते । उतोनुचिद्यो
ओजसा । यइतिकस्मात् । अद्याचिन्नूचित् ।

भवेति स्तोटभ्यो द्युम्नोशतमेप-
रेषु ॥ २९ ॥

भवइत्येतत्प्लवते । स्तोटभ्य: । द्युम्नी । शत । मे । इत्ये-

तेषुपरेषु । स्तोतृभ्यः । भवास्तोतृभ्यो अंतमः । स्वस्तये । भवाद्युम्नी वाध्र्यश्व । शत । पूर्भवाशतभुजिः । मे । अभिप्रेहिदर्वित्रणतोभवामे ।

शोचायविष्ठ्यावायथाकर्ता यत् सादयासप्त । अर्चामरुद्मा स्तिष्ठानः सनास्वः पारयानव्यः ॥३०॥

शोचायविष्ठ्य । एवायथा । कर्त्तायत् । सादयासप्त । अर्चामरुद्मः । तिष्ठानः । सनास्वः । पारयानव्यः । इत्यतेषां द्विपदानां पूर्वपदांताः प्लवंते । शोचायविष्ठ्य । द्युक्षोचायविष्ठ्य । एवायथा । नकिरेवा यथात्वं । कर्त्तायत् । ज्योतिष्कर्त्तायदुश्मसि । सादयासप्त । देवांईळेसादयासप्तहोतॄन् । अर्चामरुद्मः । दिवोअर्चामरुद्मः । तिष्ठानः । ऊर्ध्वस्तिष्ठानऊतये । सनास्वः । सनाज्योतिः सनास्वः पारयानव्यः । अग्नेत्वं पारयानव्यः ।

बोधास्तोत्रे चक्रमा ब्रह्मवाहः शंसागोषूक्षादुहितर्वदातना ॥ अजानष्ट जंभयाता अधामहो गंतामायुध्वाहि सृजावनस्पते ॥३१॥

बोधास्तोत्रे । चक्रमाब्रह्मवाहः । शंसागोषु । उक्षादुहितः । वदातना । अजानष्ट । जंभयाताः । अधामः । गंतामा । युध्वाहि । सृजावनस्पते । इत्येतेषां च ख-

वंते पूर्वपदांता: । वोधास्तोत्रे । वोधास्तोत्रे वयोदधत् । चक्रमा ब्रह्मवाह: । त्वयाइवि स्वक्रमा ब्रह्मवाह: । शंसागोषु । प्रशंसा गोष्वघ्न्यं । उक्थादुहित: । व्युक्थादुहितर्दिश: । वदातना । अक्षावदातनागिरा । अजानष्टं । अजानष्टंयथापशुं । जंभयाता: । अभिमति जंभयाता अनह्रस: । अधामह: । महनामधामह: । गंतामा । आगंतामारिषण्यत । युक्ष्वाहि । अग्नेयुक्ष्वाहियेतव । सृजावनस्पते । अवसृजावनस्पते ।

अग्नेरक्षाणास्तिष्ठा हिरण्ययं सोतावरेण्यंशोचामरुद्वृध: ॥ शिक्षास्तोटभ्यो भूमाविवंधुर: पिबामधूनां सोतापरीतिच ॥३२॥

इत्येतेषां पूर्वपदांता: प्लवंते । अग्नेरक्षाण: । अग्नेरक्षाणो अंहस: ॥ अग्नइतिकस्मात् ॥ तेनसोमाभिरक्षन: ॥ तिष्ठाहिरण्ययं रथंतिष्ठा हिरण्ययं ॥ सोतावरेण्यं ॥ सोमं सोतावरेण्यं ॥ शोचा मरुद्वृध: ॥ शुक्रशोचामरुद्वृध: ॥ शिक्षास्तोटभ्य: । शिक्षास्तोटभ्यो मातिधग्भगोन: ॥ भूमाविवंधुर: ॥ सपप्रथानो अभिपंचभूमाविवंधुर: । आव्यभूमेति सिद्धे संयोगपराथं ग्रहणं । पिबामधूनां । अग्नं पिबामधूनां । सोतापरि । आसोतापरिषिंचत ॥

सत्त्वमिमित्त्व दधिष्व वसिष्व श्रोतसुनोत हिनोत पुनात ॥ विद्म जगृभ्म ररम्म ववन्म त्ता- म सुपप्तनि,मन्थ तमत्स्व । सर- रद,रणा जिन्वधारयाथंत्तर यज- यच्छदश्नस्य साधसेध । तपरुज मृलवर्द्धयावयाचश्रवय नमस्यवि- दाष्ट कृणवजोष । शृणुधि शृणुत- यंतयच्छ तस्तवसिम गृहत कृत- मोषथ । दिधृतपचतवृश्चविध्य- ताथ मदथात्तय दीतपाथन । उ- पागत्या क्वलीकृत्यवन्नाजा वि- ष्टनो रुष्य । दुष्कर्तेलिप्वंमर्म- ज्म बिभये यत्तंतच्छतं । साधंम- दादिभिः प्लतैः पादं गै व्यंज नोदयं । न्वेववजं नसंयोगे प्रोषे- चा पठितेसति ॥ ३३ ॥

कृद्व । मिमिद्व । दधिष्व । वसिष्व । श्रोत । सुनो-
त । हिनोत । पुनात । विद्म । जगृभ्म । ररभ्म । ववन्-
म । चाम । सुपप्तनि । मंथत । मत्स्व । सर । रद ।
रण । जिन्व । धारय । अर्षं चर । यज । यक्ष्व । दशस्य ।
साध । सेध । तप । रुज । मृल । वर्धं । यावय ।
अव । अवय । नमस्य । विद । अष्ट । कृष्व जोष । शृ-
णुधि । शृणुत । यंत । यच्छत । स्तव । सिम । गृहत ।
कुव । मोषथ । दिधृत । पचत । इश्व । विध्यत । अथ ।
मदथ । अत्त । यदि । इत । पायन । उपागत्य । अक्व-
लीकृत्य । ववाज । अविष्टन । उरुष्य । दुष्कर्त्त । ईलिष्व ।
मर्द्धम । विभय । इयर्त्त । इत्यंतं एकोनसप्ततिसंख्यं
पदं यदनुक्रान्तम् अद्यइत्येवमादिभिः प्लुतैः भव,बोध,
शिक्षेत्यादिभिरनुक्रांतैः सहेतिशेषः अपादार्थं मनुक्रां-
तैः पादादौच संयोगपरार्थं । सोच । तिष्ठ सोतइत्येतै-
स्त्रिभिः पुनरुक्तै विनाएकत्रिंशतासार्धं तच्छतंपादादौ
प्लवते । व्यंजनेप्रत्यये । व्यंजनाधिकारेतुपुनर्व्यंजन-
गृहणस्यप्रयोजनमुक्तं । नृष्टतइंद्रगृणानः । रक्षाणो
ब्रह्मणस्पते इत्येवमादिषुषत्वणत्वयोः कृतयोः पदेदृष्टेपि
व्यंजनमात्रेस्यादिति । सच्व । सच्वादेव प्रणस्युरः ।
मिमिद्व । मिमिद्वा समिलाभरा । दधिष्व । दधिष्वा-
जठरेसुतं । वसिष्व । वसिष्वा हिमियेध्य । श्रोत । श्रो-
ता हवंजरितुरेव यामकृत् । सुनोत । सुनोता सोमपा-
व्ने । हिनोता नोअध्वरं देवयज्या । पुनात । पुनाता
दक्षसाधनं । विद्म । विद्माते अग्ने त्रेधा जगृभ्म । जगृ-
भ्माते दक्षिणं । ररभ्म । ररभ्मा शवसस्पते । ववन्म ।
ववन्मातुते युज्याभिरूती । चाम । चामाय विष्णुधा-

थस:। सुपप्तनि।सुपप्तनीथे कृधुः चोदसः। मंथत। मथता नरः कविमद्दयतं। मत्स्व। मत्स्वा सुशिप्रमन्दिभिः। सर। सरा रसेव विष्टपं। रद। रदापूषेवनः सनिं रक्ष। रक्षा योअस्यधर्मभिः। जिन्व। जिन्वाधियोवसुविदः। धारय। धारया चमसां इवविवक्षसे। चर्ष। चर्षासोमद्युमत्तमः। चर चराणोअभिवार्य। यज। यजानो मित्रावरुणा। यच्छ। यच्छा नः शर्म सप्रथः। दशस्य दशस्यानः पुर्वणीकहोतः। साध। प्रनिव्रवोदितये तुराय साधा दिवः। सेध। द्युमत्तमं दक्षंधेह्यस्मे सेधाजनानां। तप। तपातपिष्ठ तपसा। रुज। रुजाहृळ्हा चिद्रक्षसः। मृल। मृलानो रुद्रोतनः। वर्ध। वर्द्धानो अमवच्छवः। यावय। यावया वृक्यं १ वृकं। भव। भवातिरूप मुत्तममपश्यं। श्रावय श्रावया वाचंकुविदंग। नमस्य। नमस्या कल्मलीकिनं। विद। विदा चिन्नुमहांतः। अष्ट। अष्टापरः सहस्रा। कृष्वाकृतो अकृतं। जोष। जोषा सवितर्यस्यतेहरः शतं। शृणुधि। शृणुधी जरितुर्हवं। शृणुत। शृणुता मरुमंडवं यंत। यंता नोष्टकं छर्दिः। यच्छत। यच्छता नोदुष्परिहंतुशर्म। स्तव। स्तवा तुवुहपूर्व्या। सिम। सिमा पुरुष्टुतः। गूहत। गूहता गुह्यंतमः। कुत्र। कुत्रा चिद्यस्यसमृतौ। मोषथ। मोषथा वृक्षंक पनेव दिधृत। दिधृता यच्चदुष्टरं। पचत। पचता पक्तीरवसेकृणुध्वमित्। हव। हवा सध्यंप्रवगूं। विधवत। विध्यता विद्युतारक्षः। पव। पवा तेअंगिरस्तम। मदथ। मदथा हव्यविषः। पत्त। पत्ता वनोषि। यद्दो। यद्दोषोभि संपायते। कृत। कृतामकृतोअग्निना।

चर्षदेवाय । यदिवा । पुरुदाशुषि । वसुश्रुण्याय । अधवसु । अधयत् । पुरुशीति । इत्येतेषुयथाप्राप्तापुतिर्नभवति । वर्षंशुभ्रे । वर्षंशुभ्रेस्तुवते । ऋजन्यः । ऋजयस्त्वापृतन्यति । सिधराजन् । सिधराज नयस्विधः । वङ्कव्यानि । वङ्कव्यानि सुमनस्यमानः । यदिमे । यदिमे सख्यमावरः । अधयामनि । अधयामनि प्रसितस्यतद्वः विश्वदातारम् । विश्वदातारमिषम् । अधधारया । अधधारया मध्वापृचानः । अधतेविश्वं । अधतेविश्व मनुहा-सदिष्टये । विश्वमितिकस्मात् । अधातेविष्णो विदु-षाचित् । पुरुवा । पुरुवारं पुरुत्मना । अर्चंगाय । अर्चं-गाय चवेधसे । वङ्कवायो । वङ्कवायो नियुतोयाहि । पि-बमध्वः । पिबमध्व स्तृपदिंद्राहृषस्व । पुरुविद्वान् । पुरु-विद्वां स्तचीषम । पुरुविश्वानि । पुरुविश्वानि जूर्वन् । अधवायुं । अधवायु न्नियुतःसश्चतस्वाः । पुरुशस्त । पुरु-शस्त मधस्तये । यदिमृत्वोः । यदिमृत्वो रंतिकन्नोतएव । अधजिह्वा । अधजिह्वा पायतीति । पुरुविश्वा । पुरुविश्वा जनिम मानुषाणां । पिबशुद्धं । पिबशुद्ध सुदकुमाचरंती । पिबराये । पिबराये शवसेह्वयमानः । वङ्कुतस्त । व-ङ्कुतस्त मिंद्रयज्ञिन्नाकम् । भरद्वाजेर्च देवा य । अर्चंदेवायवसवायसप्रथः भरद्वाजइतिकस्मात् । अर्चा-देवायाग्नये । यदिवा । यदिवा, दृधेयदिवान । पु-रुदाशुषि । पुरुदाशुषि विचयिष्ठोअंहः । वसुश्रुण्या-य । वसुश्रुण्याय वसुकृतम् । अधवसु । अधवसु विसवः । अधयत् । अधय देपानिषुवः । पुरुशि । पुरुशि वापुरुभुजादेवाम् ।

कृधीति परेषु सहस्रसांधियं, ज-
रित्रे, न, इति ॥३५॥

कृधीतिपदं प्लवते। सहस्रसां। धियं। जरित्रे। नः।
इत्येतेषु परेषु। सहस्रसां। कृधी सहस्रसामृषिं। धियं।
कृधीधियं जरित्रेवाजरत्नां। जरित्रे। कृधीजरित्रे मघ-
वन्मघवः। नः। कृधीन ऊर्ध्वांचरथाय जीवसे।

तत्रेतिचांत्ये ॥३६॥

तेषांप्रत्ययानां अंत्ये नइत्येतस्मिन् प्रत्ययेतत्र इत्ये-
तत्पदंप्लवते। तत्रानो इ ब्रह्मणस्पतिः।

सहस्रेन सुश्रवसं पवस्व इनोश्र-
धी त्येषुपरेषुतेन ॥३७॥

सहस्रेन। सुश्रवसं। पवस्व। इनोषधि। इत्येतेषुपरे-
षु तेनइत्येत त्प्लवते। सहस्रेन। तेनासहस्रेनावयं। सु-
श्रवसं। तेनासुश्रवसं जनं। पवस्व। तेनापवस्वां धसा।
इनोषधि। तेनानोषधिवोषत। इ इतिकस्मात्। तेन-
नो मृत्जीवसे।

देववेन केतमित्युत्तरेषु दधा-
तेति ॥३८॥

देवं। वेन। केतं। इत्येतेषुपरेषु दधातेति प्लवते।
देवं। दधातादेवं मृत्यवे। वेन। दधातावेनं सादिव।
केतं। दधाताकेतं सादिते।

श्रुधि वंस्वे ति नः परे ॥३९॥

श्रुधि वंस्वइत्येते नः प्रत्यये परेप्लवेते । श्रुधि श्रुधीन इन्द्रह्वयामसि । वंस्व । वंस्वानो वार्यापुरु ।

वेदेति विश्वस्य भूमं म उत्तरे ॥४०

वेदइत्येतत्प्लवते । विश्वस्य । भूमं । मे इत्येवमुत्तरं । विश्वस्य । वेदाविश्वस्यमेधिरः । भूमं । वेदाभूमंचित् इंद्रह्वयामसि । मे । वेदामे देवऋतुपाऋतूनाम् ।

शुनः शेपेचप्लवते यकारे ॥४१॥

शुनः शेपेच ऋषौवेदइत्येत त्प्लवते यकारेप्रत्यये । वेदायोशीनांपदं । शुनः शेपइतिकस्मात् । वेदयस्त्रीणि विदथान्येषां । यकारइति । कस्मात् वेदनावः ।

ब्रह्मेति नो हवेचगिरः कृणोतिते कृणोत तूतो दितिचोत्तरेषु ॥४२॥

ब्रह्मइत्येतत्प्लवते । नः । हवेचगिरः । कृणोति । ते । कृणोत । तूतोत् । इत्येतेषुपरेषु । नः । ब्रह्माणा इंद्रोपयाहि । हवेचगिरः । ब्रह्माचगिरो दधिरे । हवेइतिकस्मात् । ब्रह्मचतेजातवेदः । कृणोति । ब्रह्माकृणोति वरुणः । ते । ब्रह्मात इंद्रगिर्वणः । कृणोत । ब्रह्माकृणोत पन्यइत् । तूतोत् । ब्रह्मातूतो दिंद्रोगातुं । ४

# अभीतिनोनुनवंतेसतोनरंद्वासत्स्विति ॥४३॥

अभीत्येतत्प्लवते । नः । नु । नवंते । सतः नरं । द्वा । सत् । सु । इत्येतेषुपरेषु । नः । अभीन आवष्टव्य । नु । अभीषु माष्टषभ चक्रमीथाः । नवंते । अभीनवंते अद्रुहः । सतः । अभीषत स्तदाभर । नरं । अभीनरं धीजवनं । द्वा । अभीद्वा किमुत्व यः करंति । सत् । अभीष दप चुच्यवत् । सु । अभीषु णः सखीनां ।

# आग्नेऽर्षंपरेतु मुख्ये ॥४४॥

इत्येतेषां प्रत्ययानां मुख्ये नइत्येतस्मिन्प्रत्यये । आ । अग्ने । अर्षे । इत्येवंपरे एवअभीतिपदं प्लवते । आ । अभीनआ ववृत्स्व । अग्ने । अभीनोअग्न उक्थमिज्जुगुर्याः । अर्षे । अभीनोअर्षं दिव्या । आग्नेर्षंपरइति कस्मात् । अभिनो वाजसातमं ।

# चक्रु वंदेते दमस्यन्समुद्रो रथेन नः सप्तक्षपो न्मदंति । ते वो भयंते नियुद्भिः कृपीटं रथस्य सोमस्य मतीरयांति ॥४५॥

चक्रुः । वदेते । दमस्यन् । समुद्रः । रथेन । नः । सप्तक्षपोन् । मदंति । ते । वः भयंते । नियुद्भिः । कृपीटं । रथस्य । सोमस्य । मतिः । रयांति । इत्येते चक्रुराद-

यः । वक्ष्यति । यत्रेतिचक्रुरादिषु नरः सुपर्णा इत्युक्तं यत्रेत्येतत्प्लवते । चक्रुरादिषु । नरः सुपर्णाइत्येतयोश्च । चक्रुः । यत्राचक्रुरमृतागातुं । वदेते । यत्रावदेते अवरः परः । दशस्यन् । यत्रादशस्यन्नुषसः । समुद्रः । यत्रासमुद्र स्कभितः । रथेन । यत्रारथेन गच्छथः । नः । यत्रान स्वक्राजरसं तनूनां । सप्तकृषीन् । यत्रासप्तकृषीन्परः । मदंति । यत्रामदंति धूतयः । ते । यत्रातत्थाकुः परमं । वः । यत्रावोदिद्युद्ददति । भयंते । यत्राभयंते भुवना । नियुद्भिः । यत्रानियुद्भिः सचसेशिवाभिः । कृपीटं । यत्राकृपीट मनुतद्दहंति । रथस्य । यत्रारथस्य बृहतोः सोमस्य । यत्रासोमस्य तृंपसि । मतिः । यत्रामति विंद्यते । रणंति । यत्रारणंति धूतयः । नरः । यत्रानरः संचविच द्रवंति । सुपर्णाः यत्रासुपर्णा अमृतस्य ।

**समुद्रं ह्वेस्वर्णं नवग्वशब्दो दशग्वं-**
**दंसिष्ठ वसूनिनो वसु । इद्दे निर्द्वे-**
**नु यतिभ्यः सहंतः पृथिव्यां नि-**
**र्हंसि समत्सु पावक ॥ ४६ ॥**

समुद्रं । ह्वे स्वर्णं नवग्वशब्दः । दशग्वं । दंसिष्ठ । वसूनि । नः । वसु इद्दंनिर्द्वेनु यतिभ्यः । सहंतः । पृथिव्यां । निः । हंसि । समत्सु । पावकइत्येतेसमुद्रादयः । वक्ष्यति । समुद्रादिषु येनेति ।

येनइत्येतत्प्लवते । समुद्रादिषु प्रत्ययेषु । समुद्रं । येनासमुद्र मसृजोमहीः ह्वे स्वर्णं । येनास्व १ र्णं ततनाम ।

हेहूतिकस्मात् । येन स्वस्तभितं येन नाकः । नवग्वशब्दः । येनानवग्वो दध्यंङ् । येनानवग्वे । दशग्वं । येनादशग्वं । दंसिष्ठ । येनादंसिष्ठकृत्वने । वसूनि । येनावसून्याभृता । नः । येनानः पूर्वेपितरः पदज्ञाः । वसु । येनावसु प्रयच्छसि । इन्द्रंनिष्टं । येनाइन्द्रंनिरच्छः । हेहूतिकस्मात् । येनइन्द्रंचिकेतथः । नु । येनानु सद्यओजसा । यतिभ्यः । येनायतिभ्यो भृगवे । सहंतः । येनासहंत ऋभ्वत । पृथिव्यां । येनापृथिव्यां निक्रिविं । निः । येनानि रंहसोयूयं । हंसि । येनाहंसि न्य १ त्रिणां । समत्सु । येनासमत्सु सासहः । पावक । येनापावक चक्षसा । यत्रेतिचक्रुरादिषु नरः सुपर्णाइतिच समुद्रादिषुयेनेति ।

## तत्रेतिमेसदोरथं ॥४७॥

तत्रइत्येतत्प्लवते । मे । सदः । रथं । इत्येतेषुपरेषु । मे । तत्रामेनाभिरातता । सदः । तत्रासदःकृणवसे । रथं । तत्रारथ सुपयग्मं सदेम ।

## अत्रेति नो नु कल्पेषु नूनं वाजेषु पृत्सुषु ॥४८॥

अत्रेत्येतत्प्लवते । नः । नु । कल्पेषु । नूनं । वाजेषु । पृत्सुषु इत्येतेषु । नः । अत्रानो वाजयुं । नु । अत्रानु कंज्यायान् । कल्पेषु । अत्राकल्पेषु नःपुमः । नूनं । अत्रानूनं यथापुरा । वाजेषु । अत्रावाजेषु वाजिनि । पृत्सुषु । अत्रापृत्सुषु कासुचित् ।

## आद्येचेद्वाजयुंपार्ये कमग्नेमघव-न्परे ॥४९॥

एषां प्रत्ययानामाद्ये । नः । नु । इत्येते । वाजयुं । पार्ये । कं । अग्ने । मघवन् । इत्येवंपरेयदिभवतः तर्हिअवेरयेतत्प्लवते । वाजयुं । अवानोवाजयुंरथं । पार्ये । अवानःपार्येधने । कं । अवानुकंज्यायोन्यज्ञवनसः । अग्ने । अवानोअग्नऊतिभिः । मघवन् । अवानोमघवन्वाजसातौ । आद्येचेद्वाजयुंपार्येकमग्नेमघवन्परइतिकस्मात् । अवानोवृजिनाशिशीहि ।

## रास्वापितःशतेनानोवर्धस्वासुश्रु-धीहवं । मंदस्वासुवहस्वासुवने-मातंनहीनुवः ॥५०॥

इत्येतेषां पूर्वपदान्ताःप्लवन्ते । रास्वापितः । रास्वापितमरुतां । शतेनानः । शतेनानो अभिष्टिभिः । वर्धस्वासु । वर्धस्वासुपुरुष्टुत । श्रुधीहवम् । श्रुधीहव मिंद्रमारिषण्यः । मंदस्वासु । मंदस्वासुस्वर्णरे । वहस्वासु । वहस्वासु स्वश्व्यम् । वनेमाते । वनेमाते अभिष्टिभिः । नहीनुवः । नहीनुवो मरुतोअंत्यस्मे । वइतिकस्मात् नहिनुते महिमनः ।

## पाथादिवोधातारयिं सृजतागय-

साधनं । राखाचोरुनशग्धीनः सृजतामधुमत्तमं ॥ ५१ ॥

इत्येतेषांपूर्वपदांताःप्लवंते । पाथादिवः । पाथादिवोविमहसः । धातारयिं । धातारयिंसहवीरंतुरासः । सृजतागयसाधनं । समीवत्सन्नमातृभिःसृजतागयसाधनं । रास्वाच । रास्वाचनोअमृतमर्त्तभोजनं । उरून । उरुनराधःसवनापुरूणि । शग्धीनः । शग्धीनइंद्रयत्वा । सृजतामधुमत्तमं । आनःसोमंपवित्रआसृजतामधुमत्तमं ।

जह्रीचिकित्वोवेत्थाहिरत्नथानह्वतामखम् । युयोताशरुंस्वेनाह्विवनेमाररिमावयं ॥ ५२ ॥

जह्रीचिकित्वः । वेत्थाहि । रत्नथान । ह्वतामखं । युयोताशरुं । स्वेनाहि । वनेमाररिमावयं । इत्येतेषांचपूर्वपदांताःप्लवंते । जह्रीचिकित्वः । जह्रीचिकित्वोअभिशस्तिमेतां । वेत्थाहि । वेत्थाहिवेधोअध्वनः । रत्नथान । रत्नथानेमचन्नशत् । ह्वतामखं । ह्वतामखंनभृगवः । युयोताशरुं । युयोताशरुमस्मत् । स्वेनाहि । स्वेनाहिहंशवसाजघंथ । वनेमाररिमावयं । स्तोमंयज्ञंचादरंवनेमाररिमावयं ।

प्रप्रावोअस्मेधामाह सनाज्योतिरपाहृधि । ऋध्यामातेवाम-

देवे जुह्वोतामधुमत्तमं ॥ ५३ ॥

प्रप्रावोऽअस्मे । धामाह । सनाज्योतिः । अपाहु-धि । ऋध्यामातेवामदेवे । जुह्वोतामधुमत्तमम् । एतेषांच पूर्वपदांताः प्लवन्ते । प्रप्रावो अस्मे । प्रप्रावो अस्मे-स्वयशोभिः । अस्मेइतिकिं । प्रप्रवस्त्रिष्टुभमिषं । धामाह । धामाहयत्तेअजर । सनाज्योतिः । सनाज्यो-तिः सनास्वः । अपाहुधि । अपाहुधि परिवृतन्नराधः । ऋध्यामाते वामदेवे ऋषौ । ऋध्यामातओहैः । वामदे-वइतिकस्मात् । ऋध्यामातेवरुणास्वाम्नतस्य । जुह्वोतामधु-मत्तमं । तस्मादुदास्येहविर्जुह्वोतामधुमत्तमं ।

यच्चवामहे धिष्वाशवो जनिष्वा-देववीतये । अधात्वं ह्यद्याद्या-श्वःश्वः सचस्वानः स्वस्तये ॥ ५४ ॥

इत्येतेषांच पूर्वपदांताः प्लवंते । यच्चामहे । यच्चामहे सौमनसाय । धिष्वाशवः । धिष्वाशवः शूरयेन । जनि-ष्वा देववीतये । जनिष्वादेववीतये सर्वतातास्वस्तये । अधात्वंहि । अधात्वंहिनस्करः । हीतिकस्मात् । अध-त्वमिन्द्रविद्धि । अद्याद्याश्वःश्वः । अद्याद्याश्वःश्वइन्द्र । सचस्वानःस्वस्तये । अग्नेसूपायनोभव सचस्वानःस्वस्तये । स्वस्तयइतिकस्मात् सचस्वनः पराकश्चा ।

इति श्रीपार्षदव्याख्यायामानंद-पुरवास्तव्यवजटपुत्रोव्वटकृतौ

प्रातिशाख्यभाष्येसप्तमंपटलम् ।

अंतः पादं विग्रहणप्वप्लुत उकारो व्रजस्य सु धानमोभिः । शुचिं पवित्रं तु मह्नो नुचाप्लुतं सुतस्येति ॥ १ ॥

अंतः पादं विधिर्भविष्यति । यदित ऊर्ध्वमनुक्रमिष्यामः विग्रहेच भविष्यति । अप्लुतः अव्यञ्जन उकारः प्लवते । व्रजस्य सु धाःनमोभिः । शुचिं । पवित्रं । तु । मह्नोः । नुचाप्लुतं । सुतस्य । इ येतेषु परेषु । व्रजस्य । व्युव्रजस्य तमसः । सु । अस्याऊषुणाउपसातये । धाः । शंसात्युक्थयजतेव्युधाः । नमोभिः । होतारमूनमोभिः । शुचिं । तमूशुचिंशुचयः । पवित्रं । अत्यूपवित्र मक्रमीत् । तु । मायामूतु यज्ञियानां । मह्नोः कदूमह्नीरधृष्टा अस्य । नुचाप्लुतं । समूनुपत्नी वृषभिर्जगम्यु । सुतस्य तऊसुतस्य सोम्यस्य अप्लुतमितिकस्मात् । किंस्विदन्त्र्यामिकिमुनूमनिष्ये । अंतःपादमितिकस्मात् । किंनोदुदुहर्षसे दातवाउ येदेवासो दिव्येकादशस्थ अप्स्वेतिविग्रहइतिप्रकृते-विग्रहाधिकारे पुनर्विग्रहग्रहणा मुदयविशेषणार्थं क्रियते तस्मात्सुपुव आदुसुस्तुष इत्यत्रउकारस्य दीर्घत्वंनभवति यद्युदयविशेषणार्थं विग्रहग्रहणं । त्यं सुमेषं महयास्वर्विदमित्येव मादिषु नसिध्यति । अत्रापिवचनप्रामाण्यात् सिद्धं । अथापिक्वचिदपि वचनस्यावकाशान्नसिद्धमिति तथापिनदोषः । उदयविशेषणार्थं इह-

निवृत्तमिति व्याख्या स्याम: ॥ एष्विति कस्मात् । अ-स्मादिदमग्निमिव । अपृक्तइति कस्मात् । सहीनः सो-मइत्सुधाः ।

यद्युदयोदयान । सोमसुतिं च-क्रिराम स्तवाम स्तवाना गृभा-यरथं श्रुधीति ॥ २ ॥

यदिप्रजस्येत्येवमादीनामेते उदयानभवंति । अथ-उकारः प्लवते । एषुप्रत्ययेषुनप्लवते । सोमसुतिं । इमा-सुषुसोमसुतिं । चर्क्रिराम । दधिक्राव्ण इदनुचर्क्रिराम । स्तवाम । आशुंदधिक्रांत मनुष्टवाम । स्तवाना । इन्द्रा-विष्णूनृवदुषुस्तवाना । गृभाय । अवर्षीर्वर्षमुदुषु गृभाय । रिथं । युवोरूषुरथंहुवे । श्रुधि । इमाउषुश्रुधीगिरः ;

तेअस्ति तेमहिमनः प्रवोचत प्र-वोचं नःसुमना द्वैपदाश्च ॥ ३ ॥

इतीमेद्वैपदा उदयोदयायदि चेन्नभवंति अथउकारः प्लवते । तेअस्ति इन्द्रयउन्नुतेअस्ति । अस्तीति कस्मात् । आदूनुतेअनुक्रतुं । तेमहिमनः । कउनुते महिमनः स-मस्य । प्रवोचत । नतस्यविद्मतदुषु प्रवोचत । वोचते-ति कस्मात् । पर्यूषुप्रधन्ववाजसातये । प्रवोचं । अभीयोधर्मस्तदुषुप्रवोचं । नः सुमनाः । उशन्नुषुणः सु-मनाः । सुमनाइति कस्मात् । अस्याजषुणाउप ।

महेदधिध्वेतिरमुश्चनो मृध स्वर-

## नमध्वं नमते नयंत स्वित्ये-तेषु ॥ ४ ॥

इत्येतेषु प्रत्ययेषु सुइत्येतत्प्लवते । महे । प्रसुमहे-सुशरणाय । दधिध्व । निषुदधिध्वमस्वनंतउत्सं । तिर । प्रसुतिराशचीभिः । मुंच । विषुमुंचसुषुवुषः । नः । अ-धप्रसूनउपयंतु । स्वधः । विषुमधः शिस्नथः । चर । वि-षु चरस्वधा अनु । नमध्वं । निषूनमध्वंभवतासुपाराः । नम । निषूनमातिमति । ते । प्रसूतइन्द्रप्रवता परिभ्यां। नयंत । प्रसूनयंतगृभयंतः ।

## एकाक्षरयोः पराणिचे दपेंद्रा-ग्नेत्राध्वरमायुरेत्विति ॥ ५ ॥

एषुप्रत्ययेषु यौएकाक्षरौ । नः तेइति तयोः परा-णि । उप इन्द्रअग्ने अव । अध्वरं । आयुः । एतु । इति यदामानि भवंति सु इत्येतत्प्लवते। उप। अधप्रसून उ-पयंतु । इंद्र । मोषूणइन्द्रात्र । प्रसूतइंद्रप्रवता । अग्ने । नू षूणोअग्ने शृणुहित्वमी । अव । मोषूणोअव जुहुरंतर । अध्वरं । जुप्रस्वसूनो अध्वरं । आयुः । प्रसून आयुर्जीवसे । एतु । प्रसून एत्वध्वरं । एकाक्षर-योःपराणिचेतिकस्मात् । मोषुणः परापरा । तां-सुतेकीर्तिं ।

## सटे त्येतयोर्निषु पीतयेपरं॥ ६ ॥

सदइत्येतत्प्लवते । योनिषु । पीतये ॥ इत्येवं पर-

सत् । योनिषु । निषदायोनिषुत्रिषु । पीतये । निषदा-
पीतयेमधु ।

## धन्वेत्येतत्सोमराट्पूयमानः ॥ ७ ॥

धन्वेत्येतत्प्लवते सोम राट् पूयमानः । इत्येतषुपरे-
षु । सोम । प्रधन्वासोमजागृविः । राट् । ऋण्योनतायुर-
तिधन्वाराट् । पूयमानः । अभिस्वरधन्वोपूयमानः ।

## यदीति क्रथो मनसःकवीनां स-
## बंधवो गोःसरमेति तेषु ॥ ८ ॥

यदीत्येतत्प्लवते । क्रथः । मनसःकवीनां । सबंधवः ।
गोः । सरमा । इत्येतेषुपरेषु । कृथ । युवायदीकृथः पु-
नः । मनसः । तच्चद्यदी मनसः । कवीनां । गुहायदी-
कवीनां । सबंधवः । गिरायदी सबंधवः । गोः । स्वाष्ट-
ग्देवस्या मृतंयदी गोः । सरमा । विदद्यदी सरमा रु-
ग्णमद्रेः ।

## चरेति पुष्टिं सोम चर्षणि प्राः ॥ ९ ॥

चरइत्येतत्प्लवते । पुष्टिं । सोम । चर्षणिप्राः । इत्ये-
तेषुपरेषु । पुष्टिं । रेवांइवप्रचरा पुष्टिमच्छ । सोम । अवी-
रहा प्रचरासोमदुर्यान् । चर्षणिप्राः । विशःपूर्वीः प्रच-
राचर्षणिप्राः ।

## जनिमेति हंति सं जातवेदाः ॥१०॥

जनिमेति प्लवते । हंति । सं । जातवेदाः । इत्ये-

तेषु परेषु । इति । विश्वावेदजनिमाहंति । सं । वि-
श्वेदते जनिमासं विविक्तः । जातवेदाः । विश्वावेद ज-
निमा जातवेदाः ।

## रंधयेति येषु कंशासदुत्तरं ॥ ११ ॥

रंधय । इत्येतत्प्लवते । येषु । कं । शासत् । इत्ये-
वमुत्तरं । येषु । एभ्योमृभ्यो रंधयायेष्वस्मि । कं ।
सुन्वद्भ्यो रंधयाकं चिदव्रतं । शासत् । बर्हिष्मते रंध-
याशासदव्रतान् ।

## न नः कारिस्वित्युपसातयेपरे ॥ १२ ॥

नखलुसु इत्येतत्प्लवते नः कारेप्रत्यये उपसातयइत्ये-
वं परे सति । उपसातये । अस्माऊषुणा उपसातये ।
सातइतिकिं । अधप्रसून उपयंतु ।

## मह्यायाव जयकाव्येन गूर्धयभ-
## रेतिचस्वरितिप्रत्ययेपट् ॥ १३ ॥

मह्य । अव । जय । काव्येन । गूर्धय । भर । इतिष-
डेतानिप्लवंते । स्वः इत्येतस्मिन्प्रत्यये मह्य । त्वंसुमेषंम-
ह्यास्वर्विदं । अव । अस्माकेभिर्नृभिरत्रास्वर्जय । जय ।
हनोवृत्रंजयास्वः । काव्येन । विप्रः कविः काव्येनास्वर्च-
नाः । गूर्धय । तंगूर्धयास्वर्णरे । भर । द्युमंतंशुष्ममा-
भरास्वर्विदं ।

## मदपर्षपिपृतधन्वयक्षतरुहेमेति
## स्वस्तय उत्तराणि ॥ १४ ॥

मद । पर्षं । पिपृत । धन्व । यच्छत । रुहेम । इत्ये-तानिप्लवंते । स्वस्त्ययनइत्येवमुत्तराणि । मद । तां आदि-त्यां अनुमदास्वस्तये । पर्षं । सनः सिंधुमिवनाया-तिपर्षास्वस्तये । पिपृत अद्यादेवासः पिपृतास्वस्तये । धन्व । परिसोमप्रधन्वास्वस्तये । यच्छत । उरुणः शर्म-यच्छतास्वस्तये । रुहेम । अरिष्यन्तमारुहेमास्वस्तये ।

दधिममदततन्विसिंचतस्तववदतानजरक्षतोक्षत । पिपृतपृणातपृक्तप्रुषस्थघहिनवायजुहोतपश्यत ॥ चक्रमाकुलभूमस्मशिशीतस्तोतपप्तत । यथोदयानिसर्वाणि ॥ १५ ॥

दधिम । मदत । तन्वि । सिञ्चत । स्तव । वदत । अनज । रक्षत । उक्षत । पिपृत । पृणात । पृक्त । प्रुष । स्थः । घ । हिनव । अय । जुहोत । पश्यत । चकृम । अकुल । भूम । स्म । शिशीत । स्तोत । पप्तत । इत्येतानिसर्वाणियथोदयानिप्लवंते । दधिम । यस्मि-न्वयंदधिमाशंसमिंद्रे । मदत । इंद्रंगोभिर्मदतावस्वः । तन्वि । नध्वस्मानस्तन्वी ३ रेपआ । सिञ्चत । ग्रामवे-भिः सिंचतमधमंधः । स्तव । इंद्रं स्तवान्तमंयस्य । व-दत । रोदसीआवदतागणश्रियः । अनज । इमांवाच-मनजापर्वतच्युते । रक्षत पूर्भी रक्षतामरुतोयमावता ।

उच्चत । धृतमुच्चतोमधुवर्णमर्चते । पिपृत । निरंहसः पिपृतानिरवद्यात् । पृणात । स्तोमेभिरीपृणाताभोजमिंद्रं । पृच्छत । तंपृच्छतासजगामामवेद । प्रुष । अभ्रप्रुषोनवाचाप्रुषावसु । स्थ । वैष्ठानरःश्रेष्ठतमाः । घ । नघासमामपजोषं । हिनव । प्रतस्तेहिनवायत्तेषस्मे । अश । नाहमतोनिरयादुर्गहैतत् । जुहोत । आजुहोतादुवस्यत । पश्यत । तदस्येदम्पश्यताभूरिपुष्टं । अहं कविरुशुनापश्यतामा । चक्रम । वयंहितेचक्रमाभूरिदावने । अकुत । माकुवानोगृहेभ्यः । भूम । द्यावाचभूमाजनुषः । स्म । उत्तस्मासद्यइत्परि । शिशीत । तंशिशीतासध्वरं । स्तोत । इंद्रंस्तोतानव्यंगीर्भिः । पप्तत । वयोनपप्ततासुमायाः ।

## त्वितिचैकाक्षरोपधम् ॥१६॥

तुइत्येतच्चैकाक्षरोपधं प्लवते । तु । आतून उपगंतन । एकाक्षरोपध मिति कस्मात् । पिबातु सोमं गोऋजीकमिंद्र ।

## कदा हरिवो वरुणस्य चक्रतुः सूर्यस्य निष्ठाइव भूमतेषुन ॥ १७ ॥

कदा । हरिवः । वरुणस्य । चक्रतुः सूर्यस्य । निष्ठाइव । इत्येतेषु भूमइत्येतन्नप्लवते । कदा । भूमे भूमकदाचन । हरिवः । अंद्याय भूमहरिवः परादै । वरुणस्य । माहैयेभूमवरुणस्य । चक्रतुः । सुरेतसापितरा

भूमचक्रातुः । सूर्यस्य । माश्नेभूमसूर्यस्यसनृद्दशि । नि-
ष्ठ्या।इव । माभूमनिष्टयाइवेंद्रत्वत् ।

## वस्त्राणि हि बाबधे यज्ञियानां ते-
## दंसोदे नः सव शक्रतेषु तु ॥ १८ ॥

वस्त्राणि । हि । बाबधे यज्ञियानां । तेदंसोद्दे । नः
सव । शक्रइत्येतेषु प्रत्ययेषु तुइत्येतन्नप्लवते । वस्त्रा-
णि । सतु वस्त्राण्यधपेशनानि । हि । अध्वर्यवातुहिषिंच।
बाबधे । वितुबाबधेरोदसी । यज्ञियानां । मायामूतु-
यज्ञियानां । तेदंसोद्दे । तत्तुतेदंसोयदहन् । इदइतिक ।
स्मात् । तातूतइंद्र महतोमहानि । नः सव । आतून:
सवयतिगव्यं । नः सवेतिह इतिकस्मात् । उक्तं । अ।तून
इंद्र इचक्रन्नस्माकं । शक्र । स्तीर्णंबर्हिरातुशक्रप्रयाहि ।

## चक्रमेति दैपदे भूरिदुष्कृतं वर्ध-
## तां विप्रवचसो जिह्वयेति ॥ १९ ॥

चक्रमेत्येत न्नप्लवतेद्वे परे भूरिदुष्कृतं वर्द्धतां । वि-
प्रवचसः । जिह्वया । इत्येतेषुपरेषु भूरिदुष्कृतं । नवो
गुहा चक्रमभूरिदुष्कृतम् । दुष्कृतमिति कस्मात् वयंहिते
चक्रमाभूरि दावने । वर्धतां । प्राचंयज्ञं चक्रमवर्द्धताम् ।
विप्रवचसः । आपुरंदरं चक्रम विप्रवचसः । जिह्वया ।
यहोदेवा श्चक्रमजिह्वया ।

## काण्वायना निष्कृतोरेतयोः स्य ॥२०॥

काण्वायनाः निष्कृतीः । एतयोस्य इत्येतत्पदन्नप्लव-

ते ' काण्वायनाः । सुदेवास्य काण्वायनाः । निष्कृतीः । अथोयूयंस्य निष्कृतीः ।

## जाताः सुरथाहवनश्रुतश्च ॥ २१ ॥

जाताः । सुरथाः । हवनश्रुतः एतेषु च प्रत्ययेषु स्य-इत्येतन्नप्लवते । जाताः । येस्य जाताअदितेः । सुरथाः । स्वश्वास्यसुरथाः । हवनश्रुतः । कद्वस्यहवनश्रुतः ।

## सवा परं घेति न कौत्सवैमदं ॥ २२ ॥

सवा । इत्येवंपरं घइत्येतत्पदं कुत्सस्यवाविमदस्य-वा ऋषेर्वर्तमानं नप्लवते । सः । अयंघसतुरोमदः । वा आघवा याभिररुणीः । कौत्सवैमदमितिकस्मात् । सुनोथोघासमर्त्यः । प्रकृतेपि प्रतिषेधे नकारः श्लोकपूर-णार्थो द्रष्टव्यः ।

## स्मराशिमित्यादिषु न ॥ २३ ॥

स्मइत्येत न्नप्लवते । राशिमित्येवमादिषु प्रत्ययेषु । राशिमादी नुत्तरचोदाहरिष्यामः ।

## प्रतिष्मच ॥ २४ ॥

प्रतिपूर्वं च स स्मइत्येतन्नप्लवते । प्रतिष्म । प्रति-ष्मरिषतोदह । प्रतीतिकस्मात् । नहिष्मातेशतंचन ।

## स्मतेपरेषु व्रजनंवनस्पतेशुभे परुष्ण्याम् ॥ २५ ॥

स्मतेइत्येतस्मिन्द्वे पदेपूर्वेनप्लुवते । व्रजनं वनस्पते । शुभे । परुष्ण्यां इत्येतेषुपरेषु । व्रजनं । अधस्मतेव्रजनं वनस्पते । उतस्मतेवनस्पते । शुभे । उतस्मतेशुभेनरः । परुष्ण्यां । उतस्मतेपरुष्ण्याम् व्रजनमित्यादिपरेष्विति कस्मात् । नहिष्मातेशतंचन ।

## स्म पुरावृषाकपौ ॥ २६ ॥

स्मपुराइत्येतन्नप्लुवते वृषाकपौ स्मपुरा । संहोत्रं स्मपुरानारी । वृषाकपाविति कस्मात् । येस्मापुरा गातूयंतीव ।

## राशिं वाजेषु मे सद्म पूषणां तं हृ ह्रायि मा दुर्हणायतः । यस्मै यद्वृत्रहत्येषु मावते वातीयं यस्य मा दुर्गभीयसे ॥ २७ ॥

तइमे राशिमादयः पूर्वसूत्रेनिर्दिष्टाः । राशिं । उतस्म राशिं परियासिगोनां । वाजेषु । प्रस्मवाजेषुनोव । मे । उतस्ममेव्यत्यै । सद्म । उतस्मसद्म हर्यतस्यपस्त्योः । पूषणां । वहामिस्मपूषणमंतरेण । तं । अपस्मतंपथोजहि । तं हृत् । कूटंस्मतृंहत् । ह्रायि । उतस्मह्रायिदर्शतः । मा । त्रिः स्ममान्हः । दुर्हणायतः । अवस्मदुर्हणायतः । यस्मै । शुचिष्मयस्माअत्रिवत् । यत् । नहिष्मयद्धवः-पुरा । वृत्रहत्येषु । मघोनस्मवृत्रहत्येषुचोदय । मावते ।

निष्ममावते। वातः। उत्सवातोवहति। यं। उतस्मयंशिशुम्। यस्य। अधस्मयस्यार्चयः। मत्। उपस्ममन्तरंतो। दुर्गृभीयसे। अतऊर्ध्वमेकादशिद्वादशिनो रेत्येतत्पर्यंतद्वैपदग्रहणांकृतं द्रष्टव्यं। तेषां द्वैपदानां पूर्वपदान्ताः प्लवंते।

पृक्षाविपश्चितमवापुरंध्याधात्वद्रिग्वीरान्वनुयामात्वोताः। जनयादैव्यंभुजेमातनूभि र्हाविह्तो वासयामन्मनाच ॥ २८ ॥

इत्येतेषां पूर्वपदांताः प्लुवंते। पृक्षाविपश्चितं इंद्रं पृक्षाविपश्चितं। अवापुरंध्या। रथमवापुरन्ध्या। धात्वद्रिक्। नधात्वद्रिगपवेतिमेमनः। वीरान्वनुयामात्वोताः। वाजैर्वी रान्वनुयामात्वोताः। वीरानितिकस्मात् वयमग्ने वनुयामत्वोताः। जनयादैव्यं।मनुर्भव जनयादैव्यं जनं। भुजेमातनूभिः। यच्चं भुजेमातनूभिः। ह्वावह्नतः। ह्वाह्वावह्नतो मर्त्यीयच्चंयच्चं : वासयामन्मना। वस्त्रेणेव वासयामन्मना शुचिं।

वेदावसुधितिं रोमापृथिव्या वोचासुतेषु धावतासुहस्त्यः। मुंचासुपुषः स्वाह्वापितूना मिह्वाह्वणीष्व बोधयापुरंधिं ॥ २९ ॥

इत्येतेषां पूर्वपदांताः प्लवंते । वेदा वसुधितिं । सहि-वेदावसुधितिं । रोमापृथिव्याः । अग्निर्ददाति रोमापृथिव्याः । वोचासुतेषु । प्रनुवोचासुतेषु वां । धावतासु-हस्त्यः । आधावतासु हस्त्यः । मुंचासुषुवुषः । विषूमुंचासुषुवुषः । स्वाध्रापितूनां । ऊधर्नगोनां स्वाध्रापितूनां । इहाद्दणीष्व । अस्मां इहाद्दणीष्व । बोधयापुरंधिं । प्रबोधयापुरंधिम् ।

अवथासः कृणुथासुप्रतीकं तिरा-शचीभिः कृणुतासुरत्नान् । नमं-तानहुषो नयताविवंतः स्मा-च्यावयं नोरयावृष्टिमंतं ॥ ३० ॥

इत्येतेषांपूर्वपदांताः प्लवंते । अवथासः । यंदेवासो-वथासविचर्षणिः । कृणुथासुप्रतीकं । अग्नीरंचित्कृणुथा-सुप्रतीकं । तिराशचीभिः । प्रमूतिराशचीभिर्येत उक्थि-नः । कृणुतासुरत्नान् । सुभगान्नोदेवाः कृणुतासुरत्नान् । नमंतानहुषः । अधनमंता नहुषः । अनयाविवंतः । ये-वाजाँअनयताविवंतः । स्माच्यावयन् । त्वंहिस्माच्यावय-न्नच्युतानि ईरयावृष्टिमंतं । प्रपर्जन्य मीरया वृष्टिमंतं ।

असृजतामातरं सूरथंहुवे नय-तावस्वापयामिथूदृशा । इता-जयता गतासर्वतानय इरयथा-मरुतोनेषथासुगं ॥ ३१ ॥

इत्येतेषां पूर्वपदांताः प्लवंते । असृजतामातरं । मं वत्मेनासृजता मातरंपुनः । सुरथंहुवे । युवाभ्यां सुरथंहुवे । हुवइतिकिं । अस्माकंसुरथंपुरः । नयतावद्वं । नजानीमो नयतावद्वं । स्वापयामिथुहृशा । निष्वापयामिथुहृशा । इताजयत । प्रेताजयतानरः । आगता सर्वतातये । तआदित्याआगता सर्वतातये । ईरयथामरुतः । उदीरयथा मरुतःसमुद्रतः । नेषथासुगं । चक्षुरिवयंतमनुनेषथासुगम् ।

अन्यत्राचि त्पिबतामुंजनेजनं घास्था वोचेमाविदथेष्विताधियं । इतानि यत्राविदशस्यथा क्रिविंचाबोधातिद्रावयात्वं किरावसु ॥ ३२ ॥

इत्येतेषां पूर्वपदांताः प्लवंते । अन्यत्राचित् । नूअन्यत्राचिदद्रिवः । पिबतामुंजनेजनं । इदंद्यावा पिबतामुंजनेजनं । घास्थाः । त्वंत्वंवा घास्थाअहं । वोचेमाविदथेषु । तमिद्वोचेमाविदथेषु शंभुवं । इताधियं । एताधियं कृणवामः । इतानि । आत्वेतानि षीदत । यत्रावि । मनोयत्रावितद्वधु विचेतसः । दशस्यथा क्रिविं । याभिर्दशस्यथाक्रिविं । चाबोधाति । सचाबोधाति मनसायजाति । द्रावयात्वं । अध्वर्यो द्रावयात्वं । किरावसु । आनः सोमपवमानः किरावसु ।

**ह्यापदेव कर्त्तनाश्रुष्टिं योधया-
च जग्रभावाचं । पाययाच त-
र्पयाकामं गातुयाच मंदया-
गोभिः ॥ ३३ ॥**

इत्येतेषांपूर्वपदांताः प्लवंते । ह्यापदेव । आह्यापदे-
वगच्छसि । कर्त्तनाश्रुष्टिं । अध्वर्यवः कर्त्तनाश्रुष्टिं । यो-
धयाच । सयोधयाच क्षययाच जनान् । जग्रभावाचं ।
प्रतीचींजग्रभावाचम् । पाययाच । असादय पायया-
चामधूनि । तर्पयाकामं । व्यश्नुहि तर्पयाकामं ।
गातुयाच । दशस्याच गातुयाच । मंदयागोभिः । इमं-
काममंदयागोभिः ।

**घास्यालादेनासुमतिं वोचानु-
व्यथया मन्युं । नेथाचंचक्राजर-
सं भवता मृलयंतश्च ॥ ३४ ॥**

इत्येतेषां पूर्वपदांताः प्लवंते । घास्यालात् । विश्वा-
मातुवतधाघास्यालात् । एनासुमतिं । विद्मां एना-
सुमतिं यात्यच्छ । वोचानु । अधिवोचानु सुन्वते । व्य-
थयामन्युं । अमित्रस्य व्यथयामन्युमिन्द्र । नेथाच ।
पाथनेथाच मर्त्यं । चक्राजरसं । यत्रानश्चक्राजरसं त-
नूनां । भवतामृलयंतः आदित्यासोभवता मृलयंतः ।

**एवाचन भजाराये ररिमाते भ-**

**जाभूरि । श्रुधीनउभयत्वाते भ-**
**जात्वं म्ललयानश्च ॥ ३५ ॥**

इत्येतेषां पूर्वपदांताः प्लवंते । एवाचन । मोतभूरो अहएवाचन । भजाराये । अभक्तोचिदाभजाराये अस्मान् । ररिमाते । पिबासोमंररिमाते । भजाभूरि । विभजाभूरितेवसु । श्रुधीनः । अवमेह इन्द्रदाद्दृहि श्रुधीनः । उभयवाते । इन्द्रभातरुभयवाति । भजात्वं । आगोमति व्रजेभजात्वं । म्लयानः । सोमराज न्मृलयानःस्वस्ति ।

**एकादशिद्वादशिनो लघावष्टम**
**मक्षरं । उदये संहिताकाले ॥३६॥**

एकादशाक्षरद्वादशाक्षरयोःपादयो रष्टममक्षरं प्लवते । संहिताकाले लघावुदये सति । एकादशिनः । तादीत्नाशत्रुंन किलाविवित्से । द्वादशिनः । अग्नेसख्ये मारिषामा वयंतव । एकादशिद्वादशिनो रितिकस्मात् । भद्रंवोअपि वातयमनः । लघावितिकस्मात् । इषाममत्सुदासस्य नामचित् । अस्तभूष्यो दूतमिव वाचमिष्ये । संहिताकाल इतिकस्मात् । पादित्यासस्त अक्रानवा इधुः । इदंत एकं परजत(१)एनां ।

**नःकारे च गुरावपि ॥ ३७ ॥**

नःकारेउदये गुरावपिच एकादशिद्वादशिनो रष्टममक्षरं प्लवते । द्युभिर्हितो जरिमासूनो अस्तु ।

---

(१) एकमित्यपिपाठः ।

## दशमं चैतयोरेवं ॥ ३८ ॥

दशमंचाक्षरंप्लवते एतयोरेकादशिद्वादशिनोः लघावुदये संहिताकाले नःकारे च गुरावपि । अद्दाविश्वा सुमनादीदिही नः । अवरुद्रा अशसो हंतनावधः । एकादशिद्वादशिनो रितिकस्मात् । प्रसुवानासो बृहद्दिवेषु हरयः । लघाविति कस्मात् । रायएषे वसेदधीतधीः । तन्मत्मत मिंद्र शूरचित्रपातु । नःकारे च गुरौ । नूदेवासो वरिवःकर्तनानो भूतनः ।

## षष्ठं चाष्टाक्षरे क्षरं ॥ ३९ ॥

अष्टाक्षरेच पादे षष्ठमक्षरं प्लवते । एवंकथं यथा एकादशि द्वादशिनो रष्टममक्षरं दशमञ्च । ईशानायप्रयावधं । अष्टाक्षरमिति कस्मात् । पिवासोम मभिय मुग्रतर्दः । लघाविति कस्मात् आपवस्व देवसोम । संहिताकालइतिकस्मात् । नेमिंतिष्टे वसुद्वं ।

## व्यूहैः संपत्समीक्ष्यो न क्षैप्र वर्णैकभाविनाम् ॥ ४० ॥

ऊनेपादे क्षैप्रवर्णानांच संधीनामेकीभाविनांच व्यूहैःपादस्य संपत्समीक्षितव्या । उद्दत्यस्या अकृणोत नान्नयां इतिक्षैप्रसंधिः । व्यूहात् द्वादशाक्षरस्यपादस्यदशममक्षरंप्लवते क्षैप्रैकभाविनामित्येव सिद्धेवर्णग्रहणा सामर्थ्यात् । गोर्नपर्व विरदा तिरश्च इतिवर्णव्यूहात् एकादशाक्षरस्याष्टममक्षरं प्लवते । प्रेता जयतानरइति एकीभावव्यूहादष्टाक्षरस्यषष्ठमक्षरंप्लवते एवंसंपत्सर्वत्र-

सामीच्या ऊमइतिवचनात् पूर्णोत्र्युहोनभवति ।. प्रत्यग्रभीष्म नृतमस्य नृणां ।

नवाद्वधंत वातस्यावघानि जिघांससि । सासह्या मवहत्याम दीदिह्यष्टममूर्गु हि ॥ ४१ ॥

नतुखलु षष्ठएकादशिद्वादशिनोरष्टाचरेच एवमादीनि प्लवंते यानिवत्त्याम: । वाद्वधंत । वातस्य । अवघानि । जिघांससि । सासह्याम । वहत्याम । दीदिह्यष्टमं । ऊर्गु हि इति । वाद्वधंत । दातह्यामानं वाद्वधंतन्नृणां । वातस्य । युजानो अश्वावातस्यधुनी । प्रतिषेधाधिकारे वातस्येति ग्रहणमनर्थकं दशाचरत्वात् पादस्य । नानर्थकं व्यूहनद्वादशाचरं लिङ्गंभवति । नास्यव्यूह इष्यते । कस्मात् । सर्वानुक्रमण्यामनुष्टभस्ता: स्वराज इत्युक्तत्वात् । व्यूहनसता विराजो दृहस्य: । तस्मादुभयोरपि दशाचर एवायपादोभवतिअतएव वातस्येति ग्रहणमनर्थकंभवतीति मर्त्तस्येति तस्यस्थाने पठंति यज्ञेमर्त्तस्यरिपो: । अवघानि । संतोवघानि पुनाना: । जिघांससि । यत्स्तोतारं जिघांससि सखायं । सामह्याम । इन्द्रत्वोता:सासह्याम पृतन्यत: । वहत्याम । आतेमनो वहत्याम मघाय । दीदिह्यष्टमं । शोचाशोचिष्ठ दीदिहि विशेमय: । अष्टममिति कस्मात् । अह्वाविश्वा सुमना दीदिहि । ऊर्गु हि । पुनानइन्द ऊर्गु हिविवाजान् ।

पुरुप्रजातस्या नभिन: क्रणुहि

**द्वाक्षरोपधम् । हर्यश्वोतभवंत्विं-**
**द्र सदनायास्ति नामचित् ॥४२॥**

इत्येतानिच एकादशिद्वादशिनो रष्टाक्षरंचनप्लवते । पुरुप्रजातस्य । विदत्पुरुप्रजा तस्यगुहायत् । अभिनः । पतिरिवजाया मभिनोन्येतु । नइतिकस्मात्तंदुरोषमभीनरः । तंनोअग्नेअभीनरः । क्राणुहिद्व्यक्षरोपधं । वर्षीयोवयः क्राणु हि शचीभिः । द्यक्षरोपध मितिकस्मात् । जहिवृष्ण्यानि क्राणुहीपराचः । हर्यश्व । सनःप्रजायै हर्यश्वमृलय । उत । अदिते मित्रवरुणोतमृलय । भवंतु । स्वस्तयआदित्यासो भवंतुनः । इन्द्र । यथाचितेक्कंद इन्द्रजुजोषसि । सदनाय । सूर्योमासासदनाय सधन्या । अस्ति । रायस्पूर्धिस्वधावोस्तिहिते । नामचित् । वृषासमत्सु दासस्यनामचित् । चिदितिकस्मात् । दिवेदिवे अधिनामादधाना ।

**चमसांइवाभ्रि वसवानद्वादशि-**
**नः सृजास्यविमदस्य । सुमखा-**
**यधारय ददातुरक्षधिया दधा**
**तु दधिषेय ॥ ४३ ॥**

इत्येतानिच एकादशिद्वादशिनो रष्टाक्षरेच नप्लवंते । चमसांइव । धारयाचमसांइवविवक्षसे । अभ्रि । देवस्यत्वातुरभ्रिभगस्य । वसवान । मारिषण्यो वसवानवसुः सन् । द्वादशिनःसृज । संरायाभूयसासृजमयोभुना । द्वादशिनइति कस्मात् । स्वादोःस्वादीय स्वादुनासृजा-

मं । अस्य । मंदारंनकिरस्य मघानि । विमदस्यच । त-
वचेन्द्रविमदस्य चऋषेः । सुमखाय । कद्रुद्राय सुमखाय
हविर्दे । धारय । अस्मेरयिं निधारय विमामहे । ददा-
तु । अग्निरिषां सख्ये ददातुनः । रत्नधिया । ज्योति-
ष्मतः पथोरत्नधियाकृतान् ।(१)धियेतिकस्मात् । दधातु ।
स्वस्तिपूषा असुरोदधातुनः । दिधिषेय । स्तोतारमिद्दि-
धिषेय रदावसो ।

# अङ्गसरस्वति पंचचरंति ग्नाभि-रिहेन्व सिरण्यसिधाव । विद्वि-षुणोभिषतः सुवितायत्वा स-मिधानदधीमहि देव ॥ ४४ ॥

(२)अंग । इन्द्रासोमायुव मंगनऋतं । सरस्वति । अय-
मुते सरस्वति वसिष्ठः । पञ्च । विश्वेदेवा अदितिः
पंचजनाः । इत्तात्मायवलोय स्त्वान्नैतदुदाहरणं ।
इदंतर्हिउदाहरणं ये यज्ञाय पंचशतास्मयु । चरं-
ति । समश्वपर्णाश्चरंति नोनरः । ग्नाभिरिह । श-
न्नस्त्वष्टाग्नाभि रिहशृणोतु । ग्नाभिरितिकस्मात् ।
अधाते अग्नेकिमिहावदन्ति । इन्वसि इषा । यज्ञा-
यमिन्वसि इषाइवः । रण्यसि । उक्थेवा यस्यरण्य-
मि समिंद्रुभिः । धाव । अव्योवारेपरिधावमधुप्रियं । वि-

(१) रक्षाणोअग्ने ।

(२) इत्येतानिच षष्ठं अष्टमदशमं अष्टाक्षरेचएकादशद्वाद-
शेचनप्लवंते ।

द्विषुणः । वयंते वयइन्द्रविद्विषुणः । विद्वौतिकस्मात् । द्युभिर्हितो जरिमासूनो अस्तु । अभिषतः । मह्नोविश्वाँ अभिषतः । सतइतिकस्मात् । तंदुरोषमभीनरः सुविताय । इन्द्रायाहि सुविताय महेनः । त्वासमिधान । मर्त्तासस्त्वासमिधा नह्वामहे । दधीमहि । प्रतिस्तोमं दधीमहि तुराणां । देव । क्रधीनोअह्नयो देवसवितः ।

जामिषुजासुचिकेत किरासि स्मस्युपपात्यसि सोमशतस्य । आयुषिचेतति विष्टपि मास्वप्रो श्मसि मूर्धनि स ह्म वरंत ॥४५॥

जामिषु । जासु । चिकेत् । किरासि । स्मसि । उप । पाति । असि । सोम शतस्य । आयुषि । चेतति । विष्टपि । मास्व । प्र । उश्मसि । सद्म । वरंत । इत्येतानिचणकाद्दशिद्वाद्दशिनो दृष्टेकेचन प्लवंते । जामिषु । गर्भंदधासि जामिषु विवक्षसे । जासु । अनमीवोरुद्र जासुनोभव । चि केत । अयंभुवोरयीणां चिकेतयत् । किरासि । आयथामंदमानः किरासनः । स्मसि । युष्मेद्दा अपिष्मसि सजात्ये । उप । इमामुषु सोमसुतिमुपनः । पाति जातोबृहन्नभि पातितृतीयं । असि । पुह्वयोदग्धासिवना । सोम । अंतुहिचा सुतं सोममद्दामसि । शतस्य । अधि निधेहिशतस्यन्तृणां । आयुषि । पिप्रीषति स्वआयुषिदुरोणे । चेतति । सोमाजैत्रस्य चेतति यथाविदे । विष्टपि । समुद्रस्याधि-

विष्टपि मनीषिणः। मास्व। नृनोरयि सुपमास्वन्तवंतं। प्र। अभिसव्येन प्रमृश। उग्रमसि। तावांवास्तुन्युग्रमसि गमध्ये। मूर्द्धनि। निपर्वतस्य मूर्द्धनि सदंता। मध्म। नज्ञहोता परिसद्मभितायन्। वरंत। माह्निः शर्राह्निर्दुरोवरंतवः।

प्रदिविवरुणातमसि तिरसि घृतमिवदिवि ममहिनुविशः। उषसि पृथिविरजसि वहसि हनति पितरि विविहिनि मधु॥४६॥

इत्येतानिच एकादशिद्वादशिनो दृष्टाक्षरेच नक्षवंति। प्रदिवि। इन्द्रं सोमासः प्रदिविसुतासः। वरुण। अवतेहेलो वरुणनमोभिः। तमसि। योअपाचीनेतमसिमदंतीः। तिरसि। प्रत्नधस चित्तिरसिमनीषां। घृतमिव। मधुश्चुतंघृतमिवसुपूतम्। दिवि। श्येनाइवदधिदिविनिषेद। मम। अधाकामा इमेममविवोमदे। हि। यूपादमुंचोअशमिदहिषः। नुविशः। तृणास्कंदस्य नुविशः। विशइतिकस्मात्। नूवन्नयामन्ने तशस्य-नूरणे। उषसि। तमिद्दोषा तमुषसि यविष्ठं। पृथिवि। तद्धृतंपृथिवि बृहत्। रजसि। असूर्त्तेसूर्ते रजसिनिषत्ते। वहसि। अतंद्रो हव्यावहसि हविष्कृतः। हनति। पुरुचहदाहनति निदस्यून्। पितरि। कामंकृणवानेपितरि युवत्यां। वि। उभेअप्रा रोदसी विषआवः। विहि। यजस्ववीर प्रविहि मनायतः।

नि । पराजितासो अपनिलयंताम् । मधु । आग्नेवायो मधुपिब ।

## सहस्राणि श्रीमतेना सनामछाया मिवेषण्यसि सस्तुपाहि । गोपोथ्याय पवमानोवसंता न्त्सख्यायवोचेमहि मानुषस्य ॥ ४७ ॥

इत्येतानिच एकादशिद्वादशिनां रथाच्चरेच न प्लवंते । सहस्राणि । त्वंपुरुसहस्राणि शतानिच । श्रीमतेन । केनोनुकं श्रीमतेन नशुश्रुवे । असनाम । रथंयुक्तं मसनाम सुषामणि । छायामिव । उपछायामिवघृणेः । इषण्यसि । कंनश्चित्रमिषण्यसिचिकित्वात् । सस्तु । मस्तुमाता सस्तुपिता । पाहि । पाहिइन्द्रत्वंरथिरः पाहिनोरिषः । गोपोथ्याय । जहिप्रषइत्या गोपोथ्यायहि । पवमानः । सोमजहिपवमानदुराध्यः । उवसंतान् । शतमुवसंताम् । वसंतानिति कस्मात् । परजतएकं । सख्याय । मरुत्वन्तं सख्याय हवामहे । वोचमहि । वयं प्लवोचेमहि समर्थे । मानुषस्य । अपद्रुहो मानुषस्य दुरोवः ।

## आव्यभूमेतिपादांतौ व्यंजनेषु ॥ ४८ ॥

आव्य । भूम । इत्येतौपादांतौ व्यंजनेषुप्लवेते । आव्य । अयाधियामनवं श्रुष्टिमाव्यासाकं । भूम । संविव्यइंद्रोवृजनन्न भूमाभर्ति । तपंति शत्रुंस्व १ र्णभूमा

महासेनासः। व्यंजनाधिकारेषु पुनर्व्यंजनग्रहणं लघा-
विव्यधिकारनिवृत्त्यर्थं।

## श्रुधी हवं ॥ ४९ ॥

श्रुधीत्ययंपादांतो हवमित्येतस्मिन्प्लवते। श्रुधी-
हवं। इममेवरुणश्रुधीहवं। हवमितिकस्मात्। उत्त-
रेष्वप्येवं योजना।

## सद्माहोता स्मासनेमिधर्मासं-
## भूषतारथः ॥ ५० ॥

इत्येतेच पादांताः यथागृहीतं प्लवंते।। सद्माहो-
ता। सदूतोविश्वविदभिवष्टि सद्माहोता। स्मासनेमि। कु-
र्वन्निद्धि ष्मासनेमि। धर्मासं। समिध्यमानः प्रथमानु ध-
र्मासं। भूषतारथः। अभूदिदंवयुनमोषु भूषतारथः।

## इतिश्री पार्षदव्याख्याया मानं-
## दपुरवास्तव्यवज्रटपुत्रोव्वटकृ-
## ते प्रातिशाख्यभाष्ये
## अष्टमंपटलं समाप्तम्।

## सर्वत्रपूर्वपदांताः प्लवंते वसुम-
## घयोः परयोः ॥ १ ॥

इत्येतयोः परयोः सतोः । वसु । पुरुवसुर्हिमघवन् । वसुं । विश्वावसुं सोमगंधर्वमापः । अश्वामघागोमघावांहुवेम । तुविदेष्णांतुवीमघं । सर्वत्रग्रहणं पादांताधिकारनिवृत्यर्थं । नैतदस्ति प्रयोजनं । पूर्वपदांता इत्येव सिद्धं । नहि पूर्वपदांतस्य पादांतेसंभवोस्ति । वच्यतिहि । पदाभेदेन पादानां विभागइति । तस्मान्नार्थः सर्वत्रग्रहणेन यदिक्रियेतपादांतेवर्त्तमानयोरेववसुमघयोः पूर्वपदांताः प्लवंते । इतिविज्ञायेततदा इहैवस्यात् । त्वावतः पुरुवसो । तुविदेष्णांतुवीमघमिति । इहनस्यात् । पुरुवसुर्हि मघवन् । अश्वामघागोमघेति । नैषदोषः । नैवंहिशक्यंविज्ञातुं प्रथमानिर्दिष्टत्वात् पादांतग्रहणस्य अंतःपादाधिकारनिवृत्यर्थं तर्हिसर्वत्रग्रहणं क्रियते । ननुचएतदपि पूर्वपदांतइत्येवसिद्धं । नहिपूर्वपदांता अंतःपादंसंभवंति । नसिध्यति । नहिपादादिस्थस्य अंतःपादकार्याणिदृष्यंते । कस्मात् । यदयं दधिमादिषु यथोदयेषु स्तवशब्दस्य पाठेसति । शृणुधि शृणुत यंत यक्षंतस्तवेतिपादादिस्थत्वर्थंशतेचपठतितत् ज्ञापयति नपादादिस्थस्य अंतःपादकार्याणि भवंतीति । यद्येतत् ज्ञाप्यते । पूर्वस्मिन्नंतःपादाधिकारे मह्यांइंद्रःपरश्चतिनकारस्यलोपोनप्राप्नोति । नैषदोषः । नात्रपदंगृहीत्वा कार्यमुच्यते किंतर्हिनकारं । नकारः पुनरंतःपादंभवति । यत्रतर्हि पदंगृहीत्वा कार्यमुच्यते । तत्रदोषोभवत्येव यथावास्तोरित्येतत् परति शब्दउत्तरइति । वास्तोष्पतेप्रतिजानीह्यस्मानिति । पादादिस्थस्य नस्यात् । अमीवहावास्तोष्पत इत्येतत्पादांतस्यस्येवस्यात् । तथा शवसोमहः सहसइडा-

था: पात्वित्येकं पुत्रशब्दे परागीतिद्ववैवस्मात् । पिपर्षि येत्मद्दसस्पुत्रदेवानिति । द्वह्नस्मात् । सहसस्पुत्रो अ-द्भुतइति । एवंतर्हि दीर्घभाव एवैतत् । ज्ञापकं भवि-ष्यतीति प्रकरणात् । अन्यवतुश्चंत:पादाधिकारेवर्त्तमाने प्रत्ययस्त्वयोर्वर्णविशेषणत्वात् । वास्तोष्पतेप्रतिजानी-ह्यस्मान् । सहसस्पुत्रोअद्भुतइतिसिद्धंभविष्यति तत्ज्ञा-पकादिद्वैवस्मात् । वाजेषु प्रासहमित्यादिषु द्वह्न-स्मात् । प्रासहासम्राडित्येवमादिषु तस्मात्सर्वत्रग्रहणं क्रियते । वसुमघयोरितिकस्मात् । हरीविपक्षसारथे ।

## रवेतुवि ॥ २ ॥

रवेप्रत्यये तुविइत्येवंपूर्वपदांता: प्लवंते । सद्रहासंतु-वीरवंपतिर्दन् । कथाकविस्तुवीरवान् । रवइतिकस्मा-त् । तुविदेष्णां ।

## विश्वविभ्व धन्व रथर्ति शत्रु द्यु-म्न यज्ञेति सहतौ ॥ ३ ॥

विश्व । विभ्व । धन्व । रथ । ऋति । शत्रु । द्युम्न । यज्ञ । इत्येतेपूर्वपदांता:सहतौप्रत्यये प्लवंते । विश्व । विश्वासाहमवसे नूतनाय । विभ्व । शीतविभ्वासहंर-यिं । धन्व । धन्वासहानायते । रथ । युक्ष्वाहि त्वंर-थासह । ऋति । तंवोदस्म मृतीषहं । शत्रु । शत्रूषा-ह:स्वग्नय: । द्युम्न । द्युम्नासाह मभियोधानउत्मं । यज्ञ । यज्ञासाहं दुवइषे ।

## प्रचाप्लुते ।

प्रइत्ययंचपूर्वपदांतःप्लवते आलुतेसइतौ प्रत्यये। प्रचेति। प्रासहस्रतिस्तुविष्मान्। आलुतइतिकस्मात्। मत्सरासोजहृषंतप्रसाहं।

## सहप्रवादा उदयास्तमांताः॥४॥

वसु। मघ। रव। सहति। हृति। वर्त्त। यवस। तम। इत्येतेतमांताःउदयाः सहप्रवादावेदितव्याः। एतेषामाद्यानांचतुर्णां सहप्रवादानामुक्तान्युदाहरणानि। अवशिष्टानामुत्तरत्रोदाहरिष्यामः।

## पर्यभ्यपापीतिवृतावृवर्णे॥ ५ ॥

परि। अभि। अप। अपि। इत्येतेषांचपूर्वपदांताः प्लवंते। वृतौतु ऋवर्णप्रत्यये। परि। अपोविभ्रतं तमसापरीवृतं। अभि। वृतेनद्यावापृथिवीअभीवृते। अभीवृतंकृशनैर्विश्वरूपम्। अप। राधोविश्वायु शवसेअपावृतं। अपि। अपीवृतो अधयन्मातुरूधः। ऋवर्णइतिकस्मात्। उतव्रजमपवर्तासिगोनां।

## अभीवर्त्तःसूयवसोरथीतमःपुरूतमोनंतरर्धचंउत्तमः॥ ६ ॥

अभीवर्तः। सूयवसं। रथीतमः। पुरूतमः। इत्येतेषांच पूर्वपदांताःप्लवंते। उत्तमस्तु पुरूतमइत्यर्धर्चस्यादौ अंतेचवर्त्तमानः प्लवते। अभीवर्त्तः। अभीवर्तेन हविषा। अभीवर्त्तो यथासपि। सूयवसं। प्रजावतीः सूयवसंरिशंतीः। धेनुंनत्वा सूयवसे दुदुक्षन्। रथीनां। रथीतमं

रथीनां । पवमानोरथीतमः । पुरुतमं । पुरुतमंपुरूणां । अध्वराणांपुरुतमंम् । अनंतरर्धंचंइतिकस्मात् । मरुतां-पुरुतममपूर्व्यं ।

## कवर्द् धान्यमिथुचर्षणिस्तनपि-वेति सर्वंचयथोदयंच ॥ ७ ॥

कव । ऋद् । धान्य । मिथु । चर्षणि । स्तन । पिव । इत्येतषांचपूर्वंपदांताः प्लवंतेयथोदयंच । कव । तनूशु-भंमघवायः कवासखः । ऋदु । ऋदूपेचिहुदूवधा । धान्य । वयंतोवीजमिव धान्याकृतः । मिथु । निष्वा-पया मिथूदृशा । चर्षणि । गांनचर्षणीसहम् । चर्षणी-धृत मघवानमुच्यम् । स्तन । स्तनाभुजोअशिश्वीः । पिव । पिवापिवेदिन्द्रशूरसोमं । सर्वंचग्रहणा मनंत-रर्धंचं इत्यधिकारनिवृत्यर्थं ।

## त्विष्युक्थेत्येता उदयेमकारे ॥८॥

त्विषि । उक्थ । इत्येतेपूर्वंपदांतौ प्लवेते मकारे उदये । त्विषि । त्विषीमंतो अध्वरस्येवदिद्युत् । उक्थ । वृहस्पति रुक्थामदानिशंसिषत् । मकारइतिकस्मात् । उक्थभृतं सामभृतं ।

## पर्युर्वच्चे त्यमकारेनुनासिके ॥९॥

परि । उरु । अच्छ । इत्येतेपूर्वंपदांताःप्लवंते । अ-नुनासिकेप्रत्यये मकारंवर्जयित्वा । परि । चक्राणामः प-रीणहंपृथिव्याः । उरु । उरूणसावसुतृपाउदुंवलौ ।

अच्छ । अच्छानद्दी नह्युतनोतसोम्याः । अमकारइतिकस्मात् । विप्रासःपरिमाश्वशुः ।

## पित्र्यामाह्निनाकृषिभंगुराश्वविश्वदेव्यभेषजतुग्र्यापस्त्य । सुम्नर्त्ताराती त्युदयेवकारे ॥ १० ॥

पित्र्य । माह्नि । अकृषि । भंगुर । अश्व । विश्वदेव्य । भेषज । तुग्र्य । पस्त्य । सुम्न । ऋत । अराति । इत्येतेपूर्वपदांताः प्लवंते वकारेप्रत्यये । पित्र्य । योषेवपित्र्यावती । माह्नि । त्यनीकः पत्यते माह्निनावान् । अकृषि । बह्वन्नामकृषी बलम् । भंगुर । अपहतरक्षसो भंगुरावतः । अश्व । अश्वावतींसोमावतीम् । विश्वदेव्य । विश्वकर्मणा विश्वदेव्यावता । भेषज । भेषजावान् । तुग्र्य । मंदंतुतुग्र्यावृधः । पस्त्य । मर्योदेवधन्वपस्त्यावान् । सुम्न । सुम्नावरी सूनृताः । ऋत । ऋतावायस्य रोदसी । अराति । अरातीवामानस्तारीत् । वकारइतिकस्मात् । येअश्वदाउत ।

## वैभ्वादयश्च ॥ ११ ॥

वैभ्वादयश्च पूर्वपदांताःप्लवंते वकारेप्रत्यये । वैभ्वादीनुत्तरत्रोदाहरिष्यामः ।

## पृशनादयस्तु यकारे ॥ १२ ॥

पृशनादयस्तु पूर्वपदांताः प्लवंते यकारेप्रत्यये । पृशनादींश्चोत्तरत्रोदाहरिष्यामः ।

अरातिकविसुक्रतुश्रुधिपितुसुम्न-
रय्यृताश्वेति चैते ॥ १३ ॥

(१)अराति। अरातीयतोनिदहातिवेदः। कवि।कवीयमानः कइह। सुक्रतु। वियोममेरजसी सुक्रतूयथा। श्रुधि। श्रुधीयतश्चित्यथतो मह्वित्वा। पितु। प्रवतेअग्नेजनिमा पितूयतः। सुम्न। सुम्नायवईमहेदेवयंतः। रयि। अयमुवांपुरुतमो रयीयन्। ऋत। ऋतायिनी मायिनी। अश्व। अश्वायंतो गव्यंतः। यकारइतिकस्मात्। येअश्वदाउत।

नत्वश्वसुम्नर्तवृषेतिपद्याएकाच्च
रा दाउदयेयकारे ॥ १४ ॥

नतुखलुप्लवंते। अश्व। सुम्न। ऋत। वृष। इत्येतेपद्या एकाक्षरादौप्रत्यये यकारे। अश्व। अश्वयुर्गव्यूरथयुर्वसूयुः। सुम्न। तंवःशर्द्धंमारुतंसुम्नयुः। ऋत। त्वंनइन्द्र ऋतयुः। वृष। अत्योनयूथे वृषयुःकनिक्रदत्। एकाक्षरादावितिकस्मात्। अश्वायंतो गव्यन्तः। सुम्नायव ईमहेदेवयन्तः। ऋतायिनीमायिनी। वृषायमाणो वृणीत। यकारइतिकस्मात्। ऋतावायस्य रोदसी।

पृश्नाजिरज्जुमधुपृतिजनिक्रतु-
वल्गुवंधुरबंकांकुदम। वृजिना-
ध्वरीषुवृषमध्यसखिस्तभुदच्छुना-

(१) इत्येतेचपूर्वपदांताः प्लवंतेयकारेप्रत्यये।

# पृथविश्ललुवसु ॥ १५ ॥

इतीमेपृशनादय: येपूर्वसूत्रेनिर्दिष्टा: । पृशन । ता अस्यपृशनायुव: । अजिर । सोममिंद्रा जिरायते । ऋजु । ऋजूयंतमनुव्रतं । मधु । अमूषुवांमधूयुवा । पुवि । पुवीयंत:सुदानव: । जनि । जनीयंतो न्वग्रव: । क्रतु । क्रतूयंति क्रतव: । वल्गु । वल्गूयति वं-दतेपूर्वभाजं । वंधुर । य:सूर्यांवहति वंधुरायु: । हक । हकायुरा दिदेशति । अंकु । यमंकूयंत मान-यन् । दम । अश्वेवीर उग्रसुग्रंदमायन् । वृजिन । स-ख्यधूर्तं वृजिनायंत माभुं । अध्वरि । जामयोअध्वरीय-तां । इषु । क्रत्वावेधा इषूयते । वृष । वृषायमाणो वृ-णीतसोम । मध्य । मध्यायुवउपशिच्चंतियज्ञै: । सखि । विश्वश्रुष्टि: सखीयते । स्तभु । स्तभूयमानं वहतोवह-न्ति । दुक्षुन । किमस्मान्दुक्षुनायसे । अघ । अघायते जातवेद: । यवि । सधनीजन्ते सहसायवीयुत् । शत्रु । शत्रूयंतो अभि । वसु । अश्वयुर्गव्यूरथयुर्वसूयु: ।

## वैभुक्रादनिपुष्टपर्वताहुतिशुभ्र-हृदयामतिसहस्रायशक्ति। स-मिस्वधितिक्रशनवयुनर्णाघृणिहि-तधितविपुसुतच्चिर्वयनीथ ॥ १६ ॥

इतीमेवैभ्वादय: । येपूर्वसूत्रेनिर्दिष्टा: । वैभु । वैभूव-शोमूर्धन्यघन्यायाः । क्रादुनि । अद्या चिन्मुक्रा क्रा-

दृनीट्टतः। पुष्ट। पुष्टावन्तो यथापशुं। पर्वत। पर्वतः पर्वताद्दृधः। आहुति। युवानमाहुतीवृधं। शुभ्र। अंतःशुभ्रावतापथा। हृदय। उतापवक्ता हृदयाविधश्चित्। घमति। नमेस्तोतामतीवा। सह। सहावा इंद्रसानसिः। इष्ट्य। यःपत्यते वृषभोवृष्ण्यावान्। शक्ति। शक्तीवोयद्विभरारोदसी उभे। सप्ति। सप्तीवंता सपर्यवः। स्वधिति। रुक्मोनचित्रस्वधितीवान्। कृशन। मदच्युतकृशनावतः। वयुन। विश्वोवादधे वयुनाविदेकइत्। ऋण। ऋणावाविभ्यद्धनमिच्छमानः। इषिण। इषणीवा ज्वेलति त्मना। इत। विपन्यामहे विपणिर्हितावान्। धित। अग्नीवानंधितावानं। विषु। विषूवृदिंद्रो अमतेरुत। सुत। सुतावंतस्त्वावयं। ऋत्विय। इयंतऋत्विया वती। नीथ। नीथाविदोजरितारः।

**नर्त्तवाकेनाश्वविप्सुम्नयंतावसुवसुप्रसहानोभिवाहते। परिव्रर्तनाभिहत्य॥ १७॥**

इत्येतेपूर्वपदांताः पूर्वलक्षणप्राप्ता नप्लवंते। ऋतवाकेनाऋतवाकेनसत्येन। अश्वविप्। परिग्रौ अश्वमश्वविप्सुम्नयंता। गीर्भिर्मित्रावरुणासुम्नयंता। वसुवसु। वसुवसुवः पार्थिवासुन्वंते। प्रसहानः। सद्यनीलेभिः प्रसहानः। प्रचाप्लुतइतिप्राप्ते। अभिवाहते। येनेंद्रोअभिवाहते। पर्यभ्यपापीतिदृताद्दवर्णा इति हतौतुऋवर्णोप्रत्यये इति प्राप्ते। अतोच्यते। वकारेण व्यवधानात्प्राप्तिरेव-

नास्ति । तस्मान्नार्थः प्रतिषेधनिपातनेन । एवंसिद्धेसति यन्निपातनं करोति । तज्ज्ञापयत्याचार्यः । व्यवहितेपि निमित्तेक्वचित्कार्यं भविष्यतीति । किमेतस्यज्ञापनेन प्रयोजनं । उदात्तपूर्वं स्वरितमनुदात्तंपदेचरमिति । इंद्रइत्यत्र नकारदकाररेफव्यवहितस्यापि स्वरितस्यअकारस्य अनुदात्तत्वंभवतीति स्यान्मतम् वचनाद्भविष्यतीति । अस्तिवचनस्यावकाशः । प्रउगमिति । परिष्टतं न । अपाष्टिपरिष्टतन्नराध: । नेतिकस्मात् । अपोविभ्नतं तमसापरीवृतं । अभिवृत्य । अभिष्टत्यसपत्नान् ।

## अश्ववच्चपादांते ॥ १८ ॥

अश्ववदित्येतस्मिन्पूर्वेपदांत: पादांते नतुस्रवंते । अश्ववत् । दधानोगोमदश्ववत् । पादांतइतिकस्मात् । अश्वावद्गोमद्यवमत् ।

## सर्वेचपरेमघस्य ॥ १९ ॥

मघ इति षष्ठ्यंतेपरेमति वसुमघयोरितिप्राप्ते नस्रवते । मघस्य । प्रायस्तुषेतुविमघस्यदानं । षष्ठ्यंतादन्यत्र स्रवते । श्रुधिचित्रामघेहवं । सर्वेत्ययहणं पादांताधिकारनिवृत्त्यर्थं ।

## अश्वयूपायाश्वयुजोश्वयोगाःसहवाहःसुमयंतत्तयंत । सहवसुसहवत्सत्तयुक्तिंसहवीरंवयुनवच्चकार ॥ २० ॥

इत्येतेषांचपूर्वपदांताः पूर्वलक्षणप्राप्ता नप्लवंते। अश्वयूपाय। चषालंये अश्वयूपाय तक्षति। अश्वयुजः। वयोवधो अश्वयुजः परिज्मयः। अश्वयोगाः। उतन ईमृतयोश्वयोगाः। सहवाहः। बृहस्पतिं सहवाहो वहंति। सुम्नयंता। गोभिर्मित्रावरुणा सुम्नयंता। ऋतयंत। कदुस्तुवंत ऋतयंत। सहवसुं। योनामरं सहवसुं। सहवत्सा। दानुः शये सहवत्सानधेनुः। ऋतयुक्ति। ऋतंवदंत ऋतयुक्तिमग्मन्। सहवीरं। धातारयिं सहवीरं तुरासः। वयुनवच्चकार। सूर्येण वयुनवच्चकार। चकारेति कस्मात्। ज्योतिस्तमसो वयुनावदस्थात्।

## सुम्नायुर्जुह्व ऋताय न्नृतायुमुग्रादेवंदक्षिणावानृतायोः। वृषारवायसूमयंशतावन्नपोजुवापरीवृतोनपावृत्॥ २१॥

इत्येतेषांपूर्वपदांताः प्लवंते। सुम्नायुः। सुम्नायुर्जुह्वे अध्वरे। जुह्वइतिकस्मात्। देवांजिगातिसुम्नयुः। ऋतायन्। सर्गोनसृष्टोअर्वतीर्ऋतायन्। ऋतायुं। उदीमृतायुमीरयत्। एतेषां वयाणामेकाक्षरादा उदयेयकार इति प्रतिषेधेप्राप्ते निपातनं। उग्रादेवम। उग्रादेवंहवामहे। दक्षिणा वान्। इस्तेदधे दक्षिणे दक्षिणावान्। ऋतायोः। प्रणेतारः कस्यचिदृतायोः। अस्यापिप्रतिषेधेप्राप्ते निपातनं। वृषारवाय। वृषारवायवदते। सूमयं। तुविक्षंतेसुकृतंसू-

मयंधनुः । शतावन् । वक्षिष्ठयोः शतावन्नश्वयोरा । अ पोजुवा । उषासानक्ता जगतामपोजुवा । अपरीवृतः । अपरीवृतो वसतिप्रचेताः । अनपावृत् । इत्थासद्‌जाना अनपावृदर्थं ।

इंद्रावतः सोमावती मवायती
दीर्घाधियो मित्रायुधो रथीतरः
। अन्नावृधं विश्वापुषं वसूजुवं-
विश्वाभुवे यज्ञायते घृतावृधा ॥ २२ ॥

इन्द्रावतः । सोमावतीम् । अवायती । दीर्घाधियः । अमित्रायुधः । रथीतरः । अन्नावृधं । विश्वापुषम् । वसूजुवं । विश्वाभुवे । यज्ञायते । घृतावृधा । इत्येतेषांपूर्वपदांताः प्लवंते । इंद्रावतः । ऋजिषईमिंद्रावतोनभुज्युं । सोमावतीं । अश्वावतीं सोमावतीं । अवायती । कन्यौरवारवायती । दीर्घाधियः । दीर्घाधियोरक्षमाणाअसुर्यं । अमित्रायुधः । अमित्रायुधो मरुतामिवप्रयाः । रथीतरः । नकिष्टद्रथीतरः । अन्नावृधं । अन्नावृधंप्रतिचरंत्यन्नैः । विश्वापुषं । पुत्रांउतविश्वापुषंरयिं । वसूजुवं । वसवानं वसूजुवं । विश्वाभुवे । अर्चोविश्वानराय विश्वाभुवे । यज्ञायते । यज्ञायते वापशुषोन । घृतावृधा । घृतश्रियाघृतपृचाघृतावृधा ।

सुम्नायन्निन्मित्रायुव ऋषीवोदे-
वावान्दिवः । एवावदस्य चे-

चासा मृताग्ने सदनासदे ॥२३॥

सुम्नायन्नित्। मित्रायुवः। ऋषीवः। देवावान्दिवः। एवावदस्य। चेत्रासाम्। ऋताग्ने। सदनासदे। इत्येतेषां पूर्वपदांताः प्लवंते। सुम्नायन्नित्। सुम्नायन्निद्विशो अस्माकम्। इदितिकस्मात्। अर्चामि सुम्नयन्नहं। मित्रायुवः। मित्रायुवो न पूर्पतिंसुशिष्टौ। ऋषीवः। शिप्रिन्नृषीवः शचीवः। देवावान्दिवः। सोमंभरद्दादृहाणो देवावान्दिवः। दिवइतिकस्मात्। सगृणानो अद्भिर्देववानिति। एवावदस्य। एवावदस्य यजतस्यसभेः। चेत्रासां। चेत्रासां ददथुरुर्वरासाम्। ऋताग्ने। ऋताग्नेबृहते शुक्रशोचिषे। सदनासदे। देवायसदनासदे।

पदेष्वन्तरनिंग्येषुप्लुतिः पदेषु-चोत्तरा ॥ २४ ॥

अनिंग्येषुपदेषु अंतःपदेषु च उत्तराप्लुतिर्भविष्यति। यदित ऊर्ध्वमनुक्रमिष्यामः। उत्तरत्वोदाहरिष्यामः।

वृषस्व वंथ वृध्वांसंवाता वातुर्वनोवृतुः।' वृतेवृषाणा वृषाणो वृजे वंधि मृजु मृशुः। मृजेमृजीत वानैषांवमेतिसहश्चादिषु॥२५॥

इषस्व । वंध । इध्वांसं । वाता । वातु: । वन: । वृतु: । इते । इषाणा: । इषाण: । इजे । वंधि । मृजु । मृशु: । मृजे । मृजीत । वान । इत्येतेषामुदयानां सदृशादिषूदयेषु वकारमकारौ भवेते । इषस्व । उद्वाइषस्वमवन् । वंध । यद्वावंथ पुरुष्टुत । इध्वांसमिहग्रहणमनर्थकं । आवयादिषु पठितत्वात् । द्रावयदाइहवाइधेतिपाठात् । नार्थकं आवयादिषु वाइधस्वेति धकारांतस्येतिग्रहणं । इहतुह्रस्वकारांतग्रहणं । सोभातुपूर्व्येणासह्रोच्यते सकृत्स्वेनेतिदकारभावात् । इध्वांसं । वाइध्वांसं चिदद्रिव: । वाता । उपनक्ष वावातावृषणा । वातु: । वावातु: सख्युरागहि । वन: । विश्वेभि र्यद्वावन: । वृतु: । विश्वाचक्रि वनावृतु: । वृते । येनेन्द्रो अभिवावृते । इषाणा: । मशोवाजस्यसातौ वावृषाणा: । वृषाण: । उद्वावृषाणो राधसे । वृजे । प्रवावृजेसुप्रया: । वंधि । वावंधियज्यूंरुततेषु धेहि । मृजु: । देवासस्तन्वो २ निमामृजु: । मृशु: । विप्रास:परिमामृशु: । मृजे । निमामृजे पुरइंद्र: सुमवो: । मृजीत । विसातयेतन्वं मामृजीत । वान । यद्वावानपुरुतमंपुराषाट् । पदेष्वंतरिति पूर्वपदांताधिकारनिवृत्त्यर्थ: । अंतरनिंग्येष्विति कस्मात् । संतशक्तिदेववाताजरेत । सदृशादिष्विति कस्मात् । वकारस्यमकादिषुमाभूत् ।

## सहेत्यादि:पूर्वपदोपध:सन्नेका-
## च्चरंचर्षणिधन्ववर्जं ॥ २६ ॥

सहेत्यादि:पूर्वपदोपध:सन् भवते । एकाच्चरंच पूर्व-

पदं चर्षणीधन्वइत्येते च वर्जयित्वा। सह। विश्वासाह-मवसे नूतनाय। ऋतूषाहः स्वग्नयः। पूर्वपदोपधः स-न्निति कस्मात्। अषाह्लायसहमानायवेधसे। ए-काक्षरं चर्षणिधन्ववर्जमिति कस्मात्। एकाक्षरं। प्रा-सहासम्राट् सहुरिं सहंतं। चर्षणि। गां न चर्षणीसहसं। धन्व। धन्वासहा नायते। सहेत्यादिरिति धातुग्रहणा-त् चतुःसहस्रमित्यत्र न भवति।

## न तु पादस्याष्टिनोंतंगतस्य ॥२७॥

न तु खल्वस्याष्टाक्षरस्य पादस्यांतंगतस्य सहेत्यादिःप्ल-वते। तंवोदस्ममृतीषहं। अष्टिन इति कस्मात्। सहस्र-वाजमभि मातिषाहं। अंतंगतस्येति कस्मात्। यज्ञा-साहं दुवइषे।

## न द्वादशिनोऽनभिमातिपूर्वः ॥२८॥

न तु खलु द्वादशाक्षरस्य पादस्यांते वर्त्तमानस्य उत्तरपदस्य सहतेरादिः अनभिमातिपूर्वः सन्प्लवते। सवासाहो जन-भक्षो जनंसहः। द्वादशिन इति कस्मात्। सतोवीराउर-वोव्रातसाहाः। अंतंगतस्येति कस्मात्। सत्रासाहेनभ इंद्रायवोचतम्। अनभिमातिपूर्व इति कस्मात्। श्रुतऋ-षिमुग्रमभि मातिषाहं।

## अभिमातिनृपृतनोपधस्तु सर्वत्र-परेष्प्लवतेयकारे ॥ २९ ॥

अभिमाति। नृ। पृतना। इत्येवमुपधस्तु सहतेरा-

द्धिः सर्वत्रयकारेपरे प्लवते । अभिमाति । अभिमाति-षाह्यो । नृ । नृषाह्ये सासह्वां अमित्रान् । अप्नअध्यं-तद्रिरीहिसं नृषाह्यो । पृतना । पृतनाषाह्यायच । कि-मर्थंसहतेयकारे पुनरेवविधीयते । ननु पूर्वेणैवसिद्ध-स्सिध्यति । कथं । शेषिचापठितेप्सतीत्यधिकारात् पूर्वेणासंयोगे नप्राप्नोति तस्मात्संयोगपरार्थं पुनर्विधी-यते । यकारइतिकस्मात् । तमसेपृतनाषहं । सर्वत्रेति-कस्मात् । अष्टिहादशिनोः पादांतगतस्येत्यधिकारात् । नृषाह्ये सासह्वां अमित्रान् । पृतनाषाह्यायच । इत्य-त्रनस्यादिति ।

## आवयादीनामुदयास्त्रिवर्णाः प-दैकदेशाइतितान्प्रतीयात् ॥ ३० ॥

आवयइत्येवमादीनांप्लुतानामुदयास्त्रिवर्णाएव वे-दितव्याः । आकारउच्चारणार्थोद्रष्टव्यः । पदानामेकदेश इति ताञ्छ्राविधादीन्प्रतीयात् । तस्माच्छ्रावयइति-गृहीते आश्रावयंत इत्यत्रापि भवति तानुत्तरत्रोदा-हरिष्यामः ।

## आवय यावय च्यावययामय रा-मयमामहवावस । द्रावयदाहह-वावृधतात्वषसासहरारय । आ-दाचरंप्लुतंतेषां ॥ ३१ ॥

आवय । यावय । च्यावय । यामय । रामय । मा-

मह । वावस । द्रावय । दाहृह । वावध ।. नाहष । सामह । रारय । इत्येते आवयादयः । तेषामाद्याक्षरं प्लुतं भवति । आवय । आश्रावयतइव आवयावाचम् । यावय । यावयाहक्यं १ हकं । च्यावय । आच्यावयस्त्वृतये । यामय । आनः सुम्नेषुयावय । रामय । निरामयजरितः सोमे । मामह । तन्नोमित्रोवरुणोमामहं‌तां । कोन्वत्रमरुतोमामहेवः । वावस । वावसानाविवस्वति । वावसे । सच्यामनुस्फिग्यंवावसेवृषा । द्रावय । अध्वर्योद्रावयात्वं । द्रावयित्नवः । सूर्यस्येवरश्मयो द्रावयित्नवः । दाहृह । दाहृहाणो वज्रमिंद्रोगभस्त्योः । वाहृध । वाहृधानाशुभस्पती । वाहृधौथा षड्भिरिवद्यौः । नाहृष । तीर्थेनाक्षाता हृषाणामोकः । यस्माहृषाणाउभयायजन्मने । सामह । येनासमत्सु सामहः । सुप्रकेतेभिःसासहिः । शरय । शोचिषाशरयोतिमित्रमहः ।

## अनन्वित्यस्यमध्यम ॥ ३२ ॥

अनन्वित्येतस्य मध्यममक्षरं प्लुतं भवति । अनन्‍ु । अनानुदोहृषभोजग्मिः ।

## द्विवर्णःप्रत्ययोन्त्यस्य ॥ ३३ ॥

तेषांआवयादीनां अंत्यस्यरारयइत्येतस्य द्विवर्णएवप्रत्ययोवेदितव्यः । सोमरारंधिनोहृदि ।

## प्रवादाः षडितः परे ॥ ३४ ॥

परेये वक्ष्यन्ते । तेप्रवादाइति षड्वेदितव्याः । तानु-

त्वोदाइरिष्यामः।

## दूणाशं ॥ ३५ ॥

दूणाशमित्ययं प्लवते। दूणाशं। दूणाशंसख्यंतव। दूणाशेयं दक्षिणापार्थवानां।

## उक्थशासश्च ॥ ३६ ॥

उक्थशास इत्ययंप्लवते। उक्थशासः। यमुत्य उक्थशासश्चरंति। यच्चंन्यंसामगा मुक्थशासं।

## इकारांतश्च दाधृषिः ॥ ३७ ॥

दाधृषिरित्ययंप्लवते इकारांतः सन्। दाधृषिः। ब्रह्मणायामिसवनेषु दाधृषिः। सत्राहणं दाधृषिं। इकारांतइति कस्मात्। वाजेषुदधृषंकवे।

## पादांतेऽपद्यःसादनं ॥ ३८ ॥

पादांतेवर्तमानः अपद्यः सन्सादनइत्ययं प्लवते। सादनम्। धाराऋतस्यसादने। द्युम्नंमित्रस्यसादनं। पादांतइतिकस्मात्। योनिष्टइंद्रसदने अकारि। अपद्यइतिकस्मात्। रणानरोनृषदने।

## अर्धर्चांतेतु पूरुषः ॥ ३९ ॥

पूरुषइत्ययंतु अर्धर्चांतेवर्त्तमानः प्लवते। पूरुषः। विराजोअधिपूरुषः। आत्मानंतव पूरुषः। अर्धर्चांत इति कस्मात्। सहस्रशीर्षा पुरुषः।

दोषामस्मैराजतोऽक्रन्वनस्पती-
न्मह्नीयमानांकतितुभ्यमेभ्यः ।
उषासमित्युत्तरं सर्वदेश्यम् ॥४०॥

दोषां । अस्मै । राजतः । अक्रन् । वनस्पतीन् । मह्नी-यमानां । कति । तुभ्यं । एभ्यउत्तरमुषसमिति लवते । सर्वदेश्यं सर्वत्रेत्यर्थः। दोषाम् ।दोषामुषासमीमहे। अस्मै। अस्माउषास आतिरं । राजतः । अधिश्रियाविराजतः उषासावेहसीदतां। अक्रन् । अक्रन्नुषासो वयुनानि । वनस्पतीन् । आपश्शृंगाणि पृथिवींवनस्पतीनुषासा। म-ह्नीयमानां । मह्ना मह्नीयमानां उषासमिन्द्र संपिपृ-क् । कति । कत्युषा सःकत्युस्विदापः । तुभ्यं । तुभ्य-मुषासःशुचयः परावति । सर्वदेश्य ग्रहणमध्यर्चांताधि-कारनिवृत्त्यर्थं । सर्वत्रेतिसिद्धेसर्वदेश्यग्रहणं नानार्थत्व-स्यादपि निमित्तात्प्राप्त्यर्थं।

पादस्यचैकादशिनोयदन्ते ॥४१॥

एकादशिनोत्तरस्यपादस्यान्तेवर्त्तमानं यदुषासमिति तच्चप्लवते। रेवदुक्थंतुसुदिना उषासः । एकादशिनइ-तिकस्मात् । अग्नेविवस्वदुषसः । अंतइतिकस्मात् । अग्रे वृहन्नुषसामूर्ध्वः । इतिषट्प्रवादाःसमाप्ताः ।

यवयुरस्मयः ससाह्विषेवव्रधंतो-
रमया गिरारस्भम । यवयसि-

तत्दृषाणमोषतिश्रवयंतोदद्दहं-
ततेन्दृषद्यो ॥ ४२ ॥

यवयुः । परमयः । ससाह्यिषे । वव्रधंतः । रमयागिरा । ररभ्म । यवयसि । तत्दृषाणमोषति । श्रवयंतः । पदद्द- हंत । तेन्दृषद्यो । इत्येतानिचपूर्वलक्षणोक्तानि प्राप्तानि नभवन्ति । यवयुः । त्वामिद्यवयुर्मम । परमयः । परमयः सरपसस्तरायकं । ससाह्यिषे । प्रससाह्यिषे पुरुहूतशत्रून् । वव्रधंतः । शुचन्तोअग्निंववृधंतइंद्रं । रमयागिरा । नमस्यारमयागिरा । गिरेतिकस्मात् । निरामयजरितः । ररभ्म । ररभ्माशवसस्पते । यवयसि । पस्यावानायवयसि । तत्दृषाणं । दक्षन्नविश्वंतत्दृषाणमोषति । षो षतीतिकस्मात् । तीर्थेनाक्षातात्दृषाणमोक्षः । श्रवयंतः । पगोद्दं यक्षवयंत एतन । अदद्दहंत । यदेदंता अदद्दहंत पूर्वे । तेन्दृषद्यइतिअभिमातिन्दृपृतनोपधस्तुतइतिप्राप्ते तेन्दृषद्यो । इंद्रदेवेभिरनुतेन्दृषद्यो । तेइतिकस्मात् । न्दृषाद्यो सासह्वांअभिवान् ।

श्रवयतंवाजसातौन्दृषद्ययेविभ्वा-
सहंदूणाशारोचनानि । नतत्-
षाणोयमयोररप्शेपुरुषीणांयव-
यंत्विंदवश्च ॥ ४३ ॥

श्रवयतं । वाजसातौ न्दृषद्यो । विभ्वासहं दूणाशारोचनानि । नतत्दृषाणो यमयो ररप्शे पुरुषीणाम् । यवयं-

णिवंद्रवः। इत्येतानिपूर्वलक्षणप्राप्तानिनस्रवंते। अवयतं। पानोजनेअवयतं युवाना। वाजसातौ नृषह्यइत्यभिमातिनृषहतनोपधस्तुइतिप्राप्ते। परिअववाजसातौ नृषह्ये। वाजसाताविति कस्मात्। नृषाह्येसासह्वां अमित्रान्। विश्वासहमितिसहेर्ल्यादिरितिप्राप्ते। विश्वासहं। होतविश्वासहंरयिं। षलितःपरेइति प्राप्ते दूणाशारोचनानि। निरुत्तमादूणाशारोचनानि। रोचनानीतिकस्मात्। दूणाशेयंदक्षिणा पार्थवानां। नतदषाणः। मायोदूणो-नतदषाणोअजरः। नेतिकस्मात्। यस्तादषाण उभयाथजन्मने। यमयोः। यमयोश्चिन्नसमावीर्याणि। ररक्षे। वियोररक्ष ऋषिभि नवेभिः। पुरुषीणामिति षधचांते तुपूरुषइतिप्राप्ते। पुरुषीणाम्। पर्जन्यःपुरुषीणां। यवयंत्विंद्रवः। इंद्रवइतिकस्मात्। तेविश्वास्मद्दुरितायावयंतु।

## ररक्षयवयस्तेनंससाहेयवयावधं। परमयाइवयंतअवयनूरतेचन॥ ४४॥

ररक्ष। यवयस्तेनं। ससाहे। यवयावधं। परमया। इवयंत। अवयन्। ररते। इत्येतानि पूर्वलक्षणप्राप्तानि नास्रवंते। ररक्ष। ररक्षतांत्सक्रतो विश्ववेदाः। यवयस्तेनम्। यवयस्तेनमूर्म्यं। स्तेनमिति कस्मात्। यावयादेषं १ द्वेषं। ससाहे। (१)ससाहिशक्रः पृतनाअभिष्टिः। यवयावधं। वरीयोयवयावधं। वधमितिकिं। यावया-

(१) बृहस्पतिनायुजेन्द्रः ससाहे उदाहरणान्तरं पुस्तके।

दृक्षंदृकं । परमया । तंवोधियापरमयापुराजं । इव- श्यन्त । ऊमिर्ननिम्ने इवयंतवक्षाः । अवयन् । प्रांधंश्रोणां अवयन् । ररते । चनिष्ठंपित्वो ररतेविभागे ।

साह्वांसोवः सत्रासाहंसदन्यंस- त्यंतातान । नानामश्रूयाः शु- श्रूया रीषंतं गातूयतीव ॥ ४५ ॥

साह्वांसः । वः सत्रासाहम् । सदन्यं । सत्यंतातान । नानाम । श्रूयाः । शुश्रूयाः । रीषंतं । गातूयतीव । इत्येता- नित्यवंते । साह्वांसः । साह्वांसो दस्युमव्रयं । वः सत्रासा- हमिति नतुपादस्यादिन इतिप्राप्ते । त्यमुवः सत्रासा- हं । सादन्यं । सादन्यंविदथ्यं सभेयं । सत्यंतातान । सत्यंतातानसूर्यः । सत्यमितिकस्मात् । चायस्ततान- रोदसी । नानाम । प्रतिनानाम रुद्रोपयंतं । श्रूयाः । श्रूयाअग्निश्चित्रभानुर्हवंमे । शुश्रूयाः । यक्षुश्रूया इमंहवं । रीषंतं । दुहोरीषंतं परिधेहिराजन् । गातूयंतीव । ये- स्मापुरागातूयंतीवदेवाः ।

वावर्तयेषांरीषतोदकारेसांत्य- भिनृषाहमपुरुषघ्नः । सांतिगु- ह्यातन्वं रीरिषोष्ठजानुपूर्व्याभीव- तेवश्रथाय ॥ ४६ ॥

वावर्तयेषां । रीषतोदकारे । सांत्यभि । नृषाहं ।

अपूरुषघ्नः । सांतिगुहा । तन्वंरीरिषीष्ट । जानिपूर्व्यः । अभीष्टतेव । अर्थाय । इत्येतानि प्लवंते । वावर्त्तयेषां । वावर्त्तयेषांराया । येषामितिकस्मात् । कोश्वश्वेरमक्षत-आववर्त्त । रीषतोऽदकारे । पाहिरीषतउतवा । अद-कारइतिकस्मात् । प्रतिस्मरिषतोदह । सांत्यभि । विश्वा-निसांत्यभ्यस्तुमह्वा । अभीतिकस्मात् । संतिकामासो-हरिवः । नृषाहमित्येकात्तरच्छ्रुपणिषत्ववजमितिनिषे-धप्राप्तौनृषाहं । नरंनृषाहंमहिष्ठं । अपूरुषघ्नः । अपूरु-षघ्नोअप्रतीत । सांतिगुहा । आविःसांतिगुहापरः । गुहे-तिकस्मात् । संतिकामासोहरिवः । तन्वंरीरिषीष्ट । स्व-यंरिपुस्तन्वं रीरिषीष्ट । तन्वमितिकस्मात् । स्वैःषएवै-रिरिषीष्टयुः । जानिपूर्व्यः । अग्निर्हिजानिपूर्व्यः । पूर्व्य इतिकस्मात् । देवस्य भर्गः सहसोयतोजनि । अभीष्ट-तेव । अभीष्टतेवता महापदेन । अर्थाय । विमच्छ्रथाय रशनामिवागः ।

साह्वान्त्साह्वा जहृषंतप्रसाहं न-क्तोषासा सूर्यमुषासमग्निं । प-रिरायः सूनृतेजारयंती शुश्रूया-तं युयुविः सादनाते ॥ ४७ ॥

साह्वान् । साह्वाः । जहृषंतप्रसाहं । नक्तोषासा । सूर्यमुषा-समग्निं । परिरायः । सूनृतेजारयंती । शुश्रूयातं । युयुविः । सादनाते । इत्येतानिप्लवंते । साह्वान् । जयंश्छत्रुंरमित्रा

स्पृत्सुसाह्वन् । साहाः । साहायेसंति सुष्टिह्विवाजहृँषंत- प्रसाह्यं । एकाक्षरं चर्षणीतिप्राप्ते । मत्सरासोजहृँषंतप्र- साह्यं । जहृँषंतप्रसाह्यमितिकस्मात् । वाजेषु प्रासहंयुजं । नक्तोषासा । नक्तोषासा सुपेशसा । सूर्य्यमुषासमग्निम् । जनयंतासूर्य्यमुषासमग्निं । सूर्य्यमितिकस्मात् । दधि- क्राव्णः प्रथममश्विनोष समग्निं । अग्निमितिकस्मात् । येभिः सूर्य्यमुषसं मंदमामःपरिगाय: । बृहस्पतेविपरि- रा ोअहृँयंति । सूनृतेजारयंती । रेवश्स्तोत्रेसूनृतेजार- यंती । सूनृतइतिकिं । जरयंतीवृजनंपद्वत् । शुश्रूयातम् । शुश्रूयातमिमंहवं । ययुविः । द्विषोयुयोतु यूयुविः । मा- दनाते । अत्रायमःसादनाते मिनोतु । तद्धतिकिं । देवा- यमदनासदे ।

# करन्तसुषाह्वा घृतवान्ति साह्वा
# नृजूयेव सूयवसा वृषाय । उषा-
# सानक्ता पृथुजाघने चराथ्येभी-
# रीरिषत ग्लापयंति ॥ ४८ ॥

करन्तसुषाह्वा । घृतवांति । साह्वान् । ऋजूयेव । सू- यवसात् । वृषाय । उषासानक्ता । पृथुजाघने । राथ्येभिः । रीरिषत । ग्लापयंति । एतेच्च प्लवंते । करन्तसुषाह्वेति एकाक्षरस्वर्षणिअन्ववर्जमिति निषेधेप्राप्ते करन्तसुषाह्वा । करन्तसुषाह्वावित्थुरंनशवः । करन्निति कस्मात् । सुषह्वा- सोमतानिते । घृतवांति । अवट्राणानि घृतवांतिसीद । साह्वान् । साह्वान्विश्वाअभियुजः । ऋजूयेव । दिग्धंन-

दिष्टा मृजुयेवयता । सूयवसात् । सूयवसाद्भग-
वतीहिभूयाः । दृषाय । विपर्जन्यं शंतनवेदृषाय ।
उषासानक्ता । उषासानक्ता बृहतीसुपेशसा । पृथु-
जाघने । पृथुष्टो पृथुजाघने । चकारः समुच्चयार्थः ।
रथ्येभिः । यथोह्नस्योरथ्या २ रथ्येभिः । रीरिषत ।
मानोमध्यारीरिषतायुर्गंतोः । ग्लापयंति । उर्वीन्नस्यो-
मेमवग्लापयंति ।

## अध्वानयद्रीरिषत्प्रावणेभी रथी-यंतीव वादमायः ससाहे । सा-साह्वयुयुधिरिवाश्वथायः पूरुष-घ्न रीरिषः पूरुषादः ॥ ४६ ॥

अध्वानयत् । रीरिषत् । प्रावणेभिः । रथीयंतीव ।
अदमायः । ससाहे । सासाह्व । युयुधिरिव । अश्व-
थायः । पूरुषघ्न । रीरिषः । पूरुषादः । इत्येतानि-
प्रवंते । अध्वानयत् । अध्वानयद्दुरिताद् भयच्च । री-
रिषत् । माचक्षामाचरीरिषत् । प्रावणेभिः । प्रावणे-
भिः सजोषसः । रथीयंतीव । रथीयंतीव प्रजिहीत-
ओषधिः । अदमायः । त्वंहनुत्यददमायोदस्यून् । ससा-
हेइतिससाहे यवयांवधमित्यत्रेहचहिः कस्मात् निपा-
त्यते आवयादिसूतेः प्रतिषेधार्थमन्तत्र । द्वितीयस्य
प्रतिविधानार्थमिह । ससाहे । ससाहेशत्रुः पृतना-
अभिष्टिः । सासाह्व । सासाह्वयोयुधान्नभिः । युयुधि-

रिव । गावइवग्रामंयूयुधिरिवाश्वान् । अश्वयाय: । स-तीनरून्युरश्वयायो अद्रिं । पूरुषघ्नं । आरेतेगोघ्न मुत पूरुषघ्नं । रीरिषः । मानोगोषुमानो अश्वेषुरीरिषः । पूरुषादः । ततोवयः प्रपतान्पूरुषादः ।

अपूरुषं जाह्रषाणेन रीषत ऋ-
तायुभीरथीनां साह्रिषीमह्रि ।
पवीतारः कियात्येपूरुषत्वत ऋ-
तावरीरिव हव्यानिगामय ॥५०॥

अपूरुषं । जाह्रषाणेन । रीषते । ऋतायुभिः । रथीनां । साह्रिषीमह्रि । पवीतारः । कियात्या । ईपुरुषत्वता । ऋतावरीरिव । हव्यानिगामय । इत्येतानिच छ-न्दते । अपूरुषं । सिंधोः पारेअपूरुषं । जाह्रषाणेन । योअंसंजाह्रषाणेन । रीषते । मारीषतेसहसावन् । ऋतायुभिः । पवमानऋतायुभिः । रथीनां । रथीतमं रथीनां । साह्रिषीमह्रि । वीलुचित्साह्रिषीमह्रि । पवीतारः । पवीतारः पुनीतन । कियात्या । अह-रहर्यात्यक्तुरपांकियात्या । एषआकारः प्रत्युदाहरणार्थः । यदन्यदस्तिकियतीतिङस्वान्तम् । अथनास्ति ततोविशेषणार्थः । कियतीयोषित्येतदपि आकारेच-क्रियमाणेसांशयिकंस्यात् । ईकारादिह्रिपरतः प्रतीकग्रहणांचभवति । ईपूरुषत्वता । दीनैर्दक्षैः प्रभूती पूरुषत्वता । ईकारोपधग्रहणांकिमर्थं । नतस्यविद्म पुरुषत्वतावयं । ऋतावरीरिव । ऋतावरीरिव संक्रोशमानाः ।

इत्यानिगामय ।। तत्र इव्यानिगामय । इव्यानीतिकस्मात् । अधरंगमयातमः ।

**वृषायस्वप्रसवीतासमाहिषे तात्पाणा तात्पिं सादनस्पृशः । साह्वामेयांति पशुमान्ति जागृधुः पवीतारं सूर्यमुषासमीमहे॥५१॥**

वृषायस्व । प्रसवीता । समाहिषे । तात्पाणा । तात्पिं । सादनस्पृशः ।। साह्वाम । इयान्ति । पशुमान्ति । जागृधुः । पवीतारं । सूर्यमुषासमीमहे । इत्येतानिचत्वारिंते । वृषायस्व । वृषायस्वापूयावाहुभ्यां । प्रसवीता । उद्वेतिप्रसवीता जनानां । समाहिषेइत्यस्याप्युभयथचनिपातने प्रयोजनं पूर्ववद्दृष्टव्यं । समाहिषे । प्रससाहिषे पुरुहूत । तात्पाणा । तादेवेदंतात्पाणाच । तात्पिं । पिबावृषस्व तात्पिं । सादनस्पृशः । मानोनिभागवसुनः सादनस्पृशः । साह्वाम । साह्वाम दासमार्यम् । इयांति । गतेयांतिसवनाहरिभ्यां । पशुमांति । परिसन्नेव पशुमांतिहोता । जागृधुः । निरामिणोरिपवोन्नेषु जागृधुः । पवीतारं । अवंत्वस्य पवीतारमाशवः। सूर्यमुषासमीमहे । अनागास्त्वंसूर्यमुषासमीमहे । सूर्यमितिकिं । दधिक्रांवः प्रथममश्विनोषसं । ईमहइतिकस्मात् । येभिः-सूर्यमुषसं मंदसानः ।।

# इति श्री पार्षदव्याख्यायामानं-

# दपुरवास्तव्यवज्रटसुतोव्वट कृते प्रातिशाख्यभाष्ये नवमंपटलम् ।

## क्रमः ॥ १ ॥

क्रमइत्यधिकारोवेदितव्यः । यदितऊर्द्ध्वमनुक्रमिष्यामः ।

**द्वाभ्या मभिक्रम्य प्रत्यादायोत्तरं-तयोः । उत्तरेणोपसंदध्यात्तथा-र्द्धर्च्चंसमापयेत् ॥ २ ॥**

द्वाभ्यांपदाभ्यामतिक्रम्यारभ्येत्यर्थः । तयोर्द्वयोरभि-क्रांतयो रुत्तरंपदं प्रत्यादायसंगृह्यताभ्यामुत्तरेण पदेनोपसंदध्यात् । एतेनक्रमेणार्द्धर्चं समापयेत् । पर्ज-न्यायप्र । प्रगायत । गायतदिवः । दिवस्पुत्राय । पुत्रा-यमीढुषे । पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे ।

**एकवर्णं मनोकारं नतेसुस्मेति-नःपरे । पदेनचव्यवेतंयत्पदंत-च्चाव्यवायिच । ईं(१)लुप्तान्तान्प्लु-तादीनि स्कंभनेनेतिलुप्तवत् । इतोपिच्चतावत्तमः पूर्वैर्द्वैपदयो-**

(१) प्लुतांतमितिगपुस्तकपाठः ।

द्वयोः । स्वसारमस्कृतेत्युभे परं-वीरासपतन । अतीत्यैता न्य-वस्यंति ॥ ३ ॥

एकवर्णं पदमेकाक्षरमित्यर्थः । ओकारं वर्जयित्वा । आ-ऊंइति । इत्येते पदे अतीत्यावस्यंति । आमंद्रम् । मन्द्रमा-वरेण्यं । उद्वेति । उदुत्यं । ऊं इत्युम् । त्यंजातवेदसम् । अ-नोकारमिति कस्मात् । अभूदो । ओते । त्योइत्यो । नते-सुस्मेति नःपरे । नते अत्वभूते सुस्माइत्येते नःपरे अतीत्याव-स्यंति । मोषुणः । आसुस्माणः । नतेइति कस्मात् । प्रसु-नआयुर्जीवसे । इंद्रसूरीन् कृणुहि स्मानोअद्य । नःपरे-इति कस्मात् । मोषुत्वावावनश्चन । एवं शिक्षाच्यावय न्न-च्युतानि ॥ पदेनचव्यवेतं यत्पदं तच्चव्यवायि च ॥ पदेन-चव्यवेतंपदं यच्चव्यवैति ते उभे अतीत्यावस्यंति । इयतेनराच शंसंदैव्यः ॥ ई लुप्तान्ताम् । ईमित्येतत्पदं लुप्तांतामतीत्यावस्यंति । यमीगर्भं । लुप्तांतामिति कस्मात् । अमीरे-भासः । प्लुतादीनि । प्लुतादीनि पदानि चातीत्यावस्यं-ति । यानिमारैगप । कुरुश्रवणा माइणिराजानं ॥ स्कं-भनेनेति लुप्तवत् ॥ स्कंभनेनेत्येतत्पदं लुप्तवत् अतीत्या-वस्यन्ति । वित्कंभनेन स्कभीयान् । लुप्तवदिति कस्मात् । अयंमह्यमह्यतास्कम्भनेन ॥ इतोपिंचतावतमः पूर्वे द्वे पद-योर्द्वयोः ॥ इतोपिंचत । आवतमः । इत्येतयोर्द्वयोः पदयोः-पूर्वे पदे अतीत्यावस्यंति । इतोपिंचत । परीतोपिंचत । आवतमः । उपाभावतमः ॥ स्वसारमस्कृतइत्युभे ॥ स्व-सारं । अस्कृत । इत्युभे एते पदे अतीत्यावस्यंति । निरु-

स्वसारमस्कृतोषसं । परंवीरासएतन । वीरासः । एतन । इत्येतस्यद्विपदस्यपरम्पदमतीत्यावस्यंति । वीरासए-तन । परंवीरासएतनमर्यासः । प्लुतादिप्रभृतीनिच तानिचतीत्य प्रवस्यंति । शुनश्चिच्छेपंनिदितं । न-राशंसंपूषणं । किमर्थमिदमुच्यते । ननु पदे-नचव्यवेतं यत्पदं तच्चव्यवायिचेत्येवसिद्धं । नसिध्य-ति कथं । क्रमोद्वाभ्यामभिक्रम्येतिप्राप्तावसानानि-हि एकवर्णमनोकारमित्येवमादीनि चवसानादपो-ह्यंते । तस्मादत्र उभेव्यवायिव्यवेतपदे प्राप्ताव-सानेतत्रैवस्यात् । इयतेनराचशंसंदैव्यं इति च-न्यवनस्यात् एवमर्थमिदमुच्यते । एवमेकेवर्णयंति । चपरेपुनः पदेनचव्यवेतं यत्पदमित्यत्रसर्वेषुसिद्धं इतिम-न्यमाना चन्यथावर्णयंति प्लुतादिप्रभृतीनिचेति चका-रंवाशब्दस्यार्थंवर्णयंति । प्लुतादिप्रभृतीनिवा चती-त्यावस्यंति । योनिमारैक् । चित्कंभनेन । वीरासएतन । परीतोषिञ्चत । प्लुतादिप्रभृतीति । प्रभृतिशब्दः प्रका-रार्थोद्रष्टव्यः । प्लुतादिप्रकाराणीति किंकृतंभवति । वक्ष्यतिइती चनवसानीयेषु केषुकेषुचित् । अभिक्रमं-पूर्वनिमित्तमानि नइति तदिहापिदर्शितं भवति ।

## पूर्वोत्तरक्रतंरूपम्प्रत्यादानावसा-नयोः । नब्रूयात् ॥ ४ ॥

पूर्वक्रतंरूपं प्रत्यादानेनब्रूयात् । उत्तरक्रतंरूप म-वसानेनब्रूयात् । पूर्वक्रतंरूपं । यच्छक्रासि । शक्रा-सीष्टहता । मोषु । (मोइतिमो) । सुत्वा । प्रथः ।

नद्वन्द्री । उत्तरकृतंरूपं । घर्मेत्रवज्रिन् । घनेवेतिघना-
ऽदूस । वज्रिन्क्षुधिहि । अग्नेऽच्छ । अच्छावद ।

सर्वमेवान्यद्यथासंहितमाचरेत् ॥५॥

पूर्वकृताद्रूपादुत्तरकृताच्च यदन्यत्तत्सर्वं यथासंहितं आचरेत् । यथासंहिता विधानेनविहितंतथैवाचरेदित्यर्थः । वाजेषुसासहिः । सासहिर्भव ।

अवगृह्याण्यतिक्रम्य सहेतिकरणानिच । धच्चिधुच्चिप्रवादौच विकृतादौप्लुतादिच । अन्तः पदंचयेषांस्यां द्विकारोनन्यकारितः । एतानिपरिगृह्णीयात् ॥६॥

अवगृह्याणिद्विखंडानि पूर्वोत्तरपदरूपाणि पदानि अतीत्य परिगृह्णीयात् । ऋषिभिरीड्यः । ऋषिभिरित्यृषिऽभिः । सहेति करणानि च । इतिकरणसहितानिच पदानि अतिक्रम्य परिगृह्णीयात् । इन्द्राग्नी अपात् । इन्द्राग्नी इतीन्द्राग्नी । धच्चि धुच्चि इत्येतौच प्रवादौचविकृतादीसंतौ अतिक्रम्यपरिगृह्णीयात् । अनुदच्चि दच्चिदावने । धच्चीतिधच्चि । मंदिमंदुच्चन् । दुच्चन्दुधे । धुच्चन्निति धुच्चन् । विकृतादौइतिकिं । मौचात तंधच्चि । धच्च्यतंस । निधुच्चन् । धुच्चन्वचणाय्यः । प्लुतादिच पदमतिक्रम्य परिगृह्णीयात् । आरैवपंथां । अरैगित्यरैक् । आयुवत्तातामश्विना । अयुवातामित्ययु-

त्वातां । अंतर्मध्येयेषांपदानां विकारःअनन्यकारितः आत्मकारितइत्यर्थः । तानिचअतिक्रम्य परिगृह्णीयात् । सुषुमायातं । सुसुमेति सुसुम । वाद्रधानाशुभः । वद्वधानेतिवद्वधाना । अनन्यकारितइतिकिं । मन्नरणं ।

## बहुमध्यगतानिच ॥ ७ ॥

बहूनांपदानां मध्यगतानिचयानिपदानि तानिच-अतिक्रम्य परिगृह्णीयात् । ईयते नरा वशंसंदैव्यं । न-राशंसमितिनराशंसं । चेतिच । शुनश्चिच्छेपंनिदितं । शुनःशेपमितिशुनःशेपं । चिदितिचित् । नरावाशंसं पूषणां । नराशंसमितिनराशंसं । वेतिवा । मोषुणः । मोइ-तिमो । स्विति सु ।

## अर्धर्चांत्यंच ॥ ८ ॥

अर्धर्चांतेवर्त्तमानंच अतीत्यपरिगृह्णीयात् । पुत्राय-मीह्लुषे । मीह्लुषइतिमीह्लुषे ।

## नाकारं प्रागतोऽननुनासिकं ॥९॥

अनुनासिकरहितमाकारं अर्धर्चांत्यात्प्राक् नप-रिगृह्णीयात् । आमन्द्रम । मंद्रमावरेण्यं । आवरेण्यम । प्रागतइतिकिं । तनुष्वा । एत्या । अननुनासिकमि-तिकिं । गभीरआँउग्रपुत्रे । एत्या ।

## प्रत्यादायैवतं ब्रूयादुत्तरेण पुनः सह ॥ १० ॥

प्रत्यादायतमननुनासिकंत्राकारं पुनरुत्तरेणैव सन्दध्यात् । मंद्गमावरेण्यं । आवरेण्यं ।

## उपस्थितं सेतिकरणं ॥ ११ ॥

इतिकरणसहितंपदं तदुपस्थितसंज्ञंवेदितव्यं । वाहु-इति । उपस्थितसंज्ञायाः प्रयोजनम् । व्ययवध्युपस्थितइति ।

## केवलंतु पदंस्थितं ॥ १२ ॥

केवलंतुपदं इतिकरणरहितं स्थितसंज्ञंवेदितव्यं । अ-ग्निं । स्थितसंज्ञायाःप्रयोजनम् । स्थितस्थितोपस्थितयो-स्तद्दृश्यतेपद यथावदिति ।

## तत् स्थितोपस्थितं नाम यतो-भेत्राह संहिते ॥ १३ ॥

तत्पदंनामस्थितोपस्थितं वेदितव्यं । कतरन्नुतत् । उभेस्थितोपस्थितेयस्राश्चसंहितवक्ता । विभावसोइतिवि-भाऽवसो । स्थितोपस्थितसंज्ञायाः प्रयोजनम् । स्थित-स्थितोपस्थितयोश्च दृश्यतेपदंयथावदिति ।

## अदृष्टवर्णो प्रथमेचोदकः स्यात्प्र-दर्शकः । एतदिष्टं ॥ १४ ॥

प्रथमेद्विपदेपूर्वपदस्यांतेवर्णो अदृष्टे तस्यप्रदर्शकः । चोद-कःस्यात् चोदकःपरिग्रहः इत्यनर्थांतरं । तन्नः । तदि-तितत् । नोमित्रः । तंनः । तमितितं । तांत्वां । नोद्या-वापृथिवी । तामितितां । एतत्प्रदर्शनमिष्टं । कस्मादिति

नपठ्यते । इष्टवचनादेवतस्यानित्यत्वंगम्यते ।

समासांस्तुपुनर्वचनइंगयेत् ॥१५॥

समासांस्त्ववग्रहाणि पदानितानिच पुनर्वचनेपरिग्रहस्यद्वितीयेवचनेइंगयेत् । अवसानकुर्यात् । पुरोजितीवः । पुरोजितीइतिपुरःऽजिती ।

इतिपूर्वेषुसंधानं पूर्वैःस्वःस्यादसंहितं । तदवग्रहवद्ब्रूयात् ॥१६॥

इतिपूर्वेषपदेष परिग्रहेक्रियमाणेय इतिपूर्वास्तेष इतिनासंधानंस्त् । पूर्वैराचार्यैःइष्ट अस्माकमपिस्वरितोदयदसंहित स्यात् । आचार्यग्रहणं पूजार्थं । असंहितमितियथेतिकरणांतोनिघातं नप्राप्नुयात् । स्वरितिप्रत्यये तदवग्रहवद्ब्रूयात् । अवग्रहवदिति यथामात्राकालान्तरंस्यात् । स्वरितिस्वः ।

संधिनर्धर्चयो र्भवेत् ॥ १७ ॥

अस्मिन्क्रमविधाने अर्धर्चयोः संधिर्नभवेत् । केन प्राप्तावयंप्रतिषेध आरभ्यते । इष्टक्रमत्वात्समयात्संध्यात्सर्वेशः क्रमइतिप्राप्ते ।

इष्टक्रमत्वात्समयात्संध्यात्सर्वशःक्रमे । पदेनचपदाभ्यांच प्रागवस्येदतीत्यच ॥ १८ ॥

दृष्टक्रमत्वाद्वेतोः समयात्संदध्यात् । सर्वशःक्रमेपदेन च । समयंप्राप्य पदेनावस्येत् । समयमतीत्यपदाभ्यामवस्येत् । प्रप्रवः । प्रप्रेतिप्रऽप्र । बर्हिष्टुभमिषं मंदहीरायेंदवे । योनिष्टइंद्रसदने अकारि । अकारितमान्नभिः पुरुहूत । दृष्टक्रमत्वादिति हेतुसामान्येसत्यपि । अग्नेवयं प्रथमस्यामृतानामित्येवमादीनामनुदृष्टानां सर्वशःसंदध्यादिति यदेतत्तन्नोपपद्यते । कस्मात् । समयसंज्ञाया अभावात् ।

## नकारस्योष्मवद्वृत्तं प्लुतोपाचरितेनतिः । प्रश्लेषश्चप्रगृह्यस्य प्रकृत्यास्युःपरिग्रहे ॥ १६ ॥

नकारस्ययदूष्मवद्वृत्तं, प्लुतश्च उपाचरितश्च नतिश्च, प्रश्लेषश्च प्रगृह्यस्यच ॥ एतानिसर्वाणि प्रकृत्याभवंति परिग्रहेक्रियमाणे । नकारस्योष्मवद्वृत्तं अस्माँअस्माँइदुत् । अस्मानस्मानित्यस्मान्ऽअस्मान् । अभीशूँरिवसारथिः । अभीशूनिवेत्यभीशून्ऽइव । साह्वांश्चिकित्वान् । साह्वानितिसाऽह्वान् । विभ्राजमानाँश्चमसान् । विभ्राजमानानिति विऽभ्राजमानान् । आवदंस्त्वम् । आवदन्नित्याऽवदन् । स्वतवाँः पायुः । स्वतवानितिस्वऽतवान् । प्लुतः सचूसचूकृणुहि । मचुमच्चितिमचुऽमचु । उपाचरितः ज्योतिष्कृदसि । ज्योतिःकृदितिज्योतिःऽकृत् । नतिःसुषुमायातं । सुसुमेति सुऽसुम । पितयाणांदुमत् । पितृयानमिति पितृऽयानं । प्रगृह्यस्यप्रश्लेषः । दम्पतीवक्रतुविदा । दंपतीइवेति दंपतीऽइव ।

प्रगृह्यस्येतिकिं । प्रवणीवयः । प्रवणीवेति प्रवणीइव ।

**प्रौढाच्चरा गमोऽपैति ॥ २० ॥**

प्रौढाच्चराणां संधीनां आगमोयउक्तः सअपैतिपरि- ग्रहे क्रियमाणे । पुरुश्चंद्रं यजतं । पुरुचंद्रमिति पुरु- ऽचंद्रं । वनर्षदो वायवः । वनसदइति वनऽसदः ।

**न्यायंयांत्युत्तरेचयः । रिफिता- न्यूष्मणोघोषेदूभावःस्वधितीवच॥२१॥**

न्यायंयांतिप्रकृतिंगच्छन्तीत्यर्थः । उत्तरे त्रयः संधयः परिग्रहेक्रियमाणे रिफितानिचऊष्मणोयान्यघोषे प्र- त्यये(1)|दूभावः(2) स्वधितीवेतिच(3) पदं । अघोषेरिफितानि । स्वश्चंचारथिनः । स्वश्चचाइतिस्वः ऽ चचाः । धूर्षदं वनर्षदं । धूःसदमितिधूः सदं । स्वर्पतिंयत् । स्वःप- तिमिति स्वःऽपतिं । दूभावः । दूणाशंसख्यं । दुर्नश- मिति दुःऽनशं । जनस्यदूढ्यः । दुर्ध्यः १ इतिदुःऽध्यः । दूलभारथः । दुर्दभइति दुःऽदभः । स्वधितीवरीयते । स्वधितिरिवेतिस्वधितिःऽइव । अघोषइतिकिं । स्व- र्जितंमहि । स्वर्जितमितिस्वःऽजितं । अपरे इदंसूत्रं यो- गविभागेन वर्णयंति । न्यायंयांत्युत्तरेचयः ॥ प्रौढाच्चरा- गमा वुत्तरेत्रयःसंधयः प्रकृतिंयांति परिग्रहेक्रियमाणे । कतरेत्रयः (1) जुगुक्षतइति अचिधुक्षि(2+3) प्रकादौच, नजुगु- क्षतः । जुघुक्षतइतिजुघुक्षतः । अनुदक्षि । दक्षिदावने । धक्षीतिधक्षि । दुक्षन्दधे । धुक्षन्निति धुक्षन् । योगवि- भागादुत्तेपरिग्रहे एतेषांप्रकृतिभावोनसिध्यति । यो-

गविभागे भवति। उत्तरेत्वय इतिगृह्यामनर्थकंभवति।
रिफितान्यूष्मघोषे इभावः स्वधितीवचेति यथोक्त-
मेवेति।

इति श्री पार्षदव्याख्याया मानंद-
पुरवास्तव्यवज्रटपुत्रोव्वटकृते
प्रातिशाख्यभाष्ये क्रमपट-
लंदशमंसमाप्तम्।

अथार्षलोपेन यदाह सक्रमः
समानकालं पदसंहितं द्वयोः ॥१॥

अथार्षीः संहितायाः अलोपेन द्वयोःपदसंहितं(ते-
षपदे तयोश्चसंहिता) समानकालं तुल्यकालं यदाह-
सक्रमोभिधातोवेदितव्यः। अग्निमीले। ईलेपुरो-
हितम्। समानकालंपदसंहितन्द्वयोरितिविधेः स्वरानु-
स्वारोपहितो हिरुच्यते संयोगादिः सक्रमइतिमा
भूदिति।

अथोबह्वनामविलोपकारणात्प-
रैरवस्यंत्यतिगम्यकानिचित् ॥२॥

अपिचेद्बह्वनांपदानां आर्षीविलोपार्थं क्रमोभवती-
तिवेदितव्यः। सबपरैःपदै रवस्यन्ति। अतिगम्यकानि-
चित्पदानि। तानिपदान्युत्तरत्रोदाहरिष्यामः।

**अपृक्तमेकाक्षरं मद्वियोनि यत्त-**
**दानुनासिक्यभयाद्दतीयते ॥३॥**

अपृक्त मव्यंजनमेकाक्षरमद्वियोन्यसंध्यक्षरं यत्तत्पदं मनुनासिक्यभयाद्दतीयते ।"अष्टौवाद्यानवसाने प्रगृह्यानाचार्या आहुरनुनासिका न्स्वरानितितन्माभूदिति । मंहमावरेणयं । उहेति । अपृक्तमितिकिं । दुहितुरा: । एकाक्षरगृहणं पदविशेषणं । अपृक्तमेकाक्षरं पदमवसानीयमिति । इतरथाह्यक्षरं विशिष्यते । अपृक्तमद्वियोनि यदक्षरं तदंतमनवसानीयमिति । अत्रकोदोष: । अमीध्वमध्रिगा उइति । अवसानंनस्यात् । अमोगाव इतितु वृत्तौ । अद्वियोनीतिकिं । अभूवो ।

**नतेश्चपूर्वेण परस्यकारणं नतेः**
**परस्योभय हेतुसंग्रहात् ॥ ४ ॥**

नतेरूपूर्वेण पदेनपरस्य च नतेर्यत्कारणं तत्पदमनवसानीयंभवति । किंकारणं परस्यपदस्य उभयहेतुसंग्रहार्थम् । मोषुणाइत्यत्र "स्ववह्वक्षरेणेति नामिनिमित्तंषत्वंमोषुणाइत्यत्र नतेसुष्मइतिषत्वनिमित्तं णत्वं नास्यभावेषत्वं नस्यात् । षत्वाभावेणत्वं च नस्यात् । सुविलोप: अतउभयहेतुसंग्रहार्थं प्रतीयते । मोषुणा: आसुष्माणा: ।

**परीत इत्यक्षरमेतयोर्द्वयो: प-**
**रंद्विपूर्वोनमतीत्यतीयते ॥ ५ ॥**

परि इतः इत्येतयोर्द्वयोः पदयोः परम्पदं अनव-सानीयंभवति। किंकारणं। अनवसानीयात्परं सिं-चतेतिपदं व्यवस्थितमपिपूर्वंपरीतिपदं नमयतीति। परीतोषिंचत।

ततोपरे संध्यमवेक्ष्यकारणं त-दर्थजं द्विक्रममत्रकुर्वते॥ ६॥

ततः तेभ्यः अपर आचार्याः अस्यामागमवस्थायां सं-धिजंकारणमवेक्ष्य (किंकारणं। इतोषिंचतेत्योत्वनि-पातनं) तदर्थमेव (षत्वार्थमेव) ओत्वं मन्यमानाः द्विक्रम-मत्रकुर्वते। परीतः। इतोषिंचत।

तमः परं रेफनिमित्तसंशयात्त-थावरित्येतदपोह्यतेपदम्॥ ७॥

तमःपरं आवरित्येतत्पदं तथा (यथा पूर्वोक्तमवसा-नादपोह्यते अपनीयते। किंकारणं? रेफनिमित्त संश-यात्। नहिविज्ञायते पूर्वेणपदांतेन उत्तरेणवापदादि-ना रेफोभवतीति। एतदुभयहेतुमंग्रहार्थं मपनीय-ते। उषाआवस्तमः।

अटोपितोसोचिदुषर्वसूयवो न-धचिधुक्षीरयपिचातियंतिकिम्॥ ८॥

यदि आवरित्येतत्पदं रेफनिमित्तसंशया दनवसा-नीयं भवति। सांशयिकनिमित्तानि। अटोपितो। सो-

चित् । उपर्वसुयव: । इतीमानिपदानि यद्विषुचीत्ये- तौच प्रवादौ किंकारणं नातियंति ? इमान्यपिहि तेन तुल्यानि । सत्यं । क्रमशास्त्रे यनवसानीये यन- नुगृहीतानिइमानि तस्मान्नातियंति । तत्रगृहीताना- मिष्ठ इतुरुच्यते ।

स्वसारमित्येतदपोद्यतेपदं पर: सकारोपज(१)नोऽस्कृतेतिच । नि- रस्कृतेतिह्युपसर्गकारित स्तद- न्वयादाचरितंतुपंचभि: ॥ ९ ॥

स्वसारमित्येतत्पदं अवसानादपोद्यते । अस्कृतेतिच परंपद मपोद्यते । किंकारणं । पर:सकारोह्युपजन: । सकारागमइत्यर्थ: । निरस्कृतेत्युपसर्गकारित: तदन्व- यात् उपसर्गान्वयात्।पंचभिरेवपदैराचरितं क्रमंविद्यात् आचार्यैः । निरुस्वसारमस्कृतोषसं ।

सहेतिचेमेतिचरक्तसंहितं गु- णागमादेतनभाविचेतन । पदं- चचास्कंभचिदित्यत: परं प्लु- तादिचैतानिनिमित्तसंश्रयात्॥१०॥

सहेतिचेम् इतिकारणायुक्तं ईमित्येतत्पदं लुप्तम- कारमनवसानीयं भवति । किंकारणं ? निमित्तसं-

(१) नोस्कृतेतिचेति बहुपुस्तकपाठ: ।

ग्रयात्। नहिविज्ञायते पूर्वेणावापदान्तेन उत्तरेणावापदादिनामकारस्यलोपोभवती त्यतउभयहेतु संग्रहार्थमतीयते। यमोगर्भं। एतिचरक्षा संहितं आद्ब्र्र्येतत्पदं रक्षासंहितं यत्तत् अनवसानीयं भवति। किं कारणमिति आकारस्यरागोभवतीति। अतउभयगतहेतु संग्रहार्थं। अन्न आमपोवृणाना त्रितनोति। गुणागमादेतन भाविचेतन। गुणागमादेकारागमा देतनभूतं इतन इत्येतत्पदं अनवसानीयंभवति। किंकारणमिति गुणागमोभवतीति अतउभयगत संशयः। वीरास एतनमर्यासः। पदञ्चचास्कंभचिदित्यतः परं। चास्कंभचिदित्यस्मात्पदात्परं स्कंभनेनेतिचपदं अनवसानीयं। किंकारणं तेननिमित्तेन सकारस्यलोपोभवती त्युभयगतः संशयः। चिस्कंभनेनस्कभीयान्। प्लुतादिच। प्लुतादिचपदं योनिमारैगित्येवमादि अनवसानीयंभवति। प्लुतादिप्रभृतीनिचेत्यत्र गतंयोनिमारैगप। अत्राकारागमः पूर्ववत्संशयितः।

# द्वाभिक्रमंपूर्वंनिमित्तमानिन स्त्रिषूत्तमेष्वाहुरनंतरंहितत्॥११॥

द्वाभ्यांपदाभ्या मभिक्रम्यगच्छंति। उत्तमेषु त्रिषुनिमित्तसंशयेषु अनवसानीयात्पूर्वंपदंनिमित्तंमन्यंते। किंकारणं। अनंतरंहि तत्पूर्वंपदं। गुणागमःसकारलोपश्च दीर्घत्वंच त्रयाणांभवतीति। वीरासएतन। चिस्कंभनेन। योनिमारैक्।

अनन्तरं त्वेव चतुर्थषष्ठयोः परं
कथं तवचनं ह्यभिक्रमं ॥ १२ ॥

अनन्तरन्तु पुनश्चतुर्थषष्ठयो रनवसानीययोः । उषाषावक्तमः । यमीगर्भमित्येतयोः परंपदं निमित्तं भवितुमर्हति । पूर्वनिमित्तमानिनां हेतुसामान्यात् । कथं तवचते पूर्वनिमित्तमानिनः ह्यभिक्रमं नकुर्वन्त्येवं स्थितेपि यदि चतुर्थषष्ठयो र्ह्यभिक्रमं नकुर्वंति विषूत्तमेष्वपि न कर्त्तव्यं । अथ उत्तमेषु कुर्वन्ति चतुर्थषष्ठयोः कर्त्तव्यं उभयत्रापि हि विकारहेतुरानंतर्यमेव ।

अनानुपूर्व्ये पदसंध्यदर्शना त्पदव्यवेतं च पदव्यवायि च ॥ १३ ॥

अनानुपूर्व्ये संहिते क्रमे क्रियमाणे पदेनयद्व्यवेतं यच्च व्यवैति ते उभे अनवसानीये भवतः । किंकारणं? पदसंध्यदर्शनात् । शुनःशेपं चिदित्येतयोः पदयो रन्योन्येनसह संधिरदृष्टो भवति । शुनश्चिच्छेपंनिदितं ।

ततोपरे द्विक्रममाहुराश्रया त्कृतावि लुप्तावहि वर्णसंहिता ॥ १४ ॥

ततोपरेआचार्याः अस्यामवस्थायां द्विक्रममिच्छन्ति । किंकारणं? आश्रयालक्षणात् । कृताहि अनपविलोपेनवर्णानां वर्णैः सहसंहिताभवतीति । शुनश्छ्यव विसर्जनीयः चितिप्रत्यये अघोषे रेफपरे फीचोष्माणां स्पर्श-

उत्तरइतिश्रकारमापन्नः । चिदित्यत्र तकारः श्रेपप्रत्यये तालव्येघोषउदये चकारमापन्नः । सर्वैः प्रथमैरुपधीयमानः शकारः शाकल्यपितुः छकारमितिछकारमापन्नः । शुनश्चिच्छेपमित्यत्रमकारः पदान्तेवर्तमानः नकारेप्रत्यये विस्थानेस्पर्शउदयेमकारः सर्वेषामेवोदयस्योत्तमःस्वमिति नकारमापन्नः । शुनश्चिच्छेपन्निदितं ।

## पदानुपूर्व्येणसपूर्वआसत स्ततोव्यवेतंचसहव्यवायिच ॥ १५ ॥

पदानामानुपूर्व्येण सपूर्वैविद्यमानपूर्वं अनानुपूर्व्ये संहिते अहर्चस्यपूर्वेद्वैपदशः क्रमोवक्तव्यः आसत अत्रानुपूर्वसंहितायां । हाजना । जनायातयन् यातयन्नन्तः । अंतरीयते । किमर्थमिदमुच्यते । ननुक्रमोद्वाभ्यामभिक्रम्यैत्येवसिद्धं । नसिध्यति । ईयते इत्येतस्य नराइत्येतेनपदैकदेशेनसह संधिर्दृष्टः । नराशंसमित्येतेनपदेन सह संधिरदृष्टः । तदापदसंध्यदर्शनात् ईयतेइत्येतस्य पदस्य अनवसानीयता प्राप्नोति सामाभूदित्युच्यते । ततोव्यवेतञ्चपदं यच्चव्यवैति तेउभे सहवक्तव्ये । केनसहवक्तव्यमित्येताभ्यांसह । ईयते नराशंसंदैव्यम् एवमेके । अपरेपुनरन्यथा ईयतइत्येतस्य अनवसानीयता नैवप्राप्नोति । कथं पदैकदेशेनवा, कृत्स्नेनवा, तदसन्धिर्दृष्टोभवति । किमर्थंतर्हि इदमुच्यते । ततोव्यवेतंचसहव्यवायिचेत्येवमाद्यपूर्वविधिः अत्रानुक्तः पुनरुच्यते ।

## ततोनिराहेतरयोश्चतेपदे ततो- व्यवेतेनपरस्यसंहिता ॥ १६ ॥

ततः अस्यामवस्थायां निराहवतापरिग्रहेणयोजय- तीत्यर्थः। तेपदेकृतसंहिते व्यवेतंचयच्चव्यवेति नराशंत- मितिनराशंसं। चेतिच। इतरयोश्चकतरयोः अविद्यमा- नपूर्वयोः तेपदेनिराह। शुनश्चिच्छेपंनिदितं। शुनःशेप- मितिशुनः शेपम् चिदितिचित्। नराचाशंसंपूषणं। नराशंसमिति नराशंसं। वेतिवा। ततः अव्यवेते- नपदेन परस्यसंहिताकर्त्तव्या। दैव्यञ्चनिदितंसह- स्रात् पूषणमगो ह्यम्। असंदिग्धार्थमिदमाचार्येण विस्तरेणोक्तं।

## अनंतरेचिक्रमकारणेयदि त्रिभि- स्वगार्ग्यःपुनरेवचत्रिभिः ॥ १७ ॥

अनंतरे ऽव्यवहिते चिक्रमयोः कारणेनिमित्तेय- दिभवतः तदाप्रथमतः त्रिभिः पदैः क्रमंब्रूयात्। पुनः त्रयाणांमध्यमंपदं प्रत्यादाय पुनरेवच त्रिभिः किंकारणमेव मपिनिमित्तिनामविलोपो भवतीतिगा- र्ग्यो मन्यते। उद्रूषु। ऊषुणः।

## त्रिसङ्क्रमेपञ्चभि राष्यनुग्रहः ॥१८॥

अत्रिन्निमित्तनैमित्तिनां त्रयाणांनामिपत्वणत्वा- नां सङ्क्रमेपञ्चक्रमेण आर्ष्योपविलोपोभवतीति मन्यन्ते एकेआचार्याः। किंकारणमुक्तंहि उद्रूषुणद्रूत्यत्र नामि-

निमित्तंषत्वं षत्वनिमित्तंणत्वं। नास्यभावेषत्वं नस्यात्। षत्वाभावेणत्वं नस्यात्। सविलोपइतिन इत्येतस्यान-वसानीयत्वं कस्मात्। नकारस्योत्तरपदेन प्रत्यादाने णोवसोइतिसह संधिरदृष्टोभवतीति। उदूषुणोवसो।

## अतुःक्रमस्वाचरितोचशाकलैः॥१९॥

एवं पक्षान्तरगमनेष्वस्मिंस्त्रिसंगमे शाकलास्तु: क्रम माचरन्ति। तुशब्दःपक्षान्तरनिवृत्त्यर्थः। उदूषुणः।

## अलोपभावादपरेवहुक्रमं\प्रति-स्वमार्षीतिनकुर्वतेक्वचित्॥२०॥

अलोपभावा दार्ष्याअलोपस्या भावात् अपरेआ-चार्याबहुक्रमंक्वचिदपि नकुर्वते। यदिबहुक्रमो नक्रियते निमित्तनैमित्तिकयोगे कथमार्ष्या अलोपोभवति। पदांतस्यपदादिना सन्धौक्रियमाणे लोपागमविकाराः प्रतिस्वम्भवति। द्वयोर्द्वयोः पदयोरार्ष्याअलोपोभवति। प्रतिस्वमार्षीभवतीति। मोषु। सुनः।

## असर्वशास्त्रिप्रभृतिष्वनेकशः स्म-रन्तिसंख्यानियमेन शाकलं॥२१॥

प्रतिस्वमार्षीतियदुक्तं तदसर्वशः। नसर्वत्रयुज्यत इत्यर्थः। कथंयत्रपदांतपदाद्यो रन्योन्यंप्रतिनिमित्तत्वं तत्रयुक्तं। तन्नः। नोमिवः इत्यादौ। यत्रतुपदाभ्यां पूर्वपदं विकारस्यनिमित्तंभवति तत्रनयुक्तं, त्रिप्रभृतिषुप-देषु। मोषुणइत्यत्रनामि निमित्तंषत्वं स्यात्। यथा-

पदं संधिमपेतहेतुषु इतिवच्यमाणत्वात् | सविलोपवृ-त्युक्तं । तस्मादनेकशः बह्वः स्वरंति । इत्युक्तं आचार्याः । संख्यानियमेन त्रिःक्रमचतुः क्रमंपञ्चक्रमा इति । एतेन संख्यानियमेन शाकलविधानं । मोषुणः । उदूषुणः । निरुखसार मस्कृतोषसं ।

# अथावनेपूर्वविधानमाचरेत् ॥ २२ ॥

अथावने अभिश्रणे । किमुक्तंभवति । यथाक्रम-मपाप्ताभ्यां पदाभ्यां पूर्वपदंनिमित्तंनभवति तत्रेत्युक्तंभ-वति । पूर्वविधानमाचरेदिति|द्वाभ्यांक्रममाचरेदित्य-र्थः । अग्निमीले । ईलेपुरोहितं |यत्रयत्र यावनं तत्र-तत्र बहुक्रममाचरेत् । मोषुणइति ।

# यथापदं संधिमपेतहेतुषु ॥ २३ ॥

यथापदंसंधिंकुर्यात् । अपेतहेतुषु । प्रणः । न इन्द्रो । प्रशब्दोणत्वहेतु| स्तस्यापाये उत्तरेणसहप्रत्यादाने क्रिय-माणेनत्व विलोपसंशयनिवृत्त्यर्थं ग्रहणं नइंद्रो ।

# अथोपदाभ्यां समयंपदेनच क्र-मेष्ववस्येदतिगम्यसंदधत् ॥२४॥

अथोपदाभ्यां समयमतिक्रम्यावस्येत् । संदधत्तथास-मयंपदेन । किंपुनः कारणं । समयातिक्रमणे दृष्टक्रम-त्वादित्युक्तं क्रमशास्त्रेएव । किमर्थंपुनर्द्वाभ्यामतिक्र-म्यावसानं । अदृष्टक्रमत्वादितिवक्तव्यं । एकेनकस्मा-

त्संदधदवस्यति । संध्ययेमितिवक्तव्यं । त्वां३ । इ-
त्यदिन्द्राणसातौ स्वर्मीह्ले । क्रमेष्वितिगृह्यणा त्वाद्-
व्यवस्थायां समयोत्तरपदद्वयांते अवसानंनस्यात् । त्वां-
इत्यदिन्द्राणसाताविव्यादिषु । यज्विविसत्यसोमपा इत्या-
दिषु समयोत्तरे पदद्वयांते अवसानंस्यादेव । पादलक्षणा-
वशात् ।

सहेतिकाराणि समासमंतभा
ग्बहुक्रमेमध्यगतानि यानिच ।
तृतीयतांगच्छतियस्यसोष्मवा-
ननन्ययोगंविकृतंप्लुतादिषु । अ-
तीत्यतेषांपदतांप्रदर्शयेत् ॥२५॥

सहेतिकाराणिः इति करणयुक्तानि । समासं
अवग्रहाणि । अंतभाक् अर्धर्चोन्त्यंयत्पदं भजते । बहुक्रमे-
मध्यगतानि यानिचत्रिक्रमप्रभृतिषु बहुक्रमेषुयानिमध्य-
गतानि पदानियानिच तृतीयतांगच्छतियस्य सोष्मवान् ।
जुगुक्षतोदुदुक्षन्नित्येवमादिषु सोष्मा घकारस्तुर्थः । सच-
वर्गतृतीयतांदकारमापद्यते । तत् । अनन्ययोगंविकृतं अ-
नन्यकृतो यस्यविकारःस्वात्मकारित इत्यर्थः । प्लुतादी-
निचपदानियोनिमारैगित्येवमादीनि । तेषांपदानांउ-
त्तरेण सह प्रत्यादानंकृत्वा यापदेप्रकृतिर्दृष्टातां दर्श-
येत् । कैर्नपरिगृह्णा | किंकारणं ? सकृतिस्तुः । स्थि-
तिस्तु । इइत्यत्र युग्मान्तस्यादंतमूलीयपूर्वैरिति परिगृ-

इत्यत्र द्वितीयेषत्वप्रसंगः समाभूदिति । समासइति । दुर्हणो इति दुः ऽहनो इत्यत्र ऋकाररेफषकारानकारमिति परिग्रहस्यपूर्ववचने णत्वप्रसंगः समाभूदिति । अंतभाक् । मत्सान्धिषः । सइतिसः । इत्यत्रयुग्मान्तस्थेति पूर्ववत् । बहुक्रमेमध्यगतानियानि । मोषुणः इत्यत्रपूर्ववत् तृतीयतांगच्छति यस्य सोषवान् । जुघुक्षत इति जुघुक्षत इत्यत्र परिग्रहस्यसंहितावत्पूर्ववचनं पदवदुत्तरमिति परिग्रहस्यपूर्ववचने तृतीयत्वप्रसंगः समाभूदिति । अनन्ययोगंविकृतं । सुसुमेतिससुम । इत्यत्रपरिग्रहस्य संहितावत्पूर्ववचनेषत्वप्रसङ्गः समाभूदिति । प्लुतादि । योनिमारैगित्येवमादिषु । अरैगित्यरैगित्यत्रपूर्ववचनेदीर्घत्वप्रसंगः समाभूदिति । अस्यैवापरायोजना । अतीत्य तेषांपदतां प्रदर्शयेदिति । सहेतिकारान्तौत्येवमादीन्यतिक्रम्य परिग्रहेण तेषांपदानांपदतां प्रदर्शयेत् । किंकारणं । नहिपरिग्रहादृते तेषांपदतादृश्यते । सहेतिकारेषु तावद्दुर्ग्रहतांतत्प्रदर्शनार्थंच । इन्द्राग्नीतपंति । इंद्राग्नीइतीन्द्राग्नी । प्रगृह्यप्रदर्शनार्थंच । प्रातःसोमं । प्रातरितिप्रातः । रेफप्रदर्शनार्थंच । समासेष्ववग्रहप्रदर्शनार्थंच । पुरोहितं यज्ञस्य । पुरोहितमितिपुरः ऽहितं । अंतभागत्वर्द्धचांतख्यापनार्थं । अर्णाचित्ररथावधीः । अवधीरित्यवधीः । पदादिप्रदर्शनार्थं च । बहुक्रमेषुमध्यगतेषु पदवद्भाग प्रदर्शनार्थं । निरुस्वसार मस्कृतोषसं । ऊँ इत्यूँ । स्वसारमितिस्वसारं । अकृतेत्यकृत । तृतीयतांगच्छति यस्यसोषवानिति पृथग्ग्रहणमनर्थकं । अनन्ययोगं विकृतमित्येवमेवसिद्धत्वात् । नानर्थ

त्वं । परिग्रहस्य उभयोरपि वचनयोः पदत्वप्रदर्शनार्थं । दृष्टुषःकृष्णाजंहसः । धक्षुषइतिधक्षुषः । किमुच्यतउभयोरपिवचनयोः पदत्वप्रदर्शनार्थं पृथग्ग्रहणमिति । अन्येष्वप्यनन्ययोगविकृतेषु उभयोरपिवचनयोः पदत्वंप्रदृश्यते । सत्यं । नकारलोपोस्यभावमानयेदित्येवमादि वचनात् यत्रयत्रवचनं नास्ति तत्रतत्रपरिग्रहस्य पूर्ववचने विकारोभवत्येव । यथारजेषितमितिरजः ऽइषितं । अनन्ययोगविकृतेषुअकारःपदत्वप्रदर्शनार्थमेव । सुषुमायातं । सुसुमेतिसुसुम । प्लुतादिषु पदत्वप्रदर्शनार्थमेव । आरैक्पंथां । अरैगित्यरैक् ।

## कृतेतुगार्ग्यस्य पुनस्त्वभिक्रमे॥२६॥

गार्ग्यस्याचार्यस्य पक्षे विभिन्नगार्ग्यःपुनरेवच विभिरिति पुनःस्त्यभिक्रमेकृते एवंपदतां प्रदर्शयेत् । उद्रुषु । अषुणः । अंद्वत्यूँ । स्वितिसु ।

## अदृष्टवर्णेप्रथमेप्रदर्शनं स्मरंति- तत्त्वतनिराह्वचोदकः ॥ २७ ॥

प्रथमेद्वेपदे पूर्वपदस्यांत्यवर्णे अदृष्टेतस्यप्रदर्शनमाचार्याः स्मरंतिइच्छंति । तत्प्रदर्शनं निराइतिप्रवदतिचोदकःपरिग्रहः । किंकारणम् । पदांतसंशयनिवृत्त्यर्थं । तान्त्वामित्यत्र अर्धर्चायेद्वेपदे नज्ञायते मकारांतंवा पदंमकारांतंवा तस्मात्परिगृह्णंति । तामत्र । तामितितां ।

## पदंयदाकेवलमाह सास्थितिः॥२८॥

पदंकेवलमनितिकरणं यदाऽऽह्वक्ता सास्थितिरिति-वेदितव्या । संज्ञाकरणं स्थित्यभिक्रमार्थं । ताम्नः । ता-मितिताम् ।

## यदेतिकारांत मुपस्थितंतदा॥२९॥

इतिकरणांतं यत्पदंआह्वक्ता तत्पदमुपस्थितसंज्ञं वेदितव्यं । संज्ञाकरणं उपस्थितेनाभिक्रमार्थं । इंद्रा-ग्नीइति । तामिति ।

## अथोविपर्यस्यसमस्यचाहते य-दास्थितोपस्थितमाचरंत्युत॥३०॥

अथोतेपदे स्थित्युपस्थिते विपर्यस्यितेविपर्यस्योपस्थितं तत्पूर्वंकृत्वास्थितंपश्चात् समस्यच यदाऽऽह्वक्ता तत्प-दंस्थितोपस्थित संज्ञं वेदितव्यम् । संज्ञाकरणं स्थितोप-स्थितेनाभिक्रमार्थं । विभावसोइतिविभाऽवसो । ताम्नः । तामितितां । आचरंत्युत । एवंस्थित्युपस्थितस्थितोप-स्थितानां अन्यतमेन पदप्रदर्शनमाचरंति ।

## पुनर्बुवंस्तचसमासमिंगयेत्॥३१॥

तत्रस्थितोपस्थिते क्रियमाणे पुनर्ब्रुवन्वक्ता समा-समवगृह्णीयात् । पुरोहितमितिपुरःऽहितं । अतो-न्यतेषांपदतां प्रदर्शयेत् इत्येवंसिद्धे इदंवचनंपरिगृह्य पूर्ववचने अवग्रहप्रतिषेधार्थम् ।

स्वरित्त्यतोन्येषुतु संधिमाचरेत्।
अवग्रहस्यैवद्दिकालधारणा प-
रिग्रहेस्तीत्युपधेत्यनुस्मृता ॥३२॥

तस्मिन्नेवचस्थितोपस्थिते स्वरित्येतत्पदंवर्जयित्वा न्येषुपदेषु इतिकरणात्पदेषुसत्सुइतिनातेषां यथोक्तं संधिंकुर्यात् । औवंभृगुवदित्यौवंभृगुऽवत् । इंद्राग्नीइती-न्द्राग्नी । स्वरित्यतोन्येष्वितिकस्मात् । स्वरित्येतस्यहि पदस्य अवग्रहस्यैवद्दिमात्राकालः । कालधारणापरिग्रहे इत्युपधास्तीतिपूर्वाशाकलैः अनुस्मृता । आचार्यग्रहणं पूजार्थं । स्व रितिस्वः । क्रमशास्त्रएवहेतुरुक्तः । इति पूर्वेषु संधानं पूर्वैरिति

अभिक्रमेतोभयतोनुसंहितं त-
तोस्यपश्चात्पदतां प्रदर्शयेत् ।
यथापदंवान्यतरेणसंदध त्त्रिपू-
त्तमेष्वेतदलोपसंभवात् ॥ ३३ ॥

अलोपसंभवदर्शनात् अथवाअभिक्रमंकुर्यादुभयतः पूर्वेणच परेणअनुसंहितं ततः पश्चादस्यपदस्य पदतां प्र-दर्शयेत् । क चित् त्रिपूत्तमेषु निमित्तसंश्रयेषु निमित्तरि-तोः एवमप्यलोपः संभवति । वोरासएतन । एतनमर्यासः । इतनेतोतन । चित्तंभनेन । स्कंभकृत्स्कभीयान् । स्कं-

भनेनेतिस्कंभनेन । योनिमारैक् । आरैगप । परैगिरैक् । यथापदं वान्यतरेण पदेन पूर्वेणापरेण च सह संदधत् क्रमं ब्रूयात् । वीरासएतन । एतनमर्यासः । इतनेतीतन । चित्स्कंभनेन । स्कंभनेनस्कभीयान् । स्कंभनेनेतिस्कंभनेन । योनिमारैक् । आरैगप । एवमप्यलोपः संभवति । द्वाविमौपक्षौ । उभयतोनुसंहितमितिच । यथापदं वान्यतरेणेतिच । पदयोः कोभिप्रायः । अन्नायमाने विकारनिमित्ते अन्यतरयोगेविकारो भवतीति पूर्वस्याभिप्रायः । अन्यतरवचनादन्यतरनिमित्तं भवितुमर्हतीति परस्य एवमेकेवर्णयंति । अपरे पुनः निवृत्तत्वात् निमित्तसंशयाधिकारस्यनिवृत्तेष्वितिप्रकृतानामेवसहेतिकारणोत्थतेषांनिवृत्तेषु तृतीयतांगच्छतियस्यसोषावानित्येवमादिषुवर्णयंति । पस्पन्दचुषः । दत्तुषः क्षणांजंहसः । धनुषद्रुतिधत्तुषः । वरुणोमामहंतां । मामहंतामदितिः । ममहंतामिति ममहंतां । योनिमारैक् । आरैगप । परैगिरैक् । पक्षयोः पूर्वोत्तरयोः अतीत्यतेषां पदतांप्रदर्शयेत् । इत्येवंसिद्धत्वादिदग्रहणमनर्थकं । नानर्थकं । यथापदंवा अन्यतरेणसंदधदित्यपूर्वार्थविधिः । सउक्तोप्यर्थः पुनः कीर्त्यते । पस्पन्दत्तुषः । धत्तुषः क्षणांजंहसः । वरुणोमामहन्ताम् । मामहंतामदितिः । योनिमारैक् । आरैगप । यदवशिष्टं तत्पूर्ववत् द्रष्टव्यम् ।

**अरक्तसंध्येत्यपवाद्यतेपदं पुनस्तदुक्त्वाभ्यवसायपूर्ववत् ॥ ३४ ॥**

चरक्रसंधिषाद्दृत्येतत्पदमपवाद्यते। कस्मात्। परि-ग्रहात्। कस्यहेतोः। बहुक्रमेमध्यगतानि यानि-चेतिपरिग्रहोस्यमाभूदिति। कथंतर्हिवक्तव्यं। पुन-स्तत्पदं उक्ता। कतरत्। आद्दृत्येतत्पूर्वंवत्परेण पदे-नाध्यवसानंकृत्वा क्रमेण। मंद्रमावरेण्य। चर-क्रसंधीतिकस्मात्। चभयथापि।

## तथायहृक्षोपनतेबहुक्रमे क्रमेत-देस्यैकपदानिनिः सृजेत् ॥ ३५ ॥

तथाकथं। यथाआकारस्यपदप्रदर्शनार्थं प्रत्यादा-नमुक्तं। पूर्ववदध्यवसानं। यहृक्षोपनतेबहुक्रमे तस्य ब-हुक्रमस्यैकैकंपदं निःसृजेत्। अपनयखक्ता क्रमेत। क-स्यहेतोर्यथासर्वपदानाः स्वरास्वसार्थंदृष्टाः स्युरिति। आत्वेतानि। अत्र। एत। इतानि। निमित्त-नैमित्तिकप्रसङ्गेन योबहुक्रमः क्रमशास्त्रेषु नाम्नातः सयहृक्षोपनतः। यथाआत्वेतानि इत्यत्रतुइति हाभ्या-मवसानेक्रियमाणेनकारस्यहित्वाभावा त्तदनवसानीयं भवति। अनुनासिकभयात्तृतीयं। दीर्घभावार्थंचतुर्थम्।

## नकारलोपोष्मरभावमानये दपे-तरागांप्रकृतिंपरिग्रहे ॥ ३६ ॥

नकारस्यखलुलोपभावंचऊष्मभावंच। अपेतरा-गांरागवर्जितां प्रकृतिमानयेत्। परिग्रहेक्रियमाणे। क-स्यहेतोः। पदप्रदर्शनार्थं। दृष्टाहिलोपोष्मरभावः। हेप-

दाभिक्रमणोभवंति । तस्मात्स्वांप्रकृतिमानयेत् । लोपभा-
वः । अस्माँअस्माँइत् । अस्मानस्मानित्यस्मान् ऽअ-
स्मान् । ऊष्मभावः । स्वतवाँः पायुः । स्वतवानिति
स्वऽतवान् । नैतदुदाहरणं युक्तं । कथं । स्वतवाँःपायु-
रिति पायुशब्देहि नकारस्य विसर्जनीयसंबन्धः । इदं-
तर्हिउदाहरणं । नूँःपात्रमिति नृऽपात्रम् । विभ्राज-
मानांश्चमसान् । विभ्राजमानानितिविऽभ्राजमानान् ।
अभीशूँरिवसारथिः । अभीशूनिवेत्य अभीशून्ऽइव ।
अतीत्येषांपदतां प्रदर्शयेदित्येवं सिद्धेकिमर्थं नका-
रलोपादीनां संहितानां परिग्रहे पुनर्निवृत्तिरुच्य-
ते । परिग्रहस्योभयो र्वचनयो र्विकारनिवृत्त्यर्थं ।
तेनहि उत्तरस्मिन्नेवस्यात् । नैषदोषः । तेनाप्युभयो-
र्भवतीति ज्ञापकं ब्रूमः । यदयं पुनर्ब्रुवंस्तत्समासमिं-
गयेदिति पूर्वस्मिन्वचने अवग्रहप्रतिषेधार्थं कुर्वंतत्
ज्ञापयति । अन्यत्रोभयोरपिवचनयोः पदतयाप्रदर्शनंभ-
वतीति । एवंचेत् अतीत्यतेषां पदतांप्रदर्शयेत् इत्येवंसिद्धे
नकारस्यलोपोस्वरभावमानयेदित्येवमादीनां नियमा-
र्थमनुक्रमणं । अनुक्रांतानांविकाराणां परिग्रहस्यपू-
र्ववचनेनिवृत्ति र्न भवति । यथा । धनर्चमितिधनऽऋचम् ।
ककुह्मानिति ककुत् ऽमान् । अह्नोभिरित्यहः ऽभिः ।
दशोणिमिति दशऽओणिम् ।

## नतिम् ॥ ३७ ॥

नतिंच प्रकृतिमानयेत् परिग्रहेक्रियमाणे । क-
स्यहेतोः । पदप्रदर्शनार्थं । सुषुमायातम् । सुसुमेति

सुसुम । दुर्हणो । दुर्हनोइतिदुः॒ऽहनो ।

## प्लुतोपाचरितेच ॥ ३८ ॥

प्लुतंचउपाचरितंचप्लुतोपाचरितेएते प्रकृतिमानयेत् परिग्रहेक्रियमाणे । कस्यहेतोः । समानहेतुःपूर्वेणाप्लुतः । मह्नूमह्नूकृणुहि । मह्नुमह्निवितिमह्नुऽमह्नु । उपाचरितः । ज्योतिष्कृदसि । ज्योतिःकृदितिज्योतिःऽकृत् ।

## यत्रचप्रगृह्यमेकीभवतिस्वरोदयम् ॥ ३९ ॥

यत्रयस्मिन्समुदायेस्वरोदयं प्रगृह्यंपदमेकीभावंगच्छति । यथा । स्वचरांतास्तुमेवेइतिप्रकृतिभावेप्रतिषिद्धेतत्रप्रकृतिमानयेत् परिग्रहेक्रियमाणे कस्यहेतोःप्रगृह्यप्रकृतिभावप्रदर्शनार्थं । दंपतीवक्रतुविदा । दंपतीइवेतिदंपतीऽइव ।

## प्रवादिनोदूणाशदूढाशदूलभान् ॥ ४० ॥

प्रवादान्दूळ्यदूणाशदूलभइत्येतांश्चप्रकृतिमानयेत् परिग्रहेक्रियमाणेकस्यहेतोःपदप्रकृतिदर्शनार्थं । दूणाशंसख्यं । दुर्नशमितिदुःऽनशं । जनस्यदूळ्यः । दुर्ध्य इतिदुःऽध्यः । दूलभोरथः । दुर्दभइतिदुःऽदभः ।

## परेष्वघोषेषुचरेफमूष्मणः ॥ ४१ ॥

अघोषेषुचपरेषुऊष्मणःरेफःक्रियते । तंचप्रकृतिमानये-

त् । परिग्रहेक्रियमाणे । कस्माद्धेतोः पदप्रकृतिदर्शनार्थं । काव्येनास्वर्चनाः । स्वस्वनाइतिस्वः । वनाः । धूर्षदंवनर्षदं । धूःसदमितिधूःऽसदं । पूर्पतिंसुशिष्टौ । पूःपतिमितिपूःऽपतिं ।

महाप्रदेशंस्वधितीवचानयेत्॥४२॥

महाप्रदेशंस्वधितीवेत्येतच्च पदंप्रकृतिमानयेत्परिग्रहेक्रियमाणे । महान् अयंप्रदेशः यत्प्रतिकंठंचास्ययग्रहणं सर्वाणिहिशास्त्राणिप्रतिकंठमुपदिश्यंते । सर्वशास्त्रार्थंप्रतिकंठ मुक्तं । प्रतिकंठंचास्यविधि रुक्तोनादोदुंदुःस्वधितीवेति । स्वधितिरिवेति स्वधितिःऽइव । रेफस्यलोपोदीर्घत्वंचपुराप्रतिपादितं । तस्मात्सम्हाप्रदेशः प्रकृतिमानयेत् ।

नुदेच्चशौद्याच्चरसंध्यमागमं ॥४३॥

नुदेत्शौद्याच्चरसंधिंचागमं प्रकृतिमानयेत् क्रियमाणेपरिग्रहे । कस्माद्धेतोःपदप्रकृतिदर्शनार्थं । सुश्चंद्रदस्म । सुचंद्रेतिसुऽचन्द्र । परिष्कृण्वन्ननिष्कृतम् । परिष्कृण्वन्नितिपरिऽकृण्वन् । धूर्षदंवनर्षदं धूःसदमिति धूःऽसदम । वनसदमिति वन । सदम् ।

अभिक्रमेपूर्वविधानमाचरेत्पुनर्भ्रुवंस्तूत्तरकारितंक्रमे । विकारमन्यद्यदतोनुसंहितंतदाचरेदंतगताद्ययोस्तन ॥ ४४ ॥

क्रमविधावभिक्रमेद्विपदस्य प्रथमवचने पूर्वविधानमाचरेत्।
पूर्वप्रयुक्तं विकारं पठेदित्यर्थः यथाप्रगाह्यइन्द्रोइत्यत्रप्रगाः ।
पुनर्मुखन् द्वितीयैकवचने उक्तरकारितमाचरेत् । नपू-
र्वकारितं । नद्वन्द्वो । विकारमन्यदितियदतः पूर्वोक्त-
रकृताविकारादन्यत् यत्पदंस्वयंविकृतं तदनुसंहितमा-
चरेत् । क्रमकालेपिउभयवचनेपियथासंहितंपठेदित्यर्थः ।
अंतगतस्याद्यगस्यस्वयंविकृतस्यापि उभयवचनेपिनाचर-
णं कुर्यात्तयो रुभयवचनस्याभावादितिभावः ।

सकृद्यथासंहितमेषुवाचरेत्पुन-
र्विवक्तन्पदमप्यसंदधत् । परि-
ग्रहेसंधिषुकारणान्वयात् ॥ ४५ ॥

अथच सकृद्यथा संहितमेषुचाचरेत् । एषु कतमेषु नकारलोपोष्मभावमानयेदिति एवमादिषु । पुनर्द्वितीयवचनंविवक्तन् वक्तापदमविक्रियते । असंदधत् संधिमकुर्वन्परिग्रहेक्रियमाणे । कस्यहेतोः संधिषुकारणान्वयात् एषुह्निकारलोपादिषुसंधिषु यस्मिन्स्रो नकारलोपादयोविहिता स्तत्कारणमन्वेतिपरिग्रहस्यपूर्ववचने । श्येनाँ इवेतिश्वेतान्ऽइव । विश्वश्चन्द्रा अमित्रहन् । विश्वश्चन्द्राइतिविश्वऽश्चन्द्राः ।

अविक्रमं द्वाऽष्म सुचोष्मसंधिषु ॥४६॥

अविक्रममेवकुर्यात् वक्ता । द्वाऽष्मसुऊष्मसंधिषुपरिग्रहेक्रियमाणे । किमर्थमिदमुच्यते । इन्द्राग्निभ्यांवरीः ।

स्वर्षातेतिच । नतेः रेफस्यचनिवृत्तौ कृतायां पुनर्विस-
र्जनीयस्यतमेवोष्माणमूष्मणीति नित्यविधिंबाधित्वा-
ऽघमणिचानत इतिविभाषाप्राप्नोति । तत्रव्यापत्तिरेवे-
ष्यतेनविक्रमः । एवमेवार्थं मिदमुच्यते । निष्षिध्वरीस्ते ।
निःसिध्वरीरितिनिः ऽसिध्वरीः । स्वर्षातायत् । स्वः
सातेतिस्वः ऽसाता । दूराध्मस्वितिकिं । दिवः पृथिव्यो-
रित्यत्राप्युपाचरितस्य निवृत्तौकृतायां प्रथमोत्तमवर्गी
येस्पर्शेवेति व्यापत्तिरेवस्यात् । अविक्रममिति परिग्रहे-
विक्रमस्य प्रतिषेधात् । स्यान्मतं अव्यापत्तिः काख-
परेष्वृत्तिरिति उक्तत्वान्नभविष्यतीति । तच्चन प-
रिग्रहादन्यत्रसावकाशात्तस्य ।

समानकालावसमानकारणा व-
नंतरौवायदिसंनिगच्छतः । प-
दस्यदोषावथहेत्वसंग्रहेनियुक्त-
माध्यान्यतरेणलुप्यते ॥ ४७ ॥

समानकालौएककालौ असमानकारणौ नानानिमि-
त्तौ अनंतरौवा अव्यवहितौनिमित्ताद्यवहितौ वा यत्रसं-
निगच्छतः संनिहितौभवतः । पदस्यदोषौ विकारौ-
कार्यौवित्यर्थः । अथास्यामवस्थायां हेत्वसंग्रहेवक्रमेण
निमित्तापरिग्रहेसति । नियुक्तंनियोगतः आर्षीं संहि-
ताअन्यतरेणवचनेन लुप्यते । पूर्वेणापरेणवा । अत्र-
कुत्रयत्रप्रनिमित्तंणत्वंउदात्तनिमित्तं अनुदात्तस्यस्वरित-

स्वंचोत्तरेणास्य प्रत्यादाने क्रियमाणे लुप्यते। नद्ंदो। व्यवहितेयक्राएणां इत्यत्र रेफनिमित्तंणत्वमुदात्तनिमित्तमनुदात्तस्यस्वरितत्वं तदुत्तरेणप्रत्यादाने क्रियमाणेच-लुप्यते एवंपौपयत्।

## मकारलोपेविकृतस्वरोपधेतृती-यभावेप्रथमस्यचध्रुवं ॥ ४८ ॥

मकारलोपे विकृतस्वरोपधेसति प्रथमस्यतृतीयभा-वेच। बहुक्रमेर्थक्रियमाणे ध्रुवमार्षी लुप्यते। एरि-णांति। इत्यत्रचैकादेशनिमित्तंणत्वं उदात्तत्वंच तदुत्त-रेणप्रत्यादाने क्रियमाणे लुप्यते ईरिणांति। प्रथम-स्यतृतीयभावे। इन्द्रस्यत्रिष्टुब्विहेत्यत्रपकारस्यपरनि-मित्तं तृतीयत्वंतत्पूर्वेणानुवचनेनलुप्यतेइन्द्रस्यत्रिष्टुबिहभागो च्छन्दः।

## विपर्ययोवेतरथाभ्युपेयुषां ॥ ४९ ॥

अथवा बहुक्रमाद्दृतेपि प्रथमस्यतृतीयभावे विपर्ययः। आस्यविपर्ययः। लोपइति प्रकृतं अलोपस्तस्यविपर्ययः। इतरथाभ्युपेयुषां। कथं।"तस्मादन्यमवसाने तृतीयंगा-र्ग्यस्पर्शमितिगार्ग्यमतं येभ्युपगच्छंति। तेषांइंद्रस्यत्रिष्टुप्

## अथोभयेषा मनुनासिकोदये ॥ ५० ॥

अथाप्यार्षी लुप्यतएव। अनुनासिकोदये प्रथमे-प्रति उभयेषां गार्ग्यमतं येभ्युपगच्छंति येषशाकटायन-

मत मभ्युपगच्छंति । त्रिककुभ्निवर्तदित्यत्रपकारस्यपरनि-
मित्तंमत्वं तत्पूर्वेणसहवचनेनलुप्यते । सप्रवर्गोत्रिककुप् ।

**अथोनते नोपहिते नुनासिके ॥५१॥**

अथोनते नोपहिते अनुनासिकेसति परेणसह
बहुक्रमेऽक्रियमाणे णार्णी लुप्यते । नोषुणइ-
त्यत्रषत्वनिमित्तं णत्वं तदुत्तरेणसहप्रत्यादानेक्रियमाणे
लुप्यते । नः परापरा ।

**तथाक्षरस्य क्रमएकपातिनः ॥५२॥**

अक्षरस्यक्रमः द्विर्वचनंबहुक्रमे अक्रियमाणेउभयोर्व-
चनयोर्लुप्यते एकाक्षरस्यपदस्य । मुंचताविं । व्यंहः ।

**नचात्वपूर्वःस्वरितेनसंहितां ल-**
**भेततस्मिन्नियतस्वरोदये ॥५३॥**

अत्रएकपातिनः क्रमे तस्मादेकपातिनः पूर्वस्वरः
स्वरितेनसंहितां नलभते । तस्मिन्नियतस्वरोदयेसति ।
इंसिनि । न्य१विषां ।

**यदाचगच्छत्यनुदात्तमक्षरं व-**
**शंपदादेरुदयस्यतेनच ॥ ५४ ॥**

यदाच अनुदात्तमक्षरं उदात्तस्यपदादे वंशंगच्छ-
ति । स्वरितंच । उदात्तवत्येकीभावउदात्तं सं-
ध्यक्षरमिति तेनोदात्तेनैकीभावे तदाबहुक्रमेऽक्रि-

थमाखो भुवमाषीलुप्यते । आतेवइत्यत्रते इत्यनुदात्तस्य अवइत्युत्तरेणैकादेशे उदात्तत्वम् । तत्पूर्वेणासहवचने लुप्यते । आते । त्वांसोमपवमानं स्वाध्यो-न्वित्यत्र स्वाध्योइतिस्वरितस्योदात्तवत्येकीभाव इत्युत्तरेणैकादेशे उदात्तत्वं तत्पूर्वेणासहपठने लुप्यते । पवमानंस्वाध्यायोनु ।

## उदात्तपूर्वेनियतस्वरोदये परोविलोपोनियतोयदावरः ॥ ५५ ॥

उदात्तपूर्वएकादेशे , नियतस्वरोदयेमति परस्परेणासह वचनेइत्यर्थः । आध्याविलोपोभवतीत्यनियतो यदावरः अतउदात्तः यदापरोभवत्यनुदात्तश्चपूर्वः तदाश्वरः पूर्वेणासहवचनेइत्यर्थः । आध्योविलोपो भवति । यद्येवंपूर्वस्यायं शेषः । इहकस्मादुच्यते । उदात्तपूर्वेप्येकादेशे इकारयोस्प्रश्लेष एवमादौ शाकलेविधाने पूर्वेणापिसहवचने आध्याविलोपोभवति । इतिख्यापनार्थंच उदात्तपूर्वे । एंद्रमानसिमिलत्र आकारेणामहैकादेशनिमित्तमिकारस्योदात्तत्वं तस्यपरेणासह प्रत्यादानेविलोपः । इंद्रसानसिं । शाकलविधानस्योदाहरणं तथातेवंत्वित्यत्रतेइत्युदात्तस्या वंत्वित्यनुदात्तेनसहैकादेशनिमित्तं स्वरितत्वं तस्यपूर्वेणासहवचने विलोपः । अवंतुतेइत्यनियतो यदावरइत्येतस्य पूर्वसूत्रेनिर्दिष्टमेवोदाहरणं ।

## स्वरैकदेशंस्वरितस्यचोत्तरं यदा-

निहन्यादनिमित्तमक्षरं ॥ ५६ ॥

स्वरितस्वरस्योत्तरमनुदात्तमेकदेशं तूदात्तस्वरितपरं संतं निहन्यात्स्वरः । आग्यो२ रथमिति । तदक्षरं यदापूर्वेण सह्यनिमित्तं ब्रूयात् । आर्षीलुप्यते । सो- तारओग्यो: ।

उदात्तपूर्वोप्यनुदात्तसंगमो य- दास्वरौहौ लभतेपिवावह्नन् ॥ ५७॥

उदात्तपूर्वः स्वरित अपूर्वोपि अनुदात्तानामक्षरा- णां समवायः यदाह्नौलभते अपिबह्नन् स्वरांस्तदाव- ह्रुक्रमे अक्रियमाणे आर्षी लुप्यते । उतदेवाअव- हितमित्यत्र देवाइत्यनुदात्तसंगमस्य पूर्वनिमित्तमाद्यस्य स्वरितत्वं तदुत्तरेणासहप्रत्वादानेक्रियमाणे लुप्यते । तथा परनिमित्तमंतस्यानुदात्तत्वं । तत्पूर्वेणासहवच- ने लुप्यते । उतदेवाः । देवाअवहितं । स्वरव- ह्रुत्वं पुरुपुरुभुजायदित्यत्र पूर्वापायेस्वरितोलुप्यते । स्व- रितापायेप्रचयाः । पुरुभुजायत् । उत्तरापाये चा- नुदात्तः । पुरुपुरुभुजा । स्वरितपूर्वः । वदताव- दत्राः । इत्यत्रपूर्वापाये प्रचयस्वरौ लुप्येते । वाचंवद- तेत्यत्र उत्तरापायेनुदात्तः । यथाचह्रुक्रमेअक्रियमाणे स मानकालावसमानकारणावित्येवमादिभिर्विहितेषु आ- र्षीलुप्यते । तस्मादह्रुक्रममिच्छंत्येकेषाचार्याः ।

यथाप्रक्रमेस्वरवर्णसंहिते तयो-

स्तयोरक्षरवर्णयोस्तथा । अद-
र्शनेनार्ष्यविलोपउच्यते क्रमेष्व-
नार्षंब्रुवतेपरेस्वरं ॥ ५८ ॥

यथा येनप्रकारेण प्रक्लृप्तेविहिते स्वरसंहितावर्णसंहि-
ताचतयोरक्षरवर्णयो रक्षरस्यस्वरस्य संहिता। वर्णानांच
संहिता वर्णसंहिता। तयोः स्वरवर्णसंहितयोरदर्शनेसति
उच्यते अनार्षऽविलोपः। नआर्ष्यविलोपः अनार्ष्यविलोपः।
आर्षीविलोपइत्यर्थः। कोस्यविग्रहः । विलोपःविनाशः
तस्याऽभावोऽविलोपः।, आर्ष्योअविलोपः आर्ष्याविलो-
पः। नआर्ष्यविलोपः अनार्ष्यविलोपः । प्रणइत्यस्मिन्व-
चने णत्वस्वरितयोर्दर्शनादपि अनार्ष्यलोपोभवतीति-
यद्यपिणत्वस्वरितौ तत्रदृष्टौ। नइंद्रो। इंद्रामहे । इ-
त्यत्रइंद्रोइत्येतस्य प्रचयस्वरस्य अभावात् लोपएव।
नैषदोषः। क्रमेषुह्यपरे आचार्याःस्वरमनार्षंब्रुवते।

अदृष्टमार्ष्यांयदिदृश्यतेक्रमे वि-
लोपमेवं ब्रुवतेपरेतथा । सका-
रणान्यार्ष्यविलोपविक्रमः क्रमे-
णायुक्तोपिबहूनिसंदधत् ॥ ५९ ॥

यद्यप्यन्यतरस्मिन्वचने आर्षीदृश्यते पुनरदृष्टसंहि-
तायां यदिक्रमेदृश्यते एवमस्यामवस्थाया मपरे आ-
चार्याविलोपं मन्यंते। अथादसतः प्रादुर्भावात्। अ-

इंद्रो । तथाक्रयं । यथा समानकालावसमानकारणा-
विति विहितेषु सक्रमः क्रः आर्ष्यविलोपविक्रमः आर्षा-
विलोपहेतुःक्रमेणायुक्तः तंप्रलोपंप्रतिकारणानिमित्तानि
बहून्यपिपदानि संदधत्पठति । इमंमेगंगेयमुनेसरस्व-
तिशुतुद्रिस्तोमं ।

पदंपदांतश्चयदानगच्छतिस्वरा
वसानंसतुयोलयुज्यते । तदानु-
रूपंलभतेनिराकृतं, नचेन्निरा-
होपनिवृत्यतत्पदं ॥ ६० ॥

पदं यदास्वरं नगच्छति पदांतश्च यदावसानं नग-
च्छति तदानुरूपंलभते । निराकृतंविस्मृतमन्येनकेन-
चिदाच्छादितमित्यर्थः । पदकाले स्वरकृतंवर्णकृतं चोभयं-
रूपमिति । अस्यामवस्थायां सआर्षीविलोपेन यस्त्वव-
युज्यते क्रमकःयउपनिवृत्य तत्पदेनचेद्ब्रवीति । स्वरकृ-
तं । तेषदन् । तद्भितिते । अवपरिग्रहात्ते उदात्तकृतंरूपं
नलभते । वर्णकृतं । नूइत्या । न्विति नु । अवकृष्यमाणं
रूपंलभते ।

स्थितस्थितोपस्थितयोश्चदृश्यते
पदंयथावद्वायवदृध्युपस्थिते ।
क्वचित्स्थितौचैवमतोधिप्राक-
लाः क्रमेस्थितोपस्थितमाचरं

त्युत ॥ ६१ ॥

यदुक्तमधस्तात् स्थितोपस्थितानां मन्यते एमंपद-प्रदर्शनमाचरंतीति तत्प्रत्ययवत् । अन्यूनवदित्यर्थः । आरैक्पंथां । अरैगिति । एवमुपस्थितेसति-पदांतस्य पदद्दष्टं स्वरितत्वं तत्रनदृश्यतेतस्मात्प्रत्ययव-दित्युच्यते । तथामोषूणा इत्यत्रोपस्थित्युक्ते ऋस्वांतं नदृश्यते । क्वचित्स्थितावप्येवं यथोपस्थिते तथाप्य-यवदृश्यते । प्रातःसोमं । प्रातरित्यत्रपदेदृष्टोरेफःस-नदृश्यते । अतोप्यस्माद्धेतोःशाकलाःक्रमेवर्तमानेस्थि-तोपस्थितमेवाचरंति । अरैगित्यरैक् । स्थितिसु । प्रा-तरितिप्रातः ।

क्रमेतसर्वाणिपदानिनिब्रुवन्ति-तिस्मरंति ॥ ६२ ॥

क्रमेणाक्रमंब्रूयात्क्रमकःसर्वाणि पदान्येकैकंपदंनिब्रु-यन् । द्विक्रमेवत्रिक्रमेवा इतिस्मरंति । एवमिच्छंत्येके-आचार्याः । कस्माद्धेतोः एवंसुखतरमाप्नो भविलो-पोभवतीति । आमंद्रं । एथा । मंद्रमावरेण्यं । मंद्रमितिमंद्रं । आवरेण्यं । एत्या । एवंसर्वत्र ।

आचरितंतु नोत्क्रमेत् । क्रमस्य वर्त्मस्मृतिसंभवौ ब्रुवन् समा-धिमस्यान्वितराणि कीर्त्तयेत् ॥ ६३ ॥

पार्षदं यद्वाचरंति पूर्वशास्त्रविहितं । क्रमोद्वाध्याभभिक्रम्येत्येवमादिषु तुनोत्क्रमेत् । नान्यथाकुर्यादित्यर्थः । क्रमस्यवत्म हतंस्मृतिसंभवौ हेतूब्रुवन्वक्ता स्मृतिशास्त्रे दर्शनादिसंभवसुपपत्तिरित्यनर्थांतरं । अस्यक्रमस्य समाधिंसंपद्मन्वितराणि । अनुगम्य अनुलक्ष्यच इतराणिकतराणि क्रमहेतौ शासनानिकीर्त्तयेत् । किमुक्तंभवति । पूर्वस्मिन्क्रमशास्त्रे यासंपदुक्ता तस्याअविरोधेन हेतूक्तानिकुर्यादित्यर्थः । अग्निमीळे । ईळेपुरोहितं । हेतौपरिगृह्यमाणे अत्रापिविक्रमः प्राप्नोतिअदृष्टमाषर्गं यथादृश्यतेक्रमइत्यपरे वर्णयन्ति । समाधिमस्यान्वितराणि कीर्त्तयेत् । अस्यक्रमस्य समाधिमावमितराणि क्रमहेतौशासनानि कीर्त्तयेत् । किमुक्तंभवति । पूर्वस्मिन्क्रमशास्त्रे यासंपदुक्ता तस्या अविरोधेनहेतावुक्तानि कुर्यादित्यर्थः) यथा अदृष्टवर्णप्रथमे प्रदर्शनंयथा वप्लुतादिप्रभृतीनीत्येवमादीनि ।

## यथोपदिष्टंक्रमशास्त्रमादितः पुनःपृथक्त्वैर्विविधैर्नसाधुवत् ॥६४॥

यथोपदिष्टंक्रमशास्त्रं आदित स्तदेवसाधुरध्येतव्यः । पुनः पृथक्त्वैर्विविधै र्यदुक्तं तन्नसाधुवद्विद्यात् । किंकारणं । सर्वथाभिक्रमेक्रियमाणे स्वंस्वंपदांतरमाश्रित्य संहितायाअविलोप इत्युच्यते ।

## इतिप्रवाभ्रव्यउवाचचक्रमं क्र-

मप्रवक्ताप्रथमंप्रशंसच ॥ ६५ ॥

इत्येवंवाभव्यः। वभ्रुपुत्रः भगवान्पंचालः क्रमस्य-प्रवक्ताप्रशिषेरभवत् क्रमंप्रथमं प्रोवाच। प्रशंशसच। हि-ताय। कथंज्ञायते हितायेति। प्रथममधिगम्य क्रमक्राः कृतसंक्रमाइव मार्गमाक्रमंतःसुखमाक्रमंते। संशयदु-र्गाणिक्रमंते। भवतिचात्रश्लोकः। "क्रमाभिगमभिन्ना-नि दुर्गाणिसुमहान्त्यपि। विलीयंतेक्रभिन्नानि तमां-सीवनिशात्ययेइति।

क्रमेणानार्थः पदसंहिताविदः पु-राप्रसिद्धाश्रयपूर्वसिद्धिभिः। अ-कृत्स्नसिद्धश्चनचान्यसाधकोन-चोदयापायकरो नचश्रुतः ॥ ६६ ॥

योयं विहितोविधिः क्रमोद्वाभ्यामभिक्रम्येति तेननार्थः। कस्यहेतोः पदसंहिताविदः पदानिविदुषः संहिता चोत्तरकालं क्रमविधिरारभ्यते पुरा प्रसिद्धाश्रयपूर्वसिद्धिभिः हेतोरुक्तीया। पुराऽप्रसिद्धः। एवंचास्य क्रमस्य पदसंहिता पूर्वमप्रसिद्धः। आश्रयपूर्वसिद्धिः। पदसंहितं क्रमस्याश्रय स्तत्पूर्विका स्वास्यसिद्धयो भवंति। पुराचेन्न-विधीयते। नचान्यतो विधीयते। तस्मात्पदसंहिता दनन्योयं क्रमोभवति। अविशेषेहि विशेषारंभोनर्थकः। अकृत्स्नसिद्धश्च। नकृत्स्नसिद्धः क्रमोयद्यपिचास्यविशेषाः संति संहितायाः अविलोपार्थः पदसंहिताश्रयत्वात्।

अकृत्स्नसिद्ध इत्युच्यते । नचान्यसाधक इति नायं क्रमः अन्यशास्त्राश्रयाद्विशेषान् साधयति । अकृत्स्नसिद्धस्य ह्यन्यसाधनं नविद्यते । नचोदयापायकर इति । नचायंक्रमो अध्येतुरभ्युदयकरः । नचापायकरः । नचश्रुतः । नचायंक्रमोष्टानां ब्राह्मणपथाना मन्यतमस्मिन् ब्राह्मणपथेश्रूयते । यथाऋषिच्छंदो दैवतयुक्तः स्वाध्याययज्ञकर्मसु संहिताविधिः यथाचनामाख्यातोपसर्गनिपाताः पदमितिपदविधिः एभिः कारणैः क्रमेणानार्थ इत्युच्यते । भवतिचात्रश्लोकः । यदिविषयगतोनाप्ययज्ञनयतिगुणान् कृत्स्नंखलुसमभिकालंपर्षेदिवंवदेदिति ।

असिध्यतःसिद्धि विपर्ययोयदि
प्रसिध्यतोसिद्धिविपर्ययस्तथा॥६७॥

यदुक्तं पदसंहितापूर्वोयं क्रमोन सिध्यति तस्मादस्यप्रसिद्धि विपर्यय इति । तन्नास्ति कस्यहेतोः । प्रसिद्धतः असिद्धत्वस्य विपर्यय स्तथाभविष्यति । प्रसिद्धं हि पदसंहितामाश्रित्य यद्ययं क्रमोवर्तते ततः प्रसिद्ध एव । अन्यथायं पदसंहिताक्रमोभवतीति प्रतिज्ञापूर्वोक्ता । एकदेशंहि साधयत्येकदेशी ।

सङ्घापवादेषुच सत्सुनः क्रमः
प्रदेशशास्त्रेषु भवत्यनर्थकः ॥६८॥

अपवादनिर्देत्यर्थः । सङ्घापवादेषु प्रदेशशास्त्रेषु अन्तु यैः अर्थाः प्रदिश्यंते तानिप्रदेशशास्त्राणियथासां-

श्वयोग शास्त्राणां। तेष्वपि अन्यस्मिन्नन्यस्यापवादो दृश्यते। तेषु शास्त्रेषु सत्सु विद्यमानेष्वित्यर्थः। नायं क्रमोनर्थको भवितुमर्हति।

विपर्ययाच्छास्त्रसमाधिदर्शना
त्पुराप्रसिद्धे रुभयोरनाश्रयात्।
समभ्युपेयाद्बहुभिश्चसाधुभिः श्रु-
तेश्च सन्मानकरः क्रमोर्थवान्॥६९॥

विपर्ययादिति क्रमेणानार्थः पदसंहिताविद् इत्यु-क्ताप्रसिध्यतः असिद्धिविपर्ययस्तथेत्युक्तं सविपर्ययः। असिद्धा अपिभावाः सिद्धानाश्रित्यसिद्धा भवंति। शास्त्र-समाधिदर्शनाच्चायंक्रमोर्थवान्भवति। शास्त्रसमाधि द-र्शनादितिक्रमशास्त्रेहि अनेकविधिविशेषाः संहिता-पदादिपदांतानुग्रहार्थाविधीयंते। यथैवानवसानीया-नीति निमित्तसंशयानीत्येवमादयः। पुराप्रसिद्धेश्चायं क्रमोर्थवा न्भवति। पुराप्रसिद्धेरिति कथंहिनामपुरा अप्रसिद्धः सन् अनवसानीयादीन् विशेषानारभेत्। उ-भयोरनाश्रयात्। उभेअपिपदसंहिते अनाश्रित्यक्रमो वर्तते तस्मादप्यर्थवान् क्रमः कथमनाश्रयादित्युच्यते। व्यतिरिक्तेहि पदसंहिते। विशेषारंभश्च क्रमशास्त्रेदृ-श्यते। यथैवावगृह्याणां परिग्रहणं समभ्युपेयाद्बहुभि-श्चसाधुभिः पूर्वाचार्यैः समभ्युपगमनाच्चायं क्रमोऽर्थ-वान् भवितुमर्हति। कथंहिनामानर्थकं संतंबहवः सा-

धवः परिगृह्णीयुः । श्रुतेश्च सन्मानकारः क्रमोर्थवान् । श्रुतेश्चायं दृष्टः क्रमः । द्विपदानांगिरसः प्रोचुः । विपदेनवालखिल्या इत्येभिः कारणै रयंक्रमोर्थवान् भवति। भवतिचात्रसिद्धोयं । श्रुतितश्चलक्षितोनुमितश्चविविधेगुणैर्विशेषैवितस्था संधिंनयातिच पदविषये पुनरपिच विकृतिसुचितां न.जहाति ।

## ऋतेनचद्वैपदसंहितास्वरौ प्रसिध्यतः पारणकर्मचोत्तमं क्रमात् ॥ ७० ॥

इतश्चायंक्रमोर्थवान् भवति । क्रमादृतेद्वैपदसंहिता चद्वैपदस्वरश्च नसिध्यति । द्विपदेहिसिद्ध उत्तरारंभः शक्यतेकर्तुं । पादार्द्धर्चऋचवसूक्तसिध्यर्थं । पारणकर्मचोत्तममिति भगवतापंचालेनस्थापितानां पारायणकर्मणां क्रमपारायणमुत्तमं परंपरयामहिम्नाच । भवति चात्रश्लोकः । प्रगाथेपुनरादानं दृष्ट्वायत्नविधौमुनिः । अथर्ववंतुंक्रमंब्रूयाद्दवतायाश्चशास्त्रतः । क्रमोर्थवान् भवति ।

## अतोप्यृग्यजुषांचवृंहणं पदैःस्वरैश्चाध्ययनं त्रिभिः ॥ ७१ ॥

यतोपि यस्मादपिहेतोः क्रमोर्थवान् भवति । क्रमात् ऋचांयजुषांच धारणंक्रियते द्विपदेन । यथापदाध्ययनेनचोदात्तानुदात्तस्वरितैः ऋग्यजुषांधारणंक्रियते तथाध्ययनंत्रिभि रन्योन्यं वर्त्तते। संहितापदक्रमै स्तस्माचचा-

यं क्रमोऽर्थवान् भवति । भवति चात्र श्लोकः । शरदुज्वलो वितिमिरो विभाति भगवान् यथांशुमान् । सत्यवचनवित्तमः क्रमकः क्रमते हि संशयांस्तमस्तथात्मवान् इति ।

इति श्रीपार्षदव्याख्याया मानंदपुरवास्तव्य वज्रटपुत्रोव्वटकृते प्रातिशाख्यभाष्ये क्रमहेतुकमेकादशं पटलम् । ४

ऊष्मांतस्थसोष्मचकारवर्गानांतं यांत्यन्यत्र विसर्जनीयात् ॥ १ ॥

ऊष्माणश्च अंतस्थाश्च ऋकारश्च सोष्माणश्च चकारवर्गश्चेत्येते सप्तविंशतिवर्णाः पदांतं नगच्छंति । किमविशेषेणेत्याह । विसर्जनीयं वर्जयित्वा । विसर्जनीयस्तु ऊष्मसु मध्ये तिष्ठति तथापि पदांतं गच्छति । अग्निः । वायुः । परिशेषादन्ये गच्छंति । तानुदाहरिष्यामः । एव । तथा । नृभ्यः । अति । देवी । वसु । बाहू । अग्ने । वायो । वै । तौ । वाक् । प्रवाङ् । विट् । वृषण्वान् । यत् । देवान् । त्रिष्टुप् । इंद्रम् ।

ऋकारलकारौ परमर्धमूष्मणां

## नादितकारादवरेच सप्त ॥ २ ॥

ऋकारःलृकारः ऊष्मणांचोत्तरभागोविसर्जनीयादिरुच्यते। तकाराच्च पूर्वेभकारादयः सप्त। एतेत्रयोदशवर्णाः पदादिंनगच्छंति। पारिशेष्यादुदाहरिष्यामः। अथ। आत्। ऋतं। इदं। ईषत्। उत। ऊचुः। एषः। ओषधीः। ऐत्। औचन्। कः। खनमानः। गंगे। घृतं। चित्रं। छाया। जगत्। तं। प्रत्वऽथा। देवं। धनं। नु। परि। फलिनीः। बलं। भयं। मम। या। रत्नं। लक्ष्मीः। वायुः। हरिण्या। शतं। षट्। सः।

## नान्योन्येनमध्यमाः स्पर्शवर्गाः संयुज्यंते ॥ ३ ॥

मध्यमाये त्रयस्पर्शवर्गा स्तेऽन्योन्येनसह नसंयुज्यंते। स्ववर्गीयैस्तु संयुज्यंते। अन्यैश्च। यत्त नौः। जज्ञतोरिव। सुष्ठु। दूळ्यः। मंडूकः। रथ्येव। अध्वनयत्। इन्द्रो। गधितिग्ध। वभ्वः। अर्चंति। वज्रं। उष्ट्रानां। वर्तनीः। चाध्वं। श्चोतंति। स्तौति। मध्यमाइतिकिं। वावपतंगाय धीयते। अन्यैश्च संयुज्यते।

## न लकारेणारेफः ॥ ४ ॥

लकारेण सहरेफो न संयुज्यते। पर्यंणां। अर्चंति। सर्पिः। बर्हिः। वर्षं।

## स्पर्शैर्वकारो नपरै रनुत्तमैः ॥ ५ ॥

अनुत्तमैःस्पर्शैः परैर्वकारो नसंयुज्यते । पूर्वैस्तु संयुज्यते । क्व । ज्वलंती । नवग्वाः । अनुत्वं । अनुत्तमैरितिकिं । दधिक्राव्णाः । सुतपाव्ने ।

## तथातेषांघोषिणः सर्वथोष्मभिः ॥६॥

तथैवतेषां स्पर्शानां उत्तमादन्येघोषिणः सर्वथाऊष्मभिर्नसंयुज्यंते । अघोषास्तु संयुज्यंते । स्कंभथुः । इवोतंति । स्थ । स्पद् । अनुत्तमैरितिकिं । यक्ष्मः । पृश्निः । विष्णुः । तथातेषामिति कस्मात् । ह्वयामि । स्वःस्यात् । ऊष्मभिरितिकिं । तस्यदर्वंतोरंहयंत ।

## नांत्यांतस्थानं प्रथमोष्मभिःपरैः ॥७॥

अंत्या अंतस्थाः प्रथमाचांतस्था ऊष्मभिःपरै र्नसंयुज्येते । पूर्वैस्तुसंयुज्येते । श्यावाश्वस्य सुन्वतः । स्वाह्याग्नये वरुणाय । अंत्याप्रथमे इतिकिं । सदर्शि । वनस्पते शतवल्शः ।

## नरेफो रेफेण ॥ ८ ॥

रेफोरेफेणसह नसंयुज्यते । अन्यैस्तु संयुज्यते । अभावान्नो दाहृतं । अर्यमा ।

## नसोष्मणोष्मवान् ॥ ९ ॥

सोष्मणासह ऊष्मवान्नसंयुज्यते । तदधीनात्वपिठितं । असत्वात् ।

नस्पर्शैरूष्माप्रथमः परःसन् ॥१०॥

स्पर्शैःसह प्रथमोष्मापरः सन्नसंयुज्यते । पूर्वैस्तुसंयुज्यते । पूर्वाह्णे । मन्द्रान्द्रानः । स्पर्शैरितिकिं । बर्हिः ।

नानुत्तमैः सचसोष्माचपूर्वौ ॥११॥

अनुत्तमैःस्पर्शैः सचह्कारः सोष्माचपूर्वौसंतौ नसंयुज्येते । उत्तमैस्तु संयुज्येते । ब्रह्म । अह्ना । इवघ्नः अमथ्नात् । दभ्रा । गृभ्णामि ।

नानुत्तमाघोषिणोघोषिभिःसह स्पर्शैःस्पर्शाः ॥ १२ ॥

अनुत्तमाघोषिणः स्पर्शाःअघोषैःस्पर्शैः पूर्वैःपरैश्चसह नसंयुज्यंते । उत्तमास्तुसंयुज्यंते । पलिक्नीः । अमथ्नात् । अप्नस्वतीमश्विना । परोदाह्वरणानि । यद्दुङ्क्ष्वयंति । पन्याम् ।

नोत्तमाऊष्मभिःपरैः ॥ १३ ॥

उत्तमाःस्पर्शाः ऊष्मभिःपरैःसह नसंयुज्यंते । पूर्वैस्तु संयुज्यंते । ब्रह्म । विष्णुःस्म । पृश्निः । उत्तमाइतिकिं । अप्सु । रष्णी ।

लकारस्पर्शैर्नयकारउत्तरैः ॥१४॥

लकारेणस्पर्शैश्चोत्तरैर्यकारो नयुज्यते । पूर्वैस्तुयु-

ज्यते । विवाल्यं । वृक्णः । सत्यं । मारुष्वा । लकारस्पर्शै-
रितिकिं । वृंद्रशारूवोः ।

## ऊष्मणोन्योन्येनच न ॥ १५ ॥

ऊष्माणोन्योन्येनच सह नसंयुज्यंते । स्वैस्तुसंयुज्यंते ।
शुनश्शेपः । निष्षिष्वरीः । निष्पयी । शास्मि ।

## ऋक्पदेष्विदं ॥ १६ ॥

यदिदमस्मिन्पटले विधानमुक्तंतत्ऋक्षुपदमध्येएव-
भवति पदसंधौ नभवतीति । यदुक्तं नान्योन्येन मध्य-
माःस्पर्शवर्गा इतिसंधौ नभवति । चषद्रे । उपमावङ्-
ह्वाहा । तथा नलकारेण रेफइतिसंधौनभवति । सुमदंः
शुर्ल्लामीः । तथानोत्तमाऊष्मभिः परैरितिनभवति ।
देवान्हुवे । दध्यङ्ह । अर्वाङ्छ्वतमं । दशस्यन्षष्टिं ।
प्रत्यङ्सविश्वा । शर्मन्स्याम । इदमपिपद्यांतरमिति ।
उदाहरणंभवति ।

## नामाख्यातमुपसर्गो निपातश्च-त्वार्याहुः पदजातानिशाब्दाः ॥१७॥

नाम । आख्यातं । उपसर्गः निपातः इतिचत्वारि-
शब्दविदआहुः ।

## तन्नामयेनाभिदधाति सत्वं ॥१८॥

तन्नामेत्युच्यते येनशब्देनाभिदधाति वक्ता सत्वं
द्रव्यमित्यर्थः अश्वइंद्रवरुण मित्रदेवाः ।

तदाख्यातं येनभावं सधातु ॥१९॥

तदाख्यातमित्युच्यते येनशब्देन सः धातुना अभिधानिवक्ता । भावं क्रियामित्यर्थः । इतंनुदेथां भिश्रिणीतमविद्याः ।

प्राभ्यापरानिर्दुरनुव्युपापसंपरि-
प्रतिन्यत्यधिसूद्वापि । उपस-
र्गाविंशति रर्थवाचकाः, सहेत-
राभ्यां ॥ २० ॥

प्र । अभि । आ । परा । निः दुः अनु । वि । उप । अप । सं । परि । प्रति । नि । अति । अधि । सु । उत् । अव । अपि । इत्येतेविंशतिरुपसर्गाः अर्थवाचकाः, अर्थवाचिनः सहेतराभ्यां नामाख्याताभ्यां । प्र । प्रयाभिजातवेदसः । प्रदेवंदेव्याधिया । अभि । अभिष्टनेते अद्रिवः । अभिव्यामरक्षसः । आ । आयंतारं महिस्थिरं । मरुद्भिरान आगहि । परा । परायतीं मातरमन्वचष्ट । पराशृणीहितपसा यातुधानान् । निः त्वष्टुर्देवस्य निष्कृतं । तिरश्चतापार्श्वान्निर्गमाणि । दुः । पुराग्नेदुरितेभ्यः । दुर्नियंतुः परिप्रीतः । अनु । अनुनुस्यारयष्टकाभिरूतिभिः तन्नक्षभुचानरामनुष्यात् । वि । विराट्संम्राट् अपिततीत । त्रिपाट्क्कुद्री । उप । यस्येयन्न उपस्तुता । इंद्रमग्निं सुपस्तुहि । अस्यप्राणादपानती । अपेहिमन सस्पते । सं । प्रसम्राजंचर्षणीनां । सम्रा-

जोरवमाहयो। परि। विद्युर्विषाणां परिपानं। वाजी-
सम्परिणीयते। प्रति। प्रतियंतंचिदेनसः। प्रतिकीतवः
प्रथमाः। नि। अपोनिषिंचन्नसुरः पितानः महांतंको-
शमुदचानिषिंच। अति। अतिविद्धाविथुरेण। अति
क्रमिष्टं जुरतं। अधि। ममराष्ट्रस्याधिपत्यं। अभि-
शस्तेरधीहि। सु। सुकृत्सुपाणिः स्ववान्। अश्विना-
वृषिस्तुहि। उत्। उद्यन्नद्यमित्रमहः। उभेउदेतिसूर्यः।
अव। अवस्पर्तरधिवस्तारं। अवाधमं विमध्यमं। अपि
यद्दीगच्छंत्युशतीरपिष्ठितं। देवाद्देवामामपियंतिपाथः।

## इतरेनिपाताः॥ २१॥

इतरेकतरे ( नामाख्यातोपसर्गेभ्यो ) न्येनिपातावेदि-
तव्याः। अश्मान् एतां। उत्ता। घ। सा। स्यचां।
भावां। अपां। दूतं। नूनं। शश्वत्। कुवित्। शश्वत्।
अथातः अथ। अशो। अरिष्टतातये। विष्णोर्नुकं।
अन्यश्चेन्नाभिगच्छति। सहोजाः। ताः स्विद्धभ इत्येव-
माद्याः मादयस्वेत्येवमादयः।

## विंशतेरुपसर्गाणामुच्चाएकाक्ष-रानव॥ २२॥

प्र आ। निः दुः वि। सं। नि। सु। उत्। इत्येते
उपसर्गाणां नवसंख्या एकाक्षरा उच्चाउदात्ताइत्यर्थः।

## आद्युदात्तादशैतेषां॥ २३॥

एतेषामुपसर्गाणां दशाद्युदात्तावेदितव्याः। परा।

अनु । उप । अप । परि । प्रति । अति । अधि । अव । अपि । इत्येते अन्तोदात्तस्त्वभीत्ययं २४ । एतेषामेवोपसर्गाणां मध्ये अभीत्ययं अंतोदात्तो विदितव्यः । अभिप्रियाणि पवते चनोहितः । क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् । सत्वाभिधायकं नाम निपातः पादपूरणः कत्यर्थावेतौ ।

निपातानामर्थवशान्निपातना-
दनर्थकानामितरे च सार्थकाः ।
नेयं तदित्यपि संख्ये ह वाङ्मये
मिताक्षरे चाप्यमिताक्षरे च ये ॥२४॥

इति श्रीपार्षदव्याख्यायामानंद-
पुरवास्तव्यवज्रटपुत्रोव्वट-
कृते प्रातिशाख्यभा-
ष्ये द्वादशपटलं ।
द्वितीयोध्यायः समाप्तः

वायुः प्राणः कोष्ठ्यमनुप्रदानं कं-
ठस्य खे विवृते संवृते वा । आप-
द्यते श्वासतां नादतां वा वक्-
त्रीहायां ॥ १ ॥

यइमे शारीरा इत्यपंचवायवो नानाकर्माणः प्राणा-पानव्यानोदानसमानास्तेषां प्राणोहि नाभेरुपरिष्टाद्या-स्यास्य व्याचरति। नाभेरधस्तात् पायुमेढ्रयोरपानः। प्रसारणाकुंचनो क्षेपणावक्षेपणादि कर्मोव्यानः। कर्म-प्रवृत्तिषु बलमारोपयत्युदानः। सर्वक्रियाणामुपरमणः समानः। एवंवाचि वर्त्तमानं प्राणमेके आचार्यमन्यंते। उदानमपरे मन्यंते।(उपरिष्टान्मुखादग्रे ऊर्ध्वंयोवर्त्ते-ते ऽनिलः। ऊर्ध्वकर्मक्रियाःसर्वाः प्राणिनांसंप्रवर्तयन्।१। नाभ्युरोथशिरोभागं गछन्करचरणसंयुतः। कंठताल्वो-ष्ठदंतानां सप्रयत्नः समीरितः। २। ह्रस्वदीर्घप्लुतान्व-र्णा न्स्निग्धान्रूक्षांस्त्वनेकधा। उदात्ताननुदात्तांश्च स्व-रितान्कंपितानपि ॥ ३ ॥ समान्विकीर्णांस्तथा संवृता-न्विवृतानपि। देहिनामपिबोधार्थं तेनोदानःसउच्य-ते ॥४॥)एवमुभयथाऽचार्यविप्रतिपत्ति दर्शनाच्छौनकेन भगवताप्राणंमन्यमानेन शास्त्रमेवंप्रणीतं वायुःप्राणः कोष्ठ्यमनुप्रदानमिति। येपुनरुदानंमन्यन्ते, तेषामिदं नसिध्यति। उदानाभावतषांच सिद्धं ४ कथं? शारी-राणां पंचानामपि प्राणइतिनामसाधारणं। तस्मात्ते-षामपि वायुःप्राणः कोष्ठ्यमनुप्रदानमिति सिद्धं। प्रा-णावायुः कोष्ठमुदरं। कोष्ठेभवंकोष्ठ्यं अनुप्रदानं। वा-युमनुप्रदीयत इत्यनुप्रदानं। किंचतत्। श्वासनादो-भयं।केनप्रयत्नेन? किमनुप्रदान मापद्यते। कंठस्यग्री-वायाः खिगलस्यबिलेछिद्रेविवृते। विपुलेविशाले स-ति। संवृते संकुचिते संश्लिष्टेअल्पेवासति आपद्यते श्वासतां श्वासत्वं। नादतां नादत्वं वा। वर्ण्णो-

ह्रायां। ईहाचेष्टा वक्तुरीहावक्त्रीहातस्यांवक्त्रीहायां। सवायु: कंठबिलेविवृतेश्वासत्वमापद्यते। संवृतेनादत्वं।

## उभयं वांतरोभौ ॥ २ ॥

उभौ विवृतसंवृतौ अंतराकंठबिलेसमे सत्युभयंश्वासनादावापद्येते।

## तावर्णानां प्रकृतयो भवंति ॥ ३ ॥

ता:खलुएता: सर्ववर्णानां श्वासनादोभयात्मिका: प्रकृतयोभवंतीति वेदितव्यं। उक्तेर्प्यास्मिन्नज्ञायते केषांवर्णानां काप्रकृतिर्भवतीति? तत्रब्रूम:।

## श्वासोऽघोषाणां ॥ ४ ॥

अघोषाणां श्वास: प्रकृतिर्भवतीति वेदितव्यं।

## इतरेषांतु नाद: ॥ ५ ॥

इतरेषां कतराणां? स्वराणां घोषवतां च नाद:-प्रकृति र्भवतीति वेदितव्यं।

## सोष्मोष्मणांघोषिणांश्वासना-दौ ॥ ६ ॥

सोष्माणोयेघोषिण: वर्गचतुर्थ:। ऊष्मणांचघोषी हकारस्तेषां वर्णानामेवश्वासनादौ प्रकृतिर्भवतीति-वेदितव्यं। श्वासानुप्रदानाअघोषा:। हकारचतुर्था-उभयानुप्रदाना:। अवशिष्टा:सर्वे नादानुप्रदाना-इतिवेदितव्यं

तेषांस्थान प्रतिनादात्तदृक्तं ॥७॥

तेषां श्वासनादोभयानांस्थानंप्रतियद्वक्तव्यं तदत-द्याख्यातं नादःपरोभिनिधानाद् ध्रुवं तत्तत्कालस्थानमिति। एवंश्वासनादौनि। वौण्यनुप्रदानानि वर्णकालस्थानानि भवंति। नाधिकानि नन्यूनस्थानानि।

तद्विशेषकरणं ॥ ८ ॥

तत्रवर्णात्मगुणतत्वज्ञाने करणंनामविशेषो वक्ष्यति। करणप्रदानं इत्यनर्थांतरमाहुः।

स्पृष्टमस्थितं ॥ ९ ॥

स्पृष्टं करणं स्पर्शानां। परिशेषात् तत् अस्थितं वेदितव्यं। अस्थितमिति यत्रवर्णस्थानमाश्रित्यजिव्हानसंतिष्ठते तदस्थितमित्युच्यते।

दुस्पृष्टं तु प्राग्घकाराच्चतुर्णां ॥ १० ॥

दुस्पृष्टं ईषत्स्पृष्टमित्यर्थः। हकारात्प्राक्चतुर्णां वर्णानां यरलवानां।

स्वरानुस्वारोष्मणामस्पृष्टंस्थितं ॥११॥

स्वराणां अनुस्वारस्यऊष्मणां चास्पृष्टंस्थितं वेदितव्यं। यत्रवर्णस्थानमाश्रित्य जिव्हाऽवतिष्ठते तत्स्थितमित्युच्यते।

नैकेकंठास्य स्थितमाहु रूष्मणः॥१२॥

एकेप्याचार्याः कंठ्यस्य ऊष्मणो हकारस्य विसर्जनीयस्य च अस्पृष्टं करणं मन्यंते । स्पृष्टं दुस्पृष्टं वा एवमेके । अपरे अकंठ्यस्येति वर्णयंति ।

**प्रयोक्तुरीहागुणसंनिपाते वर्णीभवन्गुणविशेषयोगात् । एकश्रुतीः क्रमेणाप्नोति वहीः ॥१३॥**

प्रयोक्तुर्वक्तुरीहा ईहा एव गुणः ईहागुणः तेन संनिपाते योगे कंठ्यस्य वायोर्वर्णीभवन्निति वर्णत्वमापद्यमानः एकः सन् कंठ्यः स वायुः गुणविशेषयोगात् गुणा एव विशेषा गुणविशेषास्तैर्योगाद्यः कंठ्यवायुर्बह्वीः श्रुतीः बहुरूपाणि क्रमेण क्रियया प्राप्नोति । केवगुणविशेषायैः संयोगाद्वर्णानां श्रुतितो विशेषो भवति । अनुप्रदान । संसर्ग स्थान करण परिमाणास्तैः सह संयोगाद्वर्णानां रूपभेदो भवति । वर्गे वर्गे तुल्यस्थानानां तुल्यप्रयत्नानामपि प्रथमतृतीयाना मनुप्रदानकृतः श्रुतिविशेषः । कचटतप गजडदब इति । तथा हकारविसर्जनीययोः । संसर्गेणेति वक्ष्यति आहुर्घोषं घोषवतां सकारमेके नुस्वारमनुनासिकानां । सोष्मतांच सोष्मणामूष्मणामाहुः सस्थानेन घोषिणां घोषिणेवेति द्वितीयचतुर्थाः ऊष्मणासंसृज्यंते । अनुस्वारेण पंचमाः । तत्र तुल्यस्थानप्रयत्नानुप्रदानानामपि प्रथमद्वितीयानां तथा तृतीयचतुर्थानां तथा तृतीयपंचमानांच संसर्गकृतः श्रुतिविशेषः । कचटतप खछठथफ । तथा । गजडदब । तथा । घझढधभ ।

मथा । ङञणनमइति । स्थानेनेति तुल्यप्रयत्नानुप्र-
दानानामपि स्थानकृतः श्रुतिविशेषः । अकटइउकच-
टतपयरलव । हशषस । करणेनेति तुल्यस्थानानुप्रदा-
नानामपि इकारजकारयकाराणां करणकृतः श्रुति-
विशेषः । परिमाणेनेति तुल्यस्थानप्रयत्नानुप्रदानयो
रपि समानाचरयोः परिमाणकृतः श्रुतिविशेषस्तथा अ-
आकटऋइईउऊइति । अपिचश्लोकः । अनुप्रदानात्सं-
सर्गात्स्थानात्करणविभ्रमात् । जायतेवर्णवैशेष्यं परि-
माणाच्चपंचमादिति ।

## एकेवर्णान्छाश्वतिका न्नकार्यान्॥१४॥

एके[illegible]चार्याः अकारादीन्वर्णां छाश्वतिकान् नि-
त्यान्नकार्यान्नकर्त्तव्यान्मन्यंते ।

## आहुर्घोषंघोषवतामकारमेके नु-
## स्वारमनुनासिकानां ॥ १५ ॥

घोषवतां वर्णानामकारं घोषमाहुरेकेआचार्याः ।
किमुक्तंभवति । घोषवत्स्वकारः स्वस्थानादागत्य घोष-
वत्वं जनयतीति । गजडदव यरलवहइति । तथाते
एवाचार्याः अनुनासिकानांवर्णानामनुस्वारं घोषमा-
हुः । किमुक्तंभवति । अनुस्वारः स्वस्थानादागत्य घो-
षवत्वंजनयतीति । ङञणनमइति ।

## सोष्मतांच सोष्मणा मूष्मणा-
## हुः सस्थानेन ॥ १६ ॥

सोष्मणांवर्णानां सोष्मत्वंसस्थानेनोष्मणाआहुः । खकारस्यष्कइत्येतेन । छकारस्यशइत्येतेन ठकारस्यष-इत्येतेन । थकारस्यसइत्येतेन । फकारस्यफइत्येतेन ।

## घोषिणां घोषिणैव ॥ १७ ॥

घोषिणांसोष्मणां घोषिणैवोष्मणा । हकारेणेत्यर्थः । सोष्मतामाहुः । घझढधभइति ।

## अघोत्पन्नावपरे ऊष्मघोषौ ॥१८॥

अत्रैव सोष्मसुघोषवत्सु चोपपद्येते ऊष्मघोषौ इ-त्यपरेआचार्याआहुः । यदुक्तोमकारो घोषवतांघोषवत्वं जनयतीति । अनुस्वारोनुनासिकानामिति सोष्मणां-चोष्मासोष्मत्वमिति । तन्नस्पष्टं लक्ष्यते । कस्मात् । एवमुच्यमानेसति वर्णानामनित्यत्वं प्रसज्येत । नित्या-स्ववर्णाःकूटस्थास्त्वविचालिनः ।

## शीघ्रतरं सोष्मसुप्राणमेके ॥ १९ ॥

सोष्मसु द्वितीयचतुर्थेषु शीघ्रतरंप्राणमेके आचार्या-मन्यंते । सर्वेषुवर्णेषु स्थानकरणानुप्रदानानि त्रयोगु-णाःसमानाः सोष्मसुप्राणगुणोऽधिकः । तत्रगुणवत्त्वा न्मात्राकालेनशीघ्रादृतेन शक्यमुच्चारयितुमिति तेषुशी-घ्रतरं प्राणंमन्यंते । पदकारेणाप्युक्तम् । प्रथमद्वितीयाः श्वासानुप्रदाना अघोषाएके अल्पप्राणा अपरेमहा-प्राणा स्तृतीयचतुर्थानादानुप्रदाना घोषवंत एके अ-परेमहाप्राणा इति । सोष्मसुद्वितीयप्राणं विदधत् एतमेवार्थमिति ।

## रक्तोवचनो मुखनासिकाभ्यां॥२०॥

मुखेन नासिकयाच यदुच्यते सरक्तोवेदितव्यः। इज्ञानमइति। मचाँइंद्रः। अस्मााँअस्माँइत्। अभी-शूँरिव। नूँः प्रणेत्रं। किमर्थमिदमुच्यते। ननु रक्तसं-ज्ञोनुनासिक इत्येवंसिद्धं। सत्यं। नहिसंज्ञाक्रियते किंतर्हि। तत्रानुक्तं मुखनासिकावचनत्वं रक्तस्यविधी-यते। एवमर्थमिदमुच्यते।

## एतद्वर्णात्मगुणशास्त्रमाहुः॥२१॥

एतद्वायुः प्राणइत्येवमादियदनुक्रांतं तत्वर्णानां आत्मगुणशासनं वेदितव्यं। एतावंतो वर्णात्मगुणाः। श्वासता। नादता। उभयता। स्पृष्टता। दुस्पृष्टता। अस्पृष्टता। कंठबिलस्यविवृतता। अघोषता। घोषता। सोष्मता। अनुनासिकतेति।

## नपुंसकं यदूष्मांतं तस्य बहुभि-धानजः। अनुस्वारो दीर्घपूर्वः सिष्यंतेषु पदेषु सः॥ २२॥

नपुंसकलिंगं यच्छब्दस्वरूपं ऊष्मांतं तस्य नपुंसक-लिंगस्य बहुभिधानजः बहुवचनोत्पन्न इत्यर्थः। दीर्घ-पूर्वोनकारजन्यः पदमध्ये अनुस्वारोवेदितव्यः। सि। षि। इत्येवमंतेषु पदेषु सअनुस्वारोद्रष्टव्यः। भासाँ-सिवस्ते सूर्योनशुक्रः। चक्षूंषीव सूर्येसंचरंति। यादे-

व्यावृणीमहे वाँसि । व्य१र्यहंद्रतनुहि श्रवाँसि । तपूंषि-
तस्मै हजिनानि संतु । वपूंषि जाता मिथुनासचेते ।
आ१स्मिन्मना हवीँष्यग्नौ । किमर्थमनुस्वारस्य दीर्घपू-
र्वस्य पदमध्ये वर्त्तमानस्य बहुभिः श्लोकैर्लक्षणं क्रियते ।
ननुपाठादेव सिद्धं यथान्येषां वर्णानां । सत्यं । किं-
तुदुराम्नाननिवृत्त्यर्थं अनयोः शिक्षापटलयोर्बहूनां वर्णा-
नां लक्षणं क्रियते । यथासमापाद्यान्युत्तरे षट्पकारे ।
शुनः शेपो निष्षपी शास्मिनिष्षालविक्रमान् । एयेरि-
त्येकार मकारमाहु रित्येवमादीनि । कथंपुनर्दुरा-
म्नानप्रसंगः संतिहि । तीर्थोषिताः अलसाः अगुणदो-
षज्ञाः अन्योन्याध्यापकाः । सर्ववर्णान्यत्वजन यितार
स्तद्दोषनिवृत्त्यर्थं आचार्येण शिष्यहितार्थमिदमारब्धं । अ-
नुस्वारस्स्थाने तावत् ङकारं जनयंति तस्मात् ङका-
रात्परं ककारमंतःपातं जनयंति । हवींषि । सर्पींषि ।
भासांसि । अवांसीत्येवं तन्निवृत्त्यर्थ मनुस्वारलक्षणंक्रि-
यते । यद्येवंपदांतेप्यनुस्वारस्य तद्भवणं तुल्यम् । त्वां-
हत्यदिंद्रार्णसातौ । तांसुतकीर्तिं मघवन् । तस्माद-
त्रापि यत्नःकर्त्तव्यः । नकर्तव्यः । रेफोष्मणो रुदययो
र्मकारानुस्वारमिति विहितमनुस्वारं जानात्यसौ ।
तत्रपदमध्ये अनुस्वारलक्षणं नास्ति येनानुस्वारं जा-
नीयात् एवंसति किमर्थंदीर्घपूर्वोगृह्यंते । नह्रस्वपूर्वः ।
षाविंशत्या त्रिंशता । अंसेषुव इत्युभयत्रापिहि ङका-
रश्रवणं तुल्यं । तत्रतावदाहुः दीर्घस्ययथाव्यक्तङका-
रश्रुति नंतथाह्रस्वपूर्वस्य । तस्मान्नगृह्यते । अपरेपाहु
रनुस्वारस्योपधां ह्रस्वांकेचित्द्राघयंत इवपठंति । त-

न्निहत्यर्थं दीर्घपूर्वः परिगृह्यते । एतावानन्त्वनुस्वारो दीर्घादित्येवमंतः ।

## सः सासौ सं पदांतेभ्यः पूर्वो-नाम्युपधस्तथा । यकारोवा व-कारोवा पुरस्ताच्चेदसंधिजः ॥२३॥

सः। सा । सौ । सं । इत्येतेभ्यःपदांतेभ्यः पूर्वोनुस्वारः अनाम्युपधः अकाराकारोपधः। तथा। कथं । यथासिर्ध्यंतेषु दीर्घपूर्व एवमिहापि दीर्घपूर्वोवेदितव्यः । असंधिजः यकारोवावकारोवा यदितस्मादवर्णात्पूर्वोभवति । सः। साह्वांसोदभ्युं । सा । शुश्रुवांसाचित् । सौ। विद्वांसौ । इत् । दुरः । सं । ओयाँसंदधं । वाव्ध्वाँसंचित् । यकारोवावकारोवा पुरस्ताच्चेदसंधिज इति कस्मात् । योव्यंसं ।

## जिघांसन् पांसुरे मांसं पुमांसं पौंस्यमित्यपि । पदेष्वेवं प्रवा-देषु ॥ २४ ॥

जिघांसन् । पांसुरे । मांसं । पुमांसं । पौंस्यं । इत्येतेषुच पदप्रवादेष्वनुस्वारः दीर्घपूर्वोवेदितव्यः । दुश्शिघाँसंध्वरसं । यत्स्तोतारंजिघांससि सखायं । समूळ्हमस्यपांसुरे । मांसमेकःपिंशति । येचार्वतोमांसभिक्षां । पुमाँसंपुत्रमाधेहि । स्तुषेतदस्यपौंस्यम् । चकर्षेतानिपौंस्या ।

## नामकार उपोत्तमे ॥ २५ ॥

जिघांसादीना मुपोत्तमप्रवादे अमकारेसति अनुस्वारोदीर्घपूर्वो नभवति । किंतुह्रस्वपूर्व एव भवति । पुंसःपुत्राँउतविश्वापुषंरयिं ।

## प्रश्लिष्टादभि निहितात् ॥२६॥

प्रश्लिष्टादेकीभावात् अभिनिहिताच्च परअनुस्वारः पदेह्रस्वपूर्वः सन् संहितायां दीर्घपूर्वोभवति । प्रश्लिष्टात् । आभूतांशः । अभिनिहितात् । भरेष्विंद्रं सुहवंहवामहेंहासुचं ।

## माँस्त्वे याँस मित्यपि ॥ २७ ॥

मांस्त्वे । अयांसं । इत्येतयोश्चानुस्वारो दीर्घपूर्वोवेदितव्यः । माँस्त्वेवापृशने वावधत्रे । अयाँसमग्ने सुक्षितिं । अयंयोगोऽनर्थकं कथं माँस्त्वेति नाय मनुस्वारः । किंतर्ह्यादिस्वरस्योत्तरेषां पदेपीति । अनुनासिकः स्वरः । अयांसमिति सः सा सो सं पदांतेष्वदृत्येवसिद्धं । नानर्थकः शाखांतरे किलमांस्त्वेसानुस्वारं पठंति तत्प्रदर्श्यंते । यद्येवं मांस्पचन्या इतिच निपातयितव्यं । नैतदस्ति प्रयोजनं जिघांसन्पांसुरेमांस मिति मांसप्रवादत्वात्सिद्धं । अयांसमित्येतस्य निपातने प्रयोजनं मृग्यंउदाहरणं ।

## एतावान्हस्वनुस्वारो दीर्घात्॥२८॥

नपुंसकं यदूष्मांत मित्येवमादिर्योयमनुस्वारो ऽनु-

क्रांत: एतावानेव ऋक्पदमध्येदीर्घात्परोवेदितव्य:। अत्रैवोदाहृत:। ·

## इतरथेतर: ॥ २९ ॥

इतरथाकथमुक्तान्दीर्घपूर्वाद्विषयात् अन्यत्र ऋक्पदमध्येरेफोष्मपर: इतर:कतर: ह्रस्वपूर्वोनुस्वारो वेदितव्य:। अंह.विंशत्या। अं सेषु। अर्मांदग्धान्स्वरानिति। उक्त:श्लोकार्थ: स्वरपटले। अत्रापि तथैवव्याख्यातव्य:।

## समापाद्यान्युत्तरेषट्पकारे राधोरथोग्नादिवोजाऋतश्च। अंज:पादु: प्रतिचपूर्व पद्यावनिंगयन् विक्रममेषु कुर्यात् ॥ ३० ॥

समापाद्यानि षट्पदानि पकारे उत्तरे। राध: रथ-ग्ना: दिव: जा: ऋत: इत्येतानि। अंज:। पा। दु:प्र इत्येतौचपूर्वपद्यौ विक्रममेतेषु कुर्यात्। अनिंगयन् अवग्रहमकुर्वन् विक्रमंकुर्यात्इति। विक्रमंउपध्मानीयविसर्जनीयमेषु कुर्यात्। त्वंहिराधस्पते। राध:पते। एषतेदेवनेतारथस्पति:। रथ:पति:। नराशंसोग्नास्पतिर्न:। ग्ना:पति:। दिवस्पृथिव्योरव आवृणीमहे। दिव:पृथिव्यो:। संजास्पत्यं। जा:पत्यं। तववायवृतस्पते। ऋत:पते। यामञ्जस्पाइवघ्येत्। अंज: पा: २ इव। दुष्प्राव्योवहंता। दु:प्रऽअव्य:। पूर्वपद्यौइतिकिं। इमंमंजस्पामुभये अकृण्वत। अंजस्पामित्य-

त्वावग्रहत्वात् मात्राकालो भवतीति । किमिदं समा-
पाद्यमित्यत आह ।

समापाद्यंनामवदंति षत्वं त-
थाणत्वं सामवशांश्च संधीन् ।
उपाचारं लक्षणत श्वसिद्धमा-
चार्या व्यालिशाकल्यगार्ग्याः॥३१॥

समापाद्यं नामषत्वं वदंति । तथाणत्वं । च पुनः
सामवशां स्संधीन् । लक्षणतः सिद्धमुपाचार मपि त-
थावदंति केते । आचार्या व्यालिशाकल्यगार्ग्याः । सुषु
मायातं । तदा रभस्वदुर्हणो । मक्षूमक्षूकृणुहि । स्वं-
हिराध्यते ।

ह्रस्वामर्द्धस्वरभक्त्या समाप्ता म-
नुस्वारस्योपधामाहु रेके । अनु-
स्वारं तावतैवाधिकं च ह्रस्वो-
पधं ॥ ३२ ॥

ह्रस्वां अनुस्वारोपधां अर्द्धस्वरभक्त्या असमाप्तां पा-
दमात्रया अर्द्धपादमात्रयावान्यूनां आहुरेके आचार्या
अनुस्वारंच तावताकालेनाधिकं ह्रस्वोपधं । स्वंरा-
जेंद्रयेव । स्वंह्यत् ।

दीर्घपूर्वं तदूनं ॥ ३३ ॥

दीर्घपूर्वमनुस्वारं तथैवार्द्धस्वरभक्त्या न्यूनमाहुः । दीर्घमुपधां तावताधिकां च । गवांशता । तांसुतेकीर्तिम् ।

## रेफोस्त्यृकारेच परस्यचार्द्धं पूर्वंह्रसीयांस्तु नवेतरस्मात् । मध्येसः ॥ ३४ ॥

ऋकारे रेफो विद्यते । परस्यऋकारस्यच पूर्वेऽर्द्धे रेफोविद्यते । ह्रसीयांस्तु ह्रस्वतरः सरेफः । इतरस्मादृकाररेफादल्पतरः । नवाह्रसीयान् । समएववा । मध्येसः । सरेफस्तस्यऋवर्णस्यमध्ये द्रष्टव्यः । नादौ । नांत्ये । ऋऋ ।

## तस्यैवलकारभावे धातौस्वरः कल्पयता.लृकारः ॥ ३५ ॥

तस्यऋवर्णस्यस्थानेरेफस्यलकारभावे यदामरेफो लकारमापद्यते तदालृकारोभवति स्वरसंज्ञश्च भवति । कल्पयतावेवधातौ नान्यच । चाक्लृप्रेतेन ऋषयोमनुष्याः इत्यत्रस्वरात्ककारस्य द्विर्वचनं नभवति । असंयोगादित्वात् । पकारस्यच द्वित्वंभवति स्वरोपधत्वात् ।

## अनंतस्थं तमनुस्वार माहुः ॥३६॥

योसौ पुरस्तादविशेषेणानुक्रांतो नुस्वारःएतावाननुस्वारोदीर्घादिति । तमनुस्वारं अनंतस्थपद मध्येवर्तमानमाहुराचार्याः । किमर्थमिद मुच्यते । ननुःसकं यदूष्मांतमित्येवमाद्यनुक्रमेणैवसिद्धं । सत्यं । किंतु

एतावाद्यत्त्वनुस्वारो दीर्घादितिनियमविधिः प्रसज्येत । तन्निवृत्त्यर्थमुच्यते । संतिह्यन्येपि दीर्घात्परांताः । त्वां- हि । त्वांराजनं । तांसुतेकीर्तिं ।

## व्यालि र्नासिक्य मनुनासिकं वा॥३७॥

व्यालिराचार्यः सर्वमनुस्वारं नासिकास्थानं मुख- नासिकास्थानं वा मन्यते । त्वंराजा । त्वाँराजानं । अँ- सेषुवः । हवीँषि । त्वंराजेन्द्रं । त्वांराजानं । अंसेषुव- हवींषि । अनुस्वारस्यपूर्वोक्तमपि नासिकास्थानं मुख- नासिक्यविधित्सयापुनरुच्यते ।

## संध्यानिसंध्यक्षराण्याहुरेके द्वि- स्थानतैतेषु तथोभयेषु ॥ ३८ ॥

संध्यानिसंश्रितत्र्यानि संश्रितानिवासंध्यक्षराण्याहुरे- के आचार्याः । यथाऽन्या न्यक्षराणि स्वयमुत्पन्नानि न- तथेमानि । कथमेतदध्यवसीयंते यतोद्विस्थानता कंठ- तालुस्थानता । कंठोष्ठस्थानताच । तथालक्ष्यते । उभयेषु संध्यक्षरेषु कंठतालव्ययोः कंठोष्ठयोश्च । एओ- ऐऔ इति । यदिसंध्यानि द्वयोर्वर्णयोः संधिजानिभवंति ।

## संध्येष्वकारोर्द्धमिकार उत्तरं युजोरुकार इति शाकटाय- नः ॥ ३९ ॥

संध्येषु संध्यक्षरेषुसत्सुअकारः पूर्वार्द्धंभवति । इ- कारमुत्तरार्द्धं प्रथमतृतीययो र्भवति । युजोर्द्वितीयच-

र्णयोः उकारमुत्तरार्द्धं भवति एवं शाकटआचार्यो म-न्यते। अइ। ए। अउ। ओ अई। ऐ। अऊ। औ। इति। यद्येवमेकारैकारयोरोकारौकारयोर्वा कथं श्रुतिविशेषः।

## मात्रासंसर्गादवरेपृथक्श्रुती॥४०॥

अवरेपूर्वे। एओइत्येते मात्रासंसर्गात्। मात्रयोः समयोः। क्षीरोदकवत्। नज्ञायते क्वावर्णमात्रा क्वेव र्णोवर्णयो रिति तस्मात्तेअक्षरे अपृथक्श्रुतीभवतः। कि-मिदमपृथक्श्रुतीइति। एओ इत्येतयोरिवर्णोवर्णयोः पृथक्श्रवणं नविद्यते। क्षीरोदकवत्संप्रयुक्तत्वात्। एवंश्रुतिविशेषः। अस्यैवापरायोजना। मात्रासंसर्गा-दवरेऽपृथक्श्रुती। मात्रयोः क्षीरोदकवत्संप्रयुक्तत्वा न्नज्ञायते। तस्मादवरे संध्यक्षरे एओ इत्येते पृथक्श्रुती भवतः। ऐओकाराभ्यामेकारओकारौ पृथक्श्रूयेते इत्य-र्थः। एवंश्रुतिविशेषोभवति।

## ह्रस्वानुस्वारव्यतिषंगवत्परे॥४१॥

परे संध्यक्षरे ऐऔइत्येतौ ह्रस्वानुस्वारयो र्व्यति-षंगोऽनुक्रांतः ह्रस्वामर्द्धस्वरभक्त्यासमाप्तामिति तद्व्य-तिषंगो वेदितव्यः। ऐऔकिमुक्तंभवति। यथा तत्र-ह्रस्वेऽनुस्वारः पादमात्राधिक उपधाचतावतान्यूना। एवमिहापि द्रष्टव्यं। इवर्णोवर्णयो र्भूयसीमात्रा। अ-ल्पीयसीअवर्णस्य यस्मात्तयोर्वैषम्यान्नक्षीरोदकव त्सं-सर्गोभवति। तस्मात्तयोरवर्णस्य इवर्णोवर्णयोश्च पृथ-क्श्रवणं भवति ऐऔ इति।

त्रीणि मंद्रंमध्यममुत्तमं च स्था-
नान्याहुः सप्तयमानि वाचः ॥ ४२ ॥

वाचस्त्रीणिस्थानानि । सप्तयमानि सप्तयमा येषुस्था-नेषु तानिसप्तयमान्याहु राचार्याः । तेषुमंद्रमुरसि व-र्त्तते । मध्यमंकंठेवर्त्तते । उतमंशिरसि वर्त्तते एतानि-स्थानानि स्वरविशेषणान्यपिभवंति । यथामंद्रेणस्वरे-णाधीयते । मंद्रयावाचाप्रातः सवनेशंसेत् । उरसा-धीयतेइति ।

अनंतरश्चात्रयमोऽविशेषः ॥ ४३ ॥

एषुस्थानेष्वनंतरः अव्यवहितोयमः अविशिष्टोभ-वति । अनंतरेयमे विशेषोनशक्यते दर्शयितुमित्यर्थः । केतेयमानाम ।

सप्त स्वरायेयमास्ते ॥ ४४ ॥

येसप्तस्वराः षड्जऋषभगांधारादयो गांधर्ववेदेस-मान्नाताः । तथासामसु । क्रुष्टप्रथमद्वितीयतृतीयचतु-र्थमंद्रा तिस्वार्याः इतिते यमानामवेदितव्याः ।

पृथग्वा ॥ ४५ ॥

अथवास्वरेभ्यः पृथग्भूताः अन्येयमाः स्वरेषुवर्तंते एतेषांमृदुत्वं तीक्ष्णत्वं च वेदितव्यं ।

तिस्रोवृत्तीरुपदिशंति वाचोवि-
लंबितां मध्यमांचद्रुतां च ॥४६॥

तिस्रोवृत्तीर्वाग्न उपदिशंत्याचार्याः । विलंबितां बालानामध्यापनादिषूपदिशंति । मध्यमां व्यवहारादिषूपदिशंति । द्रुतां अध्ययनस्य बहुरूपाभ्यासे उपदिशंति ।

## वृत्यंतरे कर्मविशेषमाहुः ॥ ४७ ॥

वृत्तेरन्यावृत्ति वृत्यंतरं तस्मिन्कर्मविशेषमाहुराचार्याः । विलंबितायां प्रातःसवनं भवति । मध्यमायांमाध्यंदिनं सवनं द्रुतायांतृतीयंसवनं इतितेषु सवनेषुएतावृत्तयो भवंतीत्युक्तम्भवति ।

## मात्राविशेषः प्रतिवृत्युपैति ॥४८॥

वृत्तिंवृत्तिं प्रतिमात्राविशेषः मात्राधिक्यं उपैति उपगच्छति । द्रुतायांवृत्तौ येवर्णास्ते मध्यमायां त्रिभागाधिका भवंति । तथा मध्यमायां येवर्णास्ते विलंवितायां त्रिभागाधिकाभवंति । चतुर्भागाधिका भवंतीत्येकेइति ।

अभ्यासार्थेद्रुतांवृत्तिं प्रयोगार्थेतु मध्यमाम् । शिष्याणामुपदेशार्थेकुर्याद्वृत्तिं विलंवितां । चाषस्तु वदते मात्रां द्विमात्रांवायसोऽब्रवीत् । शिखीत्रिमात्रो विज्ञेय एषमात्रापरिग्रहः । त्रिमात्रांतु

शिखीभूते नकुलस्त्वर्द्धमात्रिक-
मिति वापाठः । गतार्थमेतत्
क्षेपकम् ॥ ४९ ॥

इति श्रीपार्षदव्याख्याया मानं-
दपुरवास्तव्यवज्रटपुत्रोव्वट-
कृते प्रातिशाख्यभाष्ये
शिक्षापटलं त्रयो-
दशम् ।

समुद्दिष्टावर्णगुणाः पुरस्तान्नि-
र्दिष्टानां सांहितो यश्च धर्मः ।
तदायापायव्यथनानि दोषास्ता-
न्व्याख्यास्यामोतन्निदर्शनाय॥१॥

पुरस्तान्निर्दिष्टानां वर्णानां वर्णगुणाः समुद्दिष्टाः सांहितोयश्चधर्मः समुद्दिष्टोऽनुक्रांतेषु पटलेषु तदायापायव्यथनानि । तेषां वर्णानां आयोऽपायः व्यथनमिति । एतेदोषाःप्रादुर्भवंति । आयोनामासतोवर्णस्योपजनः । यथाह्वयामीत्यत्र पुरस्तादनुवादः । अपायोनामसतोपकर्षः यथा ऊनयोरित्यत्रयोरित्येतस्य व्यथनंनामसतोन्यथाश्रवणं । यथारथ्याद्दत्यत्र वर्णव्यस-

कारवक्रवर्णं दोषानुत्तरवद्दर्शनार्थं विस्तरेणासौ च-मुद्देति अनुक्रामंतोव्याख्यास्याम:।

निरस्तं स्थानकरणापकर्षे ॥ २ ॥

निरस्तंनाम दोषउत्पद्यते स्थानकरणयो रपकर्षेण। ननु स्थानकरणयो रपकर्षोनोपपद्यते। कथं। स्थान-करणाभ्यांहि वर्णःअपकृष्यते। नैषदोषः। यथा स्थान। करणाभ्यां वर्णोऽपकृष्टोभवति तथावर्णादपि स्थानक-रणेअपकृष्टे भवतः। तस्मात्सदोषः परिहर्तव्यः।

विहारसंहारयो र्व्यासपीडने ॥३॥

विहारोविहरणं विस्तारः। संहारःसंहरणं। अन्य-थाकरणं संकोचनं वा। कस्यस्थानकरणयो र्विहारे व्यासोनामदोषो जायते। संहारेपीडनं च। व्यासो-ऽविवेकः। पीडनंद्विर्भावः तावपि परिहर्तव्यौ।

ओष्ठाभ्यामंबूकृतमाहनद्धंदुष्टं ॥ ४ ॥

ओष्ठाभ्यांनद्धं। बद्धमित्यर्थः। यदाहवक्ता तद्दुष्टं अं-बूकृतमित्युच्यते। तदपिवर्ज्यम्।

मुखेनसुषिरेणभूनं ॥ ५ ॥

सुषिरेणविलंबितेन मुखेनवक्ता यदाहतद्दुष्टं भूनं-वेदितव्यं।

संदष्टं तु पीडन आहहन्वोः ॥ ६ ॥

ग्रीडने हन्वोः संदष्टं नामदोषोभवति सवर्ण्यः । ग्रीडनंनाम हन्वोर्नो च भावः ।

## प्रकर्षणे तद्विक्लिष्टमाहुः ॥ ७ ॥

हन्वोः प्रकर्षणैव विक्लिष्टं नामदोषो भवति । प्रकर्षणंनाम सर्वतस्खलनं । विक्लिष्टं नामासंयुक्तं

## जिह्वामूलनिग्रहे ग्रस्तमे तत् ॥ ८ ॥

जिह्वामूलस्य निग्रहे ग्रस्तं नामदोषोभवति तंवर्जयेत् । निग्रहोनामस्तंभनं ।

## नासिकयोस्त्वनुषंगे नुनासिकं ॥ ९ ॥

नासिकयोर्यदावर्णोनुषज्यते तदाऽनुनासिकत्वमुत्पद्यते सदोषस्तंपरिहरेत् ।

## अयथामात्रं वचनं स्वराणाम् ॥ १० ॥

यथामात्रं यथामात्रं वचनंस्वराणांह्रस्वदीर्घप्लुतानां अयथामात्रोच्चारणं दोषोभवति । प्रायेणदीर्घेषु ह्रस्वेषु च रक्तेषु मात्राधिक्यं कुर्वन्ति तदाचार्येणनिदर्शनार्थमुत्तरत्रोदाहृतं रक्तंह्रस्वंद्राघयंत्युग्रंश्लोकइति ।

## संदंशोव्यासः पीडनं निरासः ॥ ११ ॥

संदंशः व्यासः । पीडनं । निरासः । एतेचपुरस्तात्कीर्तिताः ते स्वराणांभवंति । संदंशइति संदष्टं ग्रीडनया हन्वोरितिकीर्तिताः व्यासपीडनेइत्येतौ वि-

ह्वारसंह्वारयोरिति कीर्तितौ । निरासइति निरस्तं स्थानकरणापकर्षं इति कीर्तितः ।

## ग्रासः कंठाद्योः ॥ १२ ॥

जिह्वामूलंनिग्रहैग्रस्तमिति यः प्रागुक्तः ग्रासोनामदोषः सकंठ्ययोरकाराकारयोरुत्पद्यतेसवर्जयितव्यः ।

## अनुनासिकानांसंदष्टता विषमरागतावा ॥ १३ ॥

अनुनासिकानांवर्णानांसंदष्टतादोषो भवति । सव्याख्यातः संदष्टन्तुव्रीडनञ्चाह्नन्वोरिति । विषमरागतावानुनासिकानां भवति । नहिरागं प्रत्याख्यायानुनासिकावर्त्तन्ते तस्माद्विषमरागतादोष उच्यते । अक्रतं एमि । अभ्रआँ अपः ।

## सांतस्थानामादिलोपांतलोपौ १४॥

सहांतस्थयावर्त्ततइति सांतस्था स्तेषांसांतस्थानां वर्णानां क्वचिदादिलोपःक्रियते क्वचिदंतलोपः तौदोषौज्ञेयौ पिवानिषद्य । इंद्रवाय्वोः ।

## अदेशेवावचनं व्यंजनस्य ॥ १५ ॥

अथवाअदेशे अस्थाने असद्यंजनमित्युच्यते सदोषोवर्ज्यः । यथाअस्मान् स्तोमैरभुतृम्णह्नि । उत्स्नाय । विश्वप्स्न्यस्य । इत्यत्रसकारात्परः सकारउच्यते । यथायच्छांदोषघ्नं । विष्णुः इत्यत्रषकारात् ककारसकारौ ।

## अन्योन्येन व्यंजनानां विरागः॥१६॥

व्यंजनानां अन्योन्येनसह विरागः क्रियते सदोषः यथा । उपमासड्डाइत्यत्र ड्कारात्परस्य ढकारस्यवि-रागः क्रियते पञ्चाद्भिः ।

## लेशेनवावचनं पीडनं वा ॥१७॥

लेशेनवाव्यंजनानांवचनं क्रियते पीडनंवा । लेशेन-प्रयत्नशैथिल्येन । पीडनमतिप्रयत्नःतावुभौदोषौसर्वेषुव-र्जयेत् ॥

## घोषवतामनुनादःपुरस्तात्पदा-दिस्थानांक्रियतेधारणं वा ॥१८॥

पदादिस्थानांघोषवतां पुरस्तादनुनादःध्वनिःक्रियते अथवा तेषांघोषवतां धारणंनामानुपलब्धिः । यथाभ्र-यामीत्यत्र पुरस्तादधिकःशब्दःक्रियते अथवा तस्यदोष-स्यपरिहरणार्थं हकारस्यानुपलब्धिःक्रियते । अपरेधा-रणं द्विवचनंमन्यंते । ज्योतिष्कृत् । द्याया । द्वादश ।

## सोष्मोष्मणामनुनादोप्यनादः॥१९॥

सोष्मणामूष्मणामपि पुरस्तात्पदादिस्थानात् अ-नादोऽशब्दः । अनुनादश्च क्रियते । यथा अभिख्याय । छायामिव । श्चोतंति । स्तौति ।

## लोमश्यंच क्ष्वेडनमूष्मणां तु॥२०॥

ऊष्मणांतु घोषाणांलोमश्यंचक्ष्वेडनंच दोषौभवतः ।

लोमहर्षंनामासो ऽनुमार्थं । क्ष्वेडनं नामा(१)धिकोवर्णस्य स्वरूपोध्वनिः ।

## वर्गेषुजिह्वाप्रथमं चतुर्षु ॥ २१ ॥

आद्येषुचतुर्षु वर्गेषुजिह्वाप्रथनंक्रियते सदोषः । जिह्वाप्रथनंनामविस्तारः ।

## ग्रासोमुख्ये ॥ २२ ॥

एतेषांवर्गाणां मुख्ये आद्येवर्गे ग्रासोनामदोषो भवति । सव्याख्यातः ।

## प्रतिहारश्चतुर्थे ॥ २३ ॥

एतेषामेव चतुर्थेवर्गे प्रतिहारनामदोषो भवति प्रतिप्रयत्नः प्रतिहारः ।

## सरेफयोर्मध्यमयोर्निरासः ॥ २४ ॥

सहरेफेणवर्त्तेते इति सरेफौ एतेषांचतुर्णांवर्गाणां योमध्यमौवर्गौ तयोश्चरेफस्य च निरासो नामदोषोभवति सव्याख्यातः ।

## विक्लेशस्थाने सकलेचतुर्थे ॥ २५ ॥

चतुर्थेवर्गेस्थाने सकले सहकलाभिः सकलं कला-अवयवाः केते कारणादयः तेषुकारणादिषु स्थानेष्वविक्लेशो नामदोषो भवति । विक्लेशो अवैशद्यमित्येकोर्थः ।

---

(१) अविवेकः वर्णस्य अस्वरूपोध्वनिः । पुरस्तादुदाहृतमिति वृत्तिः ।

## अतिस्पर्शो बर्बरता च रेफे ॥ २६ ॥

दुस्पृष्टो रेफः सातिस्पृश्यते बर्बरताचोच्यते तौदोषौ रेफस्य वर्जयेत् । बर्बरताप्यसौकुमार्यमेव ।

## जिह्वान्ताभ्यां स्रवचनं लकारे ॥२७॥

जिह्वाग्रेणावक्तव्यः सलकारः यदाजिह्वायाः अंताग्राभ्यामुच्यते तदासदोषोभवति । पूर्वोक्तौचातिस्पर्शबर्बरौवयोर्दोषालकारस्यभवंति तान्वर्जयेन्मेधावी ।

## श्वासोऽघोषनिभता वा हकारे॥२८॥

श्वासोवा अधिकः अघोषसदृशत्वं च हकारस्यदोषौलक्षयेत् ।

## निरासोन्येषूष्मसु पीडनं वा ॥२९॥

येन्येहकारा दूष्माणास्तेषु शकारादिषुनिरासः पीडनंवेतिद्वौदोषौभवत स्तौव्याख्यातौ ।

## स्वरात्परं पूर्वसस्थानमाहुर्दीर्घान्निरस्तं तु विसर्जनीयं ॥ ३० ॥

दीर्घात्स्वरात्परं विसर्जनीयं पूर्वस्यसस्थानं निरस्तमाहुः उक्तः सदोषः । रथीः । वधूः । अग्नेः । वायोः । दीर्घादिति किं उच्यते । ननुह्रस्वादपिविसर्जनीयः पूर्वसस्थानएवश्रूयते । अग्निः वायुः इति । यद्यपिसर्वथा तुल्यं ततोप्याचार्येण दीर्घग्रहणं कृतं तस्माद्दीर्घादेवपूर्वसस्थानत्वं भवतीति नह्रस्वादपिभवतीति मंतव्यं ।

अपरे पुनरन्यथा वर्णयंति अन्यस्मात् दीर्घात्स्वरात्परो वि-सर्जनीयो देवै रपि न शक्यते उच्चारयितुमितिविधिं वर्ण-यंति। दीर्घात्स्वरात्परं पूर्वसस्थानमाहुराचार्या इच्छं-तीत्यर्थः। तस्मिन्नपिपक्षे दीर्घग्रहणमनर्थकं ऋकारादपि-तथैवेच्छंति। एवंतर्हि परस्ययोगस्यार्थं दीर्घग्रहणं ह्र-स्वग्रहणेनहपठितं द्रष्टव्यं। स्वरात्परं पूर्वसस्थानमाहुर्नि-रस्तं विसर्जनीयमस्मिन्योगे सत्युभयोरपिपक्षयोः अग्निः वायुः रथीः वधूः इतिसर्वंसिद्धंभवति। किं पुनरत्रयुक्तं। उभयं। कथं। शास्त्रांतरेविधिर्दृश्यते। कंठ्यस्थानौ हकारविसर्जनीयौ उभयस्वरादिसंस्थानोविसर्जनी-यइति तेषां विसर्जनीयः पूर्वसस्थानो भवतीति। त-स्मात्तदपियुक्तम्। इहदोषसमुच्चय प्रकरणे वचनाद्दोषः सइतिनिश्चयः। कथमेतदध्यवसीयते। आचार्यप्रवृत्ति दृश्यते। यथा अनुनासिकपरादूष्मणः परसस्थानयमा-गमो भवत्येकेषां। यथा अक्ष्णेविष्णुरिति। तदिहास्माकं प्रतिषिद्धं परं यमंरक्तं परादघोषादिति तस्मादेतद-ध्यवसीयते।

## कण्ठ्याद्यथारेफवत स्तथाहुः ॥२१॥

दीर्घात्कंठ्यात्परं विसर्जनीयं यथारेफवतऋकारात्परं जिह्वामूलीयं तथानिरस्तमाहुः सदोषः। देवाः मातॄः। दीर्घादिति कस्मात्। देवः सोमः। ह्रस्वात्कंठात्परोवि-सर्जनीयो ह्रस्वसस्थान एव भवति।

## रक्तानुनासिक्यमपो तरस्मात् ॥२२॥

रक्तात्कंठ्याद्घोषीत्परं विसर्जनीयं द्रुतरक्तादपिपरं । कालरक्तात् ऋकारान्नासिक्यमाहुः सदोषः । स्वतवाँः पायुः । नॄँः पतिभ्यः ।

## संयोगादेरूष्मणः पूर्वमाहुर्विसर्जनीयमधिकं स्वरोपधात् ॥३३॥

स्वरोपधात्संयोगादे रूष्मणः पूर्वमधिकं विसर्जनीयमाहुः सदोषः । पावकतेस्तोकास्त्रोतंति । अभिष्याम । संयोगादेरितिकिं । द्विपदेशं चतुष्पदे । मोषुणः । परिसोमः । ऊष्मणइतिकिं तवत्यत् । स्वरोपधादितिकिं । आस्वग्ने ।

## परंयमं रक्तपरादघोषात् ॥ ३४ ॥

ऊष्मणोऽघोषा द्रक्तपरात्परंयमं आहुः सदोषः । पृश्निः विष्णुः । स्नात्वा ।

## ऊष्माणांवाघोषिण स्तत्प्रयत्नं ॥३५॥

घोषिणऊष्मणो रक्तपरात्परं घोषिणं पूर्वतुल्यप्रयत्नं ऊष्माणंयमंवाऽऽहुः सदोषः तंवर्जयेत् वुधः । ब्रह्म । पन्हा २ ।

## शुनश्शेपो निष्षपीश्शोस्मिनिष्षालविक्रमान्ब्रह्मविष्णुस्मपृश्निः ॥३६॥

एते षविक्रमाभवंति । एतेषुविक्रमोविसर्जनीयः संदेषोवर्ण्यः । शुनश्शेपो यमगृभ्णीतः । ज्ञानोम-

येवनिष्यपीपराद्गाः। प्रपार्कंप्रासि प्रदिशोविदुष्टरः। प्रनांशरद्गा ष्टषभोननिष्षाल। षभौ २ दमेकमेको षस्विन्निष्षालभो। ब्रह्मचते जातवेदो नमश्च। इदं वि-ष्णुर्विचक्रमे। कूटंस्मतृंहदभिमातिमेति। आयंगौः पृ-श्निरक्रमीत्।

स्पर्शोष्मसंधीन् स्पर्शरेफसंधी-नभिप्रायांश्च परिपातयंति ॥३७॥

चरतिचक्रे इत्येवमादीन् स्पर्शोष्मसंधीन् इकारो-कारोपहितोद्गति च स्पर्शरेफसंधीन् विवृत्यभिप्रायेषु-चेत्यभिप्रायांश्च परिपातयंति। एतेषुचनुस्वारंकुर्वतो-स्यर्थः। सदोषः। ताँस्त्वश्याम। रश्मीरिव। पावो-चन्नाँरयिहृधः।

स्वरौकुर्वंत्योष्ठनिभौसरेफौति-स्रोमातृस्त्रीन्पितृन्यन्नृभिन्हू-न् ॥ ३८॥

सरेफौ ष्टकष्टइत्येतावोष्ठनिभौ उवर्णसदृशौकुर्वंति सदोषः। तिस्रोमातृस्त्रीन्पितृन्। कर्हिस्वित्तदिंद्रय-न्नृभिर्नृन्।

दंत्यान्सकारोपनिभानघोषा न्व-ध्यः पृथ्वीपृथिवीत्वापृथीति ॥३९॥

दंत्यानघोषान्सकारोपनिभान् सकारसदृशान् कु-

वन्तिसदोषः। रथ्यः। पृथ्वी। पृथिवी। त्वा। पृथ्वी। इत्येवमादिषु। असर्जिरथ्योयथा। उर्वी पृथ्वीबहुले दूरेअंते। इदंविचार्यते। पृथिवीत्वेति त्वा ग्रहणं विशेषणार्थं पृथग्ग्रहणंवेति। कुतः संदेहः। प्रायेणथकारे सकारोपनिभोदोषः सलक्ष्यते न तकारइति विशेषणार्थं मेकेमन्यंते। अपरेथकारस्यैव सदोषः स्यात्। कथं थकारं सकारोपनिभमितिलघीयसासिद्धे यदन्यग्रहणंकरोति तेनपृथग्ग्रहणंमन्यंते। अदितिः सिंधुः पृथिवीउतद्यौः। यत्वासूर्यस्वर्भानुः। पृथ्वीयदांवेन्यः सादनेषु।

ऊष्मांतस्थाप्रत्ययं रेफपूर्वं ह्रस्वं लुंपंत्याहु रथाप्यसंतम्। पुरुषंतिं पुरुवारायमाष्ट्रांहरियोजनायहरियूपीयायां॥ ४०॥

ऊष्मप्रत्ययमंतस्थाप्रत्ययंचरेफपूर्वं ह्रस्वंलुंपंति। नाशयंति। अथवा असंतमविद्यमानं ह्रस्वरेफात्परमाहुरत्वादयंति तौदोषौवर्जयेत्। एतेषु पुरुषंतिमित्यादिषु षट्सु। याभिर्ध्वसंतिं पुरुषंतिमावतं। मन्दोरायः पुरुवारप्रयंधि। पुरुवीराभि वृषभक्षितीनां। अयंमायातयज्ञनः। आष्ट्रांपदं कृणुते अग्निधाने। अतएवञ्चहरियोजनाय। शचीवतोयहरियूपीयायां। अयंमा आष्ट्रामित्येतयोरसंतमाहुरन्येषुलुंपंति।

ऐयेमित्येकारमकारमाहु वैय-

**श्वेचङ्क्रमयंतो यकारं ॥ ४१ ॥**

ऐयेरित्यत्रवेयश्वेचऐकारस्थाने अकारमाहुः परंय-
कारंक्रामयंतः तौदोषौ। ह्वणीयमानो भपश्चिमदैयेः।
वेयश्ववंस्वश्रुतंनरा।

**तदेवान्येषु विपरीतमाहु स्तेर-
ट्यावय्यं हृदय्ययेति च ॥ ४२ ॥**

तद्दोषद्वयमन्यपदेषु विपरीतमाहुः कथं अकारस्था-
ने ऐकारमाहुः परं यकारमक्रामयंतः तौदोषौ। तेर-
य्या। वय्यं। हृदय्यया। इत्येवमादिषु। तेरय्यासंस्त्जं-
तुनः। परिप्रयंतं वय्यसुषंसदम्। अद्यांहृदय्य १ याकृत्या।

**अकारस्यस्थान ऐकारमाहु र्लु-
पंति चसय्यमौकारमुत्तमं। वह्व-
त्तरं द्वाचरतां नयंति यथोनयो-
र्ध्वनयोत्कोशयोरिति ॥ ४३ ॥**

येनसत्त्ववर्ततद्गतिसय: तंसयमौकारं अकारस्यस्था-
ने ऐकारमाहुः सयंईकारंलुपंतिच किन्वान्यत् वह्व-
रं संतंद्यचरतां नयंति एतेनयश्चत्वारोवादोषाभव-
न्ति। जनयोः ध्वनयोत्। कोशयोः। इत्येवमादिषु।
जरितुः काममूनयोः। मात्वाग्निर्ध्वनयोद्धूमगंधिः।
दश्मकोशयोर्दशवाजिनोदात्। ✓

**तदेवचान्यत्रविपर्ययेण कार्यंए-**

त्वे सयमीकारमाहुः । धातोर्विभर्तेर्जयतेर्नियश्चाभैष्मचाजैष्मनैष्टेतिचैषु ॥ ४४ ॥

तदेवसर्वत्रान्यत्रचान्येषु पदेषु कर्तव्यएत्वेविपर्ययेण सकारंकृत्वा सयमीकारमक्षरं असंतमाहुः तेतथैवदोषा भवंति । भिजिनीइत्येतेषां धातूनां प्रयोगे अभैष्म । अजैष्म । नैष्ट । इति । अभैष्मापतदुकृतु । अजैष्माद्यासनामच । दूरंनैष्टपरावतः ।

इकारस्यस्थानऋकारमाहुर्लृकारंवाचंद्रनिर्णिक्सुशिल्पे ॥४५॥

इकारस्यस्थाने क्वचिदृकारमाहुः । चन्द्रनिर्णिगित्येवमादिषु । क्वचित् लृकारमाहुः सुशिल्पं इत्यादिषु । तौदोषौ लक्षयेत् । अतः सहस्रनिर्णिजा । यतरेववचराचंद्रनिर्णिक् । सुशिल्पे बृहतीमही ।

अनंतरेतद्विपरीतमाहुस्तालव्ये शृंगविभृयाद्विवृताः ॥ ४६ ॥

अनंतरेतालव्येसति ऋकारात्पूर्वोवायदिवा तालव्योवर्णोभवति तदातद्विधाने विपरीतमाहुः । यदुक्तं इकारस्यस्थानेऋकारमाहुः । तदिहऋकारस्थाने इकारमाहुः । सदोषोज्ञेयः । यथाशृंगे शिशीतेशृंगे रक्षसेविनिक्षे । यमोर्वमस्वविभृयादिहअस्मि । पाशाना-

द्दिश्यारिपवेविचृताः।

तालुस्थानोव्यञ्जनादुत्तरश्चेदय-
कारस्तत्रयकारमाहुः। शुनश्शे-
पः शास्मिववजुषीणामत्केविर-
पशीतिनिदर्शनानि ॥ ४७ ॥

यकारादन्यस्तालुस्थानो वर्णोव्यंजनादुत्तरोभवति। तत्राविद्यमानं यकारमाहुः। यथा। शुनश्शेपोयमह्वद्गृभीतः। प्रपाकंशास्मि प्रदिशो विदुष्टरः। विशांववर्जुषीणां। आजामिरत्के अव्यत। विरपशीगोमतीमही।

लुंपंति वासंतमेवं टवकारंज्यै-
ष्ठाय सम्वारन्नापृच्छमृभ्वा ॥४८॥

अथक्वचिदेवसंतं कथंसंतं। व्यंजनादुत्तरंमंतं यकारंवकारंवालुंपंति। ज्यैष्ठाय। सम्वारन्। अर्थवशेनार्धं पादः। इत्तवशे ननुरेकगः समित्यादिः पादः अयंहत्तवशेन पादैकदेशोद्रष्टव्यः। आपृच्छ्यम्। ऋभ्वा। इत्येतेषु इद्रज्यैष्ठाय सुक्रतो। सम्वारन्नकिरस्य मघानि। आपृच्छ्यंधरुणं वाज्यर्षति। पुरुहूतोयः पुरुगर्तऋभ्वा।

व्यस्यंत्यंतमंहतो व्यायतंतं दी-
र्घायुः सूर्योदशदीतंऊर्जं ॥४९॥

महतः संयोगस्यांतभूतं महतोदीर्घात्परं अध्याव्यु-

अपृथग्भूतं रेफेनसक्तमित्यर्थः । तमंतस्थं स्यंति रेफात्पृथक्कुर्वन्ति । केनचित्स्वरेण व्यवदधतीत्यर्थः । दीर्घायुः । सूर्यः । ऋषदीर्तिं । ऊर्जं । इत्यादिषु । दीर्घायुत्वायः पतिः । सूर्यीनोदिवस्पातु । पवमानोऋषदीर्त्तांपयोगोः । इषमूर्जच पिन्वसे ।

लुंपंत्यंतस्थां क्रमयंतिचैतां स्वरात्सस्थानादवरां परांवा । स्वस्तयेधायि भुवनेयमूवुः ॥ ५० ॥

लुंपंत्यंतस्थां अथवा क्रमयंति एतांसंस्थानात्स्वरादवरां पूर्वांपरांवा लोपोद्विर्भावस्येति । तौदोषौपरिहरेत् । स्वस्तये । अधायि । भुवना । इयं । ऊवुः । इत्यादिषु । स्वस्तयेवायुमुपब्रवामहै । उपप्रागा त्सुमन्मेधायि मन्म । भुवना । तंसंप्रश्नं भुवनायंत्यन्या । इयंशुष्मेभिर्विसखाइवारुजत् । ऊवुः । इंद्रायार्कंमहिइत्यूवुः ।

रक्तांह्रस्वं द्राघयंत्युग्रंओकः ॥ ५१ ॥

रक्तांह्रस्वंदीर्घं कुर्वंति सदोषः । उग्रँ ओकः इति । यथा विश्वदर्शन तविषीव उग्रँओकः । यथाप्रसूता सवितुः सवायंएव ।

हकारसोष्मोपहिता यकारा हकाराद्वा सर्वसोष्मोष्मपूर्वात् । तत्सस्थानं पूर्वमूष्माणमाहुस्तु-

थ्यान्दध्या आपृच्छ्यमृभ्वाञ्ह्येऽस्थः ॥ ५२ ॥

ऋकारे यासोष्मभिश्चोपहितात् यकाराद्धकाराद्वा सवैर्वर्णभिः सोष्मभिश्चोपहितात्पूर्वं तेषांसमानस्थानं ऊष्माणमाहुः । सदोष: । तुथ्यान् । दध्या: । आपृच्छ्यं । ऋभ्वा । ह्वये । अह्यः । इत्यादिषु । तुथ्यान्कामान्करतेसिष्विदान: । पश्चासदध्यायो अघस्यधाता । आपृच्छ्यंधरुणं वाज्यर्षति । पुरुहूतोय: पुरुगूर्तऋभ्वा । तवदेवाँ उपह्वये । शतचक्रंयो २ह्योवर्तनि: । अह्यो वसिष्व ऋस्व: ।

पकारवर्गोपहिताच्च रक्तादन्यं यमं टप्लुताम्नानमौभ्नात् ॥५३॥

पकारवर्गेणोपहिता द्रक्तादनुनासिकात्पूर्वं अन्यंयममधिकं आहु: । टप्लुत । आम्नानंऔभ्नात् । इत्यादिषुदोषोवर्ज्यः । समुटप्लुत ऋभव: । आम्नानंतीर्थं कइहप्रवोचत् । इह्यान्यौभ्नादुभमामवोज: ।

अनुस्वारमुपधांवान्यवर्णां स्वरोपधात्सोष्मयमोदयश्चेत् ॥ तंहुत्यञ्ज्मोजहूतईह्वयंतीः सञ्ज्ञातरूपोयसञ्ज्म्नानमिन्द्रः ॥५४॥

तत्स्थानं पूर्वमिवाक्षः पूर्वमिवहुवंति । अनुर-

वर्गोपहिताश्चरक्ताद्दित्यतो रक्तपदमनुवर्तते। स्वरोपधाद्र-क्तात्पूर्वमनुस्वारमाहुः। उपधांवाऽन्यवर्णौतौ दोषौपरिहरेत्। रक्ताः सः। सोष्मोदयोवायमोदयोवायद्भिवति त-ड्घन्ति। घन्नः। जड्घ्नः। ईङ्खयंतीः सञ्ज्ञातरूपः। सञ्-ज्ञानमिन्द्रः। इत्यादिषु। नकिष्टङ्घ्नन्त्यन्तितो न दूरात्। गोभिरञ्जमोमदायकम अनन्यस्तुप्रकृतेरितियमोदयत्वम्। पवमानस्यजङ्घ्नतः। ईङ्खयंती रपस्युवः। सञ्ज्ञातरूपश्चि-कैतदस्मै। सञ्ज्ञानमिन्द्रश्चाग्निश्च। एषायोजना येरक्ता-त्पूर्वमनुस्वारं कुर्वंतियेनकुर्वन्तितेपूर्वग्रहणं निवर्त्यस्वरोप-धाद्रक्तात्परमनुस्वारमाहुः। उपधांवान्यवर्णौ कुर्वंति इतियोजनाकर्तव्या। केचिद्रक्तमेवानुस्वारमाहुः तैरेवं-योगः परिवर्जितव्यः। अनुस्वारमुपधांवाऽन्यवर्णौ स्व-रोपधात्सोष्मयमोदयस्येदिति। अस्मिन्पक्षे स्वरोपधं र-क्तमनुस्वारं कुर्वंतीतियोजनकार्या तान्येवोदाहरणानि।

सांतस्यादौ धारयंतः परक्रमं-शर्मन्स्यामास्मिन्सुजनाङ्क्षु धी-यतः॥ ५५॥

सांतस्य संयोगस्यादौ रक्तंधारयंतः विलंबमानाः परक्रमंकुर्वंति। शर्मन्स्याम। अस्मिन्सुजनाङ्क्षु धीयतः इ-तियथा। शर्मन्स्याममरुतामुपस्थे। अस्मिन्स्वे २ तद्रूपू-तपनः। संयावप्रस्थे। अपसेवजनाङ्क्षु धीयतश्चित्।

रक्तैरागः समवायेस्वराणां ननू-

नंनृम्णां नृमणान्नृभिर्नॄन् ॥ ५६ ॥

रक्तौः स्वराणां समवाये रागः क्रियते । ननूनं । नृम्णाम् । नृमणा । नृभिर्नॄन् । इत्यादिषु । ननूनमस्तिनोऽद्यः । नृम्णां तद्वृतमश्विना । नृमणा वीरपस्त्यः । कर्हिस्वित्त दिंद्रयन्नृभिर्नॄन् ।

रक्तात्तु सोष्मा क्रियते हकारो दध्यङ्ह देवान्हवते महान्हि ॥ ५७ ॥

रक्तात्परो हकारः सोष्मा क्रियते । दध्यङ्ह । देवान्हवते । महान्हि । इत्यादिषु । दध्यङ्ह मेऽजनुषं । देवान्हवतऊतये । दत्तसोमहान्हिषः ।

संयोगानां स्वरभक्त्याव्यवायो विक्रमणं क्रमणं वा यथोक्तं । विपर्ययो वाच्यतति ल्विलेऽमन्द्रप्सोऽजुष्प्रन्माज्र्योष्ट्रां प्रनेष्टात् ॥ ५८ ॥

संयोगानां क्वचिदविद्यमानया स्वरभक्त्याव्यवायः क्रियते क्वचिद्विक्रमणं । अविक्रमणं नाम द्विर्वचनाभावः । संयोगस्य च मध्ये क्वचित्स्वरमुत्पादयतीत्यर्थः । क्वचिच्च यथोक्तं क्रमणं क्रियते । क्वचिद्विपर्ययः । विपर्ययो नाम विद्यमानां स्वरभक्तिं न कुर्वन्तीत्यर्थः । इमे चत्वारो दोषाः संयोगस्य भवन्ति । तान्वर्जयेत् । व्यतस्मु-

त्वविक्रमणं तितिक्षते अउमन्नित्येतयोर्हिस्वाभिधानमकृत्वा अनार्योषिता उच्चारयंति । तत्र स्वरभक्त्या व्यवायइव भवति । इत्से विक्रमणमेव । अजुष्मन्नित्यत्र षकारात्परं(१) अकारमिव किंचिदुत्पादयंति । अयथोक्त क्रमणांकुर्वंति । साङ्कृयेत्यत्रविपर्ययः । अष्टां । प्रनेष्ठादित्येतषु च विक्रमणमेव । व्यत । भूरीयोयुत्सु तन्त्रंपरिव्यत । तितिक्षते । भद्रं चेते निमितातितिक्षतेवा । विष्णोवो अउमन्भयते वनस्पतिः । द्रप्सः । द्रप्समस्कंदप्रथमाँ अनुद्यून् । स्वसारः श्यावीमरुषी मजुष्मन् । भरद्वाजान्साङ्कृयो अभ्ययष्ट । अष्टांपूषाशिथिरामुद्वरी हजत् । प्रदेवं । देववीतये । नेष्टात्सोमं द्रविणोदः पिवऋतुभिः ।

## विवृत्तिषु प्रत्ययादे रदर्शनं यथायाऐक्ष्व यऔशिजस्य ॥ ५९ ॥

विवृत्तिषु प्रत्ययादे रदर्शनंलोपः क्रियते सदोषः । यथा । याऐक्षः । इमागावः सरमेयाऐक्षः । कक्षीवंतंयऔशिजः ।

## इउसंधौसंध्यवचनं च कासुचित्सहृदस्ताकस्तउषोयथैते ॥६०॥

इउइत्येतयोः संधौकासुचिद्विवृत्तिषु संध्यक्षरवचनं प्रत्ययादर्शनंच क्रियते तौदोषौवर्जयेत् । यथा । सहृदस्ता । सहृदस्तेवप्रतिधादसिष्यन् । सहूद्रश्चिदभि । कस्तउषः कधप्रिये । तउषस्तायरथिममभिप्रतस्थुः ।

(१) उकारमिवकिंचिदुत्पद्यते इत्यपिपाठः ।

## समानवर्णासु विपर्ययोवा यथा-
## च्यूतौ इंद्रकआसतश्च ॥ ६१ ॥

समानवर्णासु विवृत्तिषु कासुचिद्विपर्ययः क्रियते । प्रत्ययादेर्वाऽदर्शनं । कोविपर्ययः पूर्वोवर्णः परःक्रियते परश्चपूर्वः सविपर्ययः । तौदोषौलचयेत् । ऊतीइंद्र । कआसत इतियथा । यानस्तुत उपवाजेभि हतौ-इंद्र । अक्षायो गंताना धमानमूतोइत्या । कआसतो वचसः संति । तत्रागमंतुतद्रूक्त ।

## अभिव्यादानेच विवृत्तिपूर्वं क-
## राठोरताआपोवसाणति दीर्घे ॥ ६२ ॥

विवृत्तिः पूर्वो अस्मात्सविवृत्तिपूर्वः । तस्मिन्विवृत्तिपूर्वे कराठरयेद्दीर्घेप्रत्ययेइति । यत्र सप्तमीनिर्द्देशोविज्ञायते कआसतइत्येवमादिष्वभिव्यादानमेवस्यात् । सतत्रविपर्यय उक्तः समानवर्णासु विपर्ययो-वेति । तस्मात्सप्तमीनिर्द्देशः कथं । विवृत्तिः पूर्वा यस्मादक्षराद्विवृत्तिपूर्वमक्षरं विवृत्तेः पूर्वमपिविवृत्ति-पूर्वं तत्रभेकराठरदीर्घे यदाभवत स्तदा कासुचिद्वृत्तिष्वभि-व्यादानंइति । व्यादानमारंभः विविधंविपुलंविशा-लंवा दानं अथवाव्यादानमेवव्यादानं यथवाकेन-चिदभिव्याप्त मभिभूतं व्यादानंयस्य तदिदमभिव्यादानं भवत्यक्षरं । किमुक्तंभवति । पाद माबाविवृत्ति रि॰ समधिकाक्रियते । तयाप्रव्यारंभोव्याप्यतइत्यर्थः ।

क्त । ताआपः । अवसाया । इत्येवमादिषु । ताया- पोदेवी रिहमामवंतु । स्वस्वागृहेभ्य आवसायाविमो- चनात् । थाआपोदिव्याः । तायाचरंति । तेदोषाः । तत्रश्लोकः । अभ्रमध्ये यथाविद्युदृश्यते मणिसूत्रवत् । एषच्छेदोविहत्तीनां यथाबालेषुकर्त्तरि ।

## नदोषाणां स्वरसंयोगजाना मं- तोगम्यः संख्ययाथेतरेषां ॥ ६३ ॥

एषांदोषाणां स्वरसंयोगजानां स्वरेषूच्यमानेषु उ- त्पद्यंते तषामित्यर्थः । अथेतरेषां स्वरसंयोगजानां सं- ख्ययागणनया अंतः पारंगंतुमशक्यं । कस्मात् । उ- च्चावचाः प्रयोक्तारः नानास्थानकरणानुप्रदानस्वरो- च्चारणाः तथा नानाप्रतिस्वरभावशीलसमाचाराः केषु वर्णेषु कान् जनयंतीत्यज्ञानात् ।

## शक्यस्तुशास्त्रादधि साधुधर्मायु- क्तेन कृत्स्नः प्रतिपत्तु मस्मा- त् ॥ ६४ ॥

अस्माच्छास्त्रादधि वर्णानां कृत्स्नोवर्णधर्मः साधु- युक्तः । सावयताकृत्स्नेनसाधुधर्मयुक्तनप्रतिपत्तुंशक्यः साधुयुक्तोनाममनो वाग्बुद्धियुक्तः । तत्वार्थशिक्षालक्षण- वित् । ऊहापोहवितर्कज्ञः । शास्त्रागमकुशलः । ध्या- नपरोऽवितथाध्यवसायी ।

अकारस्यकरणावस्थयान्यान्स्व-
रान्ब्रूयात् । अऋइउ एवमा-
द्यान्स्वरान्ब्रूयात् ॥ ६५ ॥

तद्विसंपन्नमाहुः । अकारस्यकरणावस्थया अऋइ-
ईउऊ इत्येवमाद्यानपिस्वरा न्ब्रूयात्तद्विसंपन्नं भवति ।

परानकारोदयवद्विवक्षेत् सर्वंच-
वर्णानिति संपदेषा ॥ ६६ ॥

परान्ककारादीन्यपि व्यंजनानिव्यंजनसंज्ञकान्वर्णा-
न् अकारोदयवदकारोदयानितिविवक्षेदक्रुमिच्छेत् । सर्वे-
ववर्णानित्याहु राचार्याः । ककाकिकीकुकूइति यथा ।
संपदेषावर्णानां । सासंपद्भाभ्यांपटलाभ्यांव्याख्याता ।

शास्त्रापवादा त्प्रतिपत्ति भेदा-
न्निंदंत्यशक्तेतिच वर्णशिक्षां ॥६७॥

शास्त्राणामपवादाद्दोषाः संति । पुनरुक्तता अ-
विस्पष्टतार्था कष्ट शब्दतार्था अशक्यार्थतेति । एवमा-
दयः । तेष्वशक्यादिषुदोषेषु अस्मिंछास्त्रे संहितमप्ये-
काक्षरं यथोच्चारयितुं नशक्यं अस्माच्छास्त्रादपवादात् ।
प्रतिपत्तिभेदात् । प्रतिपत्तिभेदाच्च निंदंत्यशक्त्येतिच
वर्णशिक्षां । किमिति । अशक्त्येत्यप्रयोजनेत्यर्थः । प्र-
तिपत्तिभेदोनाम आहुर्घोषंघोषवतामकारमित्युक्ता अ-

श्रोत्यन्नास्वपर ऊष्मघोषा वित्येवमादीनां वर्णप्रतिपत्ति-भेदो विरुद्धविधानानि ।

**नैतेन शास्त्रेण विशिष्यतेन्यैः कृ-त्स्नं च वेदांगमनिंद्यमार्षं ॥६८॥**

यदुच्यते इह यथोक्ततथा वर्णोच्चारणं कर्तुमशक्यं त-स्मादकृत्स्नेयं वर्णशिक्षेति तन्न । कथं शिक्षा एतेने-वविधानेनान्यैः शास्त्रै र्नविशिष्यते । अन्येष्वपि शास्त्रे-षु हि ग्रस्तनिरस्त इत्यादयो वर्णानां दोषा विधीयंते । ता-नि च शक्यार्थविधानात् । अकृत्स्नानीति नोच्यंते ता-नि च कृत्स्नान्येव भवंति तस्मादिदमपि शास्त्रं कृत्स्नं संभवि-तुमर्हति । प्रतिपत्तिभेदश्च न । अन्येष्वपि शास्त्रेष्वेवं विधा विकल्पाः संति । तस्मादनिंद्यं षडंगवत् । षट्-सु वेदांगेषु इदमप्येकं अंगं कल्पो व्याकरणं निरुक्तं शि-क्षा छंदो विचितिर्ज्योतिषामयनं इति । तस्माच्चानिंद्यं आर्षं च वेदांगशास्त्रं । आगमश्च लोके प्रमाणं भवति । तस्माच्चानिंद्यमपि च । अत्र श्लोकाः । (उक्तोदाहरणं किंचि द्बहुग्रंथधरो नरः । आक्षिप्तः शैक्षिकेणेह तृणाग्नि-रिव शाम्यति ॥ १ ॥ सुबहुग्रंथविद्योभूत्वा शिक्षां चेन्ना-धिगच्छति । न राजति सभायां स शैक्षिकस्य समीपतः ॥२॥ ब्राह्मणेषु समेतेषु विद्वत्सु च बहुष्वपि । नक्षत्रेष्विव पूर्णेन्दुः शैक्षिकः सुविराजते) ३ ॥

**इति श्री पार्षदव्याख्याया मानं-**

दग्रुरवास्तव्यवज्रटपुत्रोव्व-
टकृते प्रातिशाख्यभा
ष्ये चतुर्दशंपटलं
समाप्तम्॥

पारायणंवर्तयेद्ब्रह्मचारी गुरुः-
शिष्येभ्यस्तदनुव्रतेभ्यः। अध्या-
सीनोदिशमेकां प्रशस्तां प्राची-
मुदीची मपराजितां वा॥ १॥

पारायणमध्यापनं। वर्तयेत् कुर्यात्। गुरुरुपा-
ध्यायः ब्रह्मचारीभूत्वातावंतंकालं शिष्येभ्यस्तदनुव्रतेभ्य-
गुरौ अध्ययनेचयेभक्ताः तेभ्यः प्रशस्तां एकां दिशंम
ध्यासीनः। प्राचींपूर्वां उदीचीमुत्तरां अपराजितां वा
प्रागुदीचीम्।

एकः श्रोतादक्षिणतो निषीदे-
द्द्वौवा॥ २॥

एकःश्रोताशिष्यः दक्षिणतः निषीदेत्। उपविशे:
दित्यर्थः। यदिद्वौश्रोतारौ स्यातां दक्षिणतएवनिषीदेतां।

भूयांसस्तुयथावकाशं॥ ३॥

भूयांसः बहवः श्रोतारो यदिस्युः यथावकाशं यत्र-
यत्रावकाशं तत्रतत्रनिषीदेयुः।

तेधीहिभो३ इत्यभि चोदयंति गुरुंशिष्या उपसंगृह्य सर्वे ॥ ४ ॥

तेसर्वेशिष्याः उपसंगृह्य गुरोः पादौ पाणिभ्यां उपपीड्यशिरसिकृत्वा अधीहिभो ३ इत्यनेन गुरुमभिचोदयंति ।

सओ ३ मितिप्रस्वरति त्रिमात्रः प्रस्वारस्थाने सभवत्युदात्तः । चतुर्मात्रोवार्द्धपूर्वोनुदात्तः प्रथमात्रोवाभवति द्विःस्वरःसन् ॥ ५ ॥

सगुरुः ओं ३ इति प्रस्वरतिशब्दंकरोति । त्रिमात्रः प्रस्वारः सओंकारशब्दः त्रिमात्रः स्थाने भवति उदात्तश्च । किमिदंस्थानमिति । उपांशुस्थानमिति । उपांशुस्थानंनिषादपंचममध्यमतारेषु तेयेनस्थानेनप्रयोज्यंस्यात् तेनैवप्रकारेण प्रणवंकुर्यात् । तान्येतान्युक्तानि भवंति । अथवा चतुर्मात्रः संभवति । अर्द्धपूर्वः अनुदात्तोयस्यसअर्द्धपूर्वोनुदात्तः । अथवाप्रथमात्रो भवतिद्विःस्वरःसन् इमेत्रयः प्रणवाः । तेषामाद्योवहुभिः परिगृहीतः । न मध्यमः । किमितिनज्ञायते । अन्याभिस्तु उत्तममंत्यंमत्वातथापद्यते । .

अध्येतुरध्यापयितुश्च नित्यंस्वर्गद्वारं ब्रह्मवरिष्ठमेतत मखंस्वा-

ध्यायस्य भवेत् ॥ ६ ॥

अध्येतुः शिष्यस्याध्यापयितुश्च मुखं नित्यं प्रणवो भवति। स्वर्गद्वारं वरिष्ठं प्रधानं ब्रह्मेत्येतदक्षरं प्रतीयात् जानीयात्।

मुखमादौ स्वाध्यायस्य भवेत्तद्ब्रह्म। नचैतत्संदध्यात्स्वाध्यायगतं परेण ॥ ७ ॥

एतदोंकारं स्वाध्यायार्थं प्रयुक्तं परपादेन वाक्यवचनेन वा नसंदध्यात्। यज्ञकर्मणि तु संधानं भवति चोदितत्वात्।

प्रचोदितोऽभिक्रमते यथास्यक्रमः परस्ताद्विहितस्तथैव ॥ ८ ॥

तथा शिष्यस्य प्रचोदितो गुरुः ओङ्कारं कृत्वा अभिक्रमते। अध्ययनमुच्चारयति। यथा अस्यक्रमः आनुपूर्व्यं परस्तादुत्तरत्र विहितं दक्षिणाय प्रथमं प्रश्नमाहेति तथैव।

सर्वोदात्तं विहृतस्मिन्नपृक्तमक्षिप्रयुक्तं विरूपस्थितं वा ॥ ९ ॥

इहपारायणप्रवचने तस्मिन्नभिक्रमे सर्वोदात्तं च यत्पदं अक्षिप्रयुक्तं वा अपृक्तं वा उपस्थितं वा। शिष्यज्ञापनार्थं गुरुर्विहृत्योच्चारयति। प्र। चा। रोदसीइति। उभेइति। यथा। अक्षिप्रयुक्तमिति कस्मात्। उइति। एवमेकेष-

परे उङ्गादाकारयोः । अपि सर्वोदात्तमित्येव सिद्धत्वा-त् । अपृक्तमस्विप्रयुक्त मित्यनर्थकं भवति । तस्मात्स्वा-मंतरेण वर्णयंति । उङेति । यथाऽपृक्तं सन्नचैप्रयुक्तं-इति । ननु अत्रापि उपस्थितमित्येवसिद्धं । सत्यं । नियमार्थमिदमुच्यते । इहमाभूत् । क्व । उङ्ङेति । उङ्-यदेव इत्येवमादौतु नियमः स्यात् । अथवा उपस्थितंवेति उपस्थितविभाषाप्राप्ते नित्यार्थमस्य ग्रहणं । अपृक्तम स्विप्रयुक्तमिति । ९ ।

## अभिक्रांतेद्वैपदेवाधिकेवा पूर्वंप-दंप्रथमः प्राहशिष्यः ॥ १० ॥

गुरुणाद्वैपदेवाधिकेवा प्रोक्तेपूर्वंपदं प्रथमाद्यंपदं प्रा-हदक्षिणः शिष्यः ततः पश्चादितरे प्राहुः । अस्मि-न्पटलेयदुक्तं विधानं तेनदक्षिणाख्याः पठंति तस्मादिष्ट-ज्ञापनत्वाभिप्रायेणकिंचिदुक्तंमत्वातत्कस्मिंश्चिच्चनइति ।

## निर्वाच्येतु भो ३ इतिचोदना-स्या न्निरुक्तं ओंभो ३ इति-चाभ्यनुज्ञा ॥ ११ ॥

शिष्येणनिर्वक्तव्ये गुरोः भोः ३ इतिचोदनास्यात् तेननिरुक्ते ओंभो ३ इतिचार्थं पुनर्गृहीतमावर्तयितु मभ्यनुज्ञास्यात् ।

## परिपन्नं प्राकृतमूष्मसंधिं नका-

रस्य लोपरेफोष्मभावं । असं-
युक्तमपदं रेफसंधिं विवृत्तिमि-
त्यत्र निदर्शनानि ॥ १२ ॥

परिपन्नंत्वं राजेंद्रेत्यादि । प्राकृतमक्षरं ऊष्मसंधौ । अग्निश्चयः । यस्त्वेमन्योयः शंवरं पर्वतषु । नकारलोपभावं । अस्मा अस्माँ इत् । रेफभाव । रश्मीँ रिव । अभीषूँ रिव । ऊष्मभावः पशून्ताँश्चक्रे । तांस्त्वमश्याम । नृःपात्रं । असंयुक्तं । तववायवृतस्पते पदं । यन्नृभिन्नृ-न् । रेफसंधिं । अन्तर्वावित् । अग्नीरक्षांसि । विवृत्तिं मह्रूपाहि । इत्येतानि निदर्शनान्याहुराचार्याः । क्षस्यनिदर्शनानीत्येतदागमयितव्यं । केचिदेतं श्लोकं नपठंति ।

प्रत्युच्चार्यैतद्वचनं परस्यशिष्य-
स्यस्याद्भो ३ इतिचोदनावा ।
अर्धर्चादिकेषु तुवर्जयेयु रध्या-
यान्तेषूभययथास्मरंति ॥ १३ ॥

प्रत्युच्चार्यैतद्वचनं परस्यगुरोरित्यर्थः । शिष्यस्याद्भो ३ इतिचोदना स्यात् । नवास्यात् । अर्धर्चादिकेषु अर्धर्चसमयेषु तांचोदनां वर्जयेयुः । अध्यायांतेषु पर्धर्चादिकेषु उभययथाक्षरं स्याचार्याः वर्जनंवानवेति ।

गुरुः शिष्यस्यपदमाद्यमुख्यं स-

मासश्चेदसमासो यदिङ्गे ॥ १४ ॥

गुरुः शिष्यस्य प्रश्ने मुख्यं एकपदमाह यदिसमासः यद्यसमासः इङ्गेपदेप्याह ।

एतेनकल्पेन समाप्यप्रश्नं प्र-
त्याम्नायुस्तम्पुनरेवसर्वे ॥ १५ ॥

एतेनविधानेन प्रश्नंसमाप्य सर्वेशिष्या स्तमेव प्रश्नं-पुनः पुनरभ्यासयेयुः ।

ततऊर्ध्वंसन्ततंसंहितेनप्रविग्र-
हेण मृद्ववग्रहेण । सर्वोदात्तेन
चचर्चयेयुः सर्वइमानुपस्थापयं-
तः पदानि ॥ १६ ॥

तस्मादभ्यासादूर्ध्वंमंततं अव्यवस्थितं संहतं समानं । समानशब्देन प्रविग्रहेण सप्रश्लिष्टः यस्मिन्संभवति स-प्रविष्टः । इंद्रोइत्येवमादिषु प्रविग्रहेषु प्रश्लिष्टं वि-श्लिष्टं कुर्यात् । कालाधिक्येनकुर्यादित्यर्थः । मृदवः अ-वग्रहायस्मिन्सम्हवग्रहः तेनसर्वोदात्तेनस्वरेण चर्चये-युः । आदिपदिकाश्चोत्तरपदिकाश्च भूत्वा सर्वेशिष्या-स्तमेवप्रश्नं । इमानिपदानि । यानिवक्ष्यामः तान्युप-स्थापयंतः सेतिकरणानिकुर्वन्तइत्यर्थः ॥

अभ्यस्तपरानिर्व्यपसम्प्रति प्रयक्ष्य-

त्यपादुःस्वपिपर्यवानु ॥ १७ ॥

अभि । उत् । परा निः वि० उप । सं । प्रति । प्र । नि । अधि । अति० अप० आ० दुः । सु । अपि । परि । अव । अनु० इत्येतानिपदानि केषांचिच्छाखिनां सेतिकरणा-निभवंति । उदिति । परेति । अस्माकंतुनपुनः यानि सेतिकरणानि तेष्वेवायंविधिः कर्त्तव्यः ।

आद्यंस्थितोपस्थित मेकमेषाम-ईर्चांते कुर्युरथोद्विपद्यौ ॥ १८ ॥

तेषामुपसर्गाणा माद्यमभीत्येकमुपसर्गं मर्ईचांतेवर्त-मानंअथोद्विपंधौ वा विहृत्तिस्थाने स्थितोपस्थितं कु-र्युः तेषामेवशाखिनां । अभीत्यभि ।

चद्यह्विवेतिच्च सर्वंचतेषामनेकं-चेत्संनिपते द्वितीयं ॥ १९ ॥

चद्यह्विवेत्येतानि सर्वंत्वस्थितोपस्थितानिकुर्युः चेतिच तेषामुपसर्गाणां अभ्यादिः वांतानांयद्यनेकं संनिप-तेतर्हि द्वितीयमेवसेतिकरणं कुर्युः । नेतरत् । उदिति ।

समस्यंतश्च द्विपदाद्यईर्चौ व्यव-स्यंत इतरांश्चर्चयेयुः ॥ २० ॥

पश्वानतायुमित्येवमादीनां द्विपदानां उक्तानां द्वौ-द्वौअर्ईर्चौएकाभृचंकुर्वन्तः । व्यवस्यंतः पृथक्कुर्वन्तः इत-

रात्रधिकाया: सुक्तोषुसाधुर्नगृभुरिति यथातास्तथैव प्र-
वर्त्तेयु: । आदित्यरुखाद्दादिपदस्यैतदुच्यते ।

दक्षिणायप्रथमं प्रश्नमाहप्रद-
क्षिणं ततऊर्ध्वंपरीयु: ॥ २१ ॥

दक्षिणायशिष्याय प्रथमंप्रश्नमाह गुरु: ततश्चाध्यय-
नारंभादूर्ध्वंकश्चित्गच्छंत: शिष्या: प्रदक्षिणमाचार्यंकृ-
त्वा परीयु: प्रदक्षिणादृत्ती: परीयुरितिवायोजनीयं ।

एवंसर्वे प्रश्नशोध्यायमुक्त्वोप-
संगृह्या तिसृष्टायथार्थम् ॥ २२ ॥

एवमेतेनविधिनाप्रश्नश: सर्वेशिष्या अध्ययनांतंग-
त्वा उपसंगृह्यगुरुं तेनातिसृष्टायथार्थं यथार्था: स्यु: ।
यद्गुरुस्यकर्मतत्तत्कुर्युरित्यर्थ: किमिदंप्रश्नइति ।

प्रश्नस्तृच: ॥ २३ ॥

तृच: । प्रश्नइत्युच्यते ।

पंक्तिषुतुद्व्यृचोवा ॥ २४ ॥

पंक्तिषुक्षुद्व्यृचोवाप्रश्नोभवति तृचोवा ।

द्वेद्वेत्वपंक्तेरधिकाक्षरेषु ॥ २५ ॥

त्रिष्टुभादिषु तस्याद्वेद्वे एवऋच: प्रश्नोभवति ।

एकाचसूक्तं ॥ २६ ॥

एकाप्यृक् यत्सूक्तंभवति । साचप्रश्नोभवति ।

समयास्त्वगण्याः परावराद्याः ॥ २७ ॥

समयाः परावराद्याः प्रश्नेषु गण्यंते ।

द्विपदे यथैका ॥ २८ ॥

द्विपदे यथा एकाऽऽत्मक् तथा गण्यंते ।

सूक्तस्य शेषोल्पतरो यदि स्यात्पूर्वं सगच्छेत् ॥ २९ ॥

एवं प्रश्नेषु परिकल्प्यमानेषु सूक्तस्य शेषं यदि अल्पतरं स्यात् । प्रश्नात्पूर्वं सप्रश्नो गच्छेत् ।

यदि तु दृचो वा ॥ ३० ॥

यदि सूक्तस्य शेषो दृचो भवति । पूर्वं प्रश्नं गच्छेद्वा न वेति । पंक्त्याः प्राक् छंदसः दृचं पूर्वमेव गच्छेत् । यदि पराणि पंक्त्या स्युः । तदा पूर्वं न गच्छेत् । यदि मिश्राणि स्युः पंक्त्यां तर्हि क्वचित्पृथक्स्थात्पूर्वं गच्छेद्वा संख्यावशेन ।

ते षष्टिरध्याय उपाधिका वा सूक्ते समाप्ते यदि ते समाप्ताः ॥ ३१ ॥

ते प्रश्नाः एवं गण्यमानाः एकैकस्मिन्नध्याये षष्टिर्भवंति । उपाधिका वा भवंति । सूक्तेषु समाप्तेषु यदि ते प्रश्नाः समापयंति यदि षष्टिः पूर्णा भवंतीत्यर्थः । तदा यावद्भिः प्रश्नैः सूक्तशेषः समाप्यते तावद्भिरधिका

षष्टिर्भवंति । एवंप्रायेणसर्वंचयुज्यते । क्वचित्सूक्ते समा-
प्तेइति । शतधारमिति । जातिपक्षणं द्रष्टव्यं । सूक्ते-
षुसमाप्तेष्विति । यथाचतुः षष्टिरध्यायाः ।

भो ३ इत्यर्द्धर्चेगुरुणोक्तआह
शिष्य ओं भो ३ इत्युचिता ऋ-
चं च ॥ ३२ ॥

अध्यायस्यांत्ये अर्द्धर्चेसमाप्तेभो ३ इति गुरुणा-
उक्तः शिष्यः ओं भो ३ इत्याह । चार्थेवाढंयुष्मदनुध्या-
नात् समाप्तमित्यर्थः । उक्तांचऋचमाह । उचितास्यात्
तथा नमोब्रह्मणेनमोस्त्वग्नय इति यानित्यं स्वाध्यायेप-
रिधानीया ऋक्स्यात् ।

अथैकेप्राहुरनुसंहितं. तत्पारा-
यणे प्रवचनंप्रशस्तं ॥ ३३ ॥

अथैकेआचार्याः प्राहुः । एतदेवपारायणस्यप्रवचनं
अनुसंहितं । संहिताक्रमेण प्रशस्तंइति ॥ ३ ॥

इति श्री पार्षदव्याख्याया मा-
नंदपुरवास्तव्यवज्रटपुत्रोव-
टकृते प्रातिशाख्यभाष्ये
पंचदशं पटलम् ।

गायत्र्युष्णिगनुष्टुप्च बृहतीच प्रजापतेः। पंक्तिस्त्रिष्टुब्जगतीच सप्तछन्दांसि तानि ह। अष्टाक्षरप्रभृतीनि ॥ १ ॥

गायत्री। उष्णिक्। अनुष्टुप् बृहती पंक्तिः। त्रिष्टुप् जगती। इत्यष्टाक्षरप्रभृतीनिसप्तछंदांसि तानिप्रजापतेर्वेदितव्यानि।

चतुर्भूयः परंपरं ॥ २ ॥

यथापरंपरं तेषु छंदःसु पूर्वस्मात्पूर्वस्माच्छन्दसः उत्तरमुत्तरं चतुर्भिरक्षरै भूयोभवति।

दैवान्यपिच सप्तैव ॥ ३ ॥

देवानामपि सप्तछंदांसिभवंति -

सप्तचैवा सुराण्यपि ॥ ४ ॥

आसुराण्यपि सप्तैव छंदांसि भवंति।

एकोत्तराणिदैवानां न्यैवैकाक्षरादधि ॥ ५ ॥

तान्येवगायत्र्यादीनि एकाक्षरप्रभृतीनि एकोत्तराणि देवानांभवंति।

एकावमान्यसुराणां ततः पंच-

दशाक्षरात् ॥ ६ ॥

तान्येवपंचदशाक्षरप्रभृति चेमानि एकावमानि ए-
कैकन्यूनानि असुराणांभवंति ।

तानित्रीणि समागम्यसनामा-
नि सनामतत् । एकंभवत्यृषि-
छंदस्तथागच्छति संपदं ॥ ७ ॥

तानिप्रजापति देवासुराणां छंदांसि समाननामा-
नितानित्रीणि समागम्य सङ्घभूत्वा सङ्घभूतानां सना-
मतदेकं ऋषिछंदोभवति । तथाकथं । प्रजापतेर्गायत्र-
मष्टाक्षरं देवानामेकाक्षरं असुराणांपञ्चदशाक्षरं ।
तानिचतुर्विंशतेः चतुरुत्तराणिभवंति । एवंसर्वाणि-
छंदांसि संपदंगच्छंति

एवंत्रिप्रकृतीन्याहु र्युक्तानिच-
तुरुत्तरं । ऋषिछंदांसि ॥ ८ ॥

एवंकथंयुक्तानि समाननामानि सनामेतिच त्रि
प्रकृतीनि ऋषिछंदांसि चतुरुत्तराण्याहुः ।

तैः प्रायोमंत्रः श्लोकश्चवर्त्तते ॥९॥

तैर्ऋषिछंदोभिः प्रायेणमंत्रोनुवर्त्तते श्लोकश्च । १ ।

तत्पादोयजुषां छंदः साम्नांतु-
द्वावृचां त्रयः ॥ १० ॥

तत्पादस्तेषां ऋषिछंदसां चतुर्थोंशः यजुषांछंदोवेदि-
तव्यं । साम्नांछन्दो द्वौपादौवेदितव्यौ । ऋचांछंदः त्रयः
पादावेदितव्यं ।

गायत्र्यादि जगत्यंतमेकद्वित्र्या-
धिकंतु तत् । आर्षवत्तत्समा-
हारो ब्राह्मोवर्गः षडुत्तरः ॥ ११ ॥

तानिछंदांसियजुः सामऋचांगायत्र्यादिजगत्यंतानि
क्रमेणएकद्वित्र्यधिकानि भवंति । कः क्रमः । यजुषां-
गायत्रीषडक्षरा । उष्णिक्सप्ताक्षरा । तथासाम्नांद्वा-
दशाक्षरागायत्री उष्णिकचतुर्दशाक्षरा । तथा ऋचा
मष्टादशाक्षरागायत्री । उष्णिगेकविंशत्यक्षरा । इति
एवंमवेत्त । तत्समाहारस्तेषां ऋग्यजुः साम्नांछंदसां-
समाहारः आर्षवत् । ऋषिछंदोवत् द्रष्टव्यः । सब्राह्मः
ब्रह्मणोयंवर्गगणः षडुत्तरोवेदितव्यः ।

तुषट्त्रिंशद्गायत्रीब्र
ह्मणोमिता । यजुषांषड्चां त्रिः
षट्साम्नां द्वादशसंपदि ॥ १२ ॥

कथं यद्ब्रह्मणोगायत्रीषट्त्रिंशदक्षरा भवतीति म-
न्यसे तच्छृणु । यजुषांगायत्रीषडक्षरा । ऋचांत्रिः षट् ।
अष्टादशाक्षरेत्यर्थः । साम्नांद्वादशाक्षरा । एवांसंपदि
षट्त्रिंशदक्षरा भवति ।

ऋषीणांतु त्रयोवर्गाः सप्तका-
एवनेतरे ऋषिछंदांसि ॥ १३ ॥

प्रजापतिप्रभृतीनि छंदांसिव्याख्यातानि । तेषुऋ-
षिछंदांसि । सोदाहरणानि विस्तरेणवक्ष्यति ।

गायत्री साचतुर्विंशत्यक्षरा । अ-
ष्टाक्षरास्त्रयः पादाश्चत्वारोवाष-
डक्षराः ॥ १४ ॥

तेषु गायत्रीचतुर्विंशत्यक्षरास्यात् । तस्या अष्टाक्षराः
त्रयः पादाभवंति । अग्निमीळे पुरोहितं । षडक्षरा
वाचत्वारः पादाभवंति । इंद्रः शचीपतिर्बलेन व्री-
ळितः । दुश्च्यवनो वृषा समत्सुसासहिः । इतिषडक्षरा-
याउदाहरणं ।

पंचकाः पंचषड्वांत्यः पदपंक्ति-
र्हिसाभुरिक् । द्वौवापादौचतु-
ष्कश्चषट्कश्चैकस्त्रिपंचकाः ॥१५॥

पंचाक्षराः पंचपादाभवंति यस्याः साभुरिक्पदपं-
क्तिर्वेदितव्या । षडक्षरोवा अंत्यः पादोभवति चत्वा-
रश्चपंचकाः साभुरिक्पद पंक्तिर्वेदितव्या । द्वौपादौएकश्च
तुष्कः एकः षट्कः त्रयश्चपंचाक्षराभवंति ।

अधाह्यग्नेतिच दृचौघृतमग्ने-

तमित्यृचः ॥ १६ ॥

अथाहींद्रेतितृचौ । इतमग्नेतमद्य । इत्येतास्वृच: । तासामुदाहरणानि भवंति । अथाह्यग्ने । इंद्रतिषोडशिनस्तोविग्र: । इंद्रजुषस्व । प्रवहायाहि । असुरहरोह । पि वासुतस्यमतिर्न । मध्वश्चकान: । चारुमदाय । एवमष्टाक्षरै विंनापंचका: पंचपादाभवंति । इतंनपूतं । अग्नेतमद्य ।

अष्टकोदशकः सप्तकोविद्वांसाविति साभुरिक् ॥ १७ ॥

अष्टक: प्रथम: पाद: उत्तरोदशक: अंत्य: सप्तक: साभुरिक् । उदाहरणं विद्वांसाविहुर: पृछेत् ।

युवाकुह्णीतिगायत्री त्रय: सप्ताक्षराविराट् । सैषापादनिचृन्नाम गायत्र्येवैकविंशिका ॥ १८ ॥

युवाकुह्शचीप्रनामित्येषा त्रिं: सप्ताक्षरागायत्री एवंविराट् एकविंशत्यक्षरापादनिचृन्नामवेदितव्या ।

षट्क: सप्तकयोर्मध्ये स्तोतॄणांविवाचीति । यस्या: सातिनिचृन्नाम गायत्रीद्विदंशाक्षरा ॥ १९ ॥

सप्तकयोर्मध्येषट्कः पादः साअतिनिचृन्नामविंशत्यक्षरागायत्री । पुरूतमंपुरूणांस्तोतृणां ।

षट्कसप्तकयोर्मध्येस्तु द्यासावातिथिं । षडक्षरः प्रकृत्यैषव्यूहेनाष्टाक्षरोपि वा ॥ २० ॥

प्रकृत्या एषषडक्षरः अक्षरव्यूहेनअष्टाक्षरः षट्कसप्तकयोर्मध्ये । साचगायत्री अतिनिवृदेव । प्रेष्ठमुप्रियाणामिति । ३ ।

उत्तरोत्तरिणः पादाः षटसप्ताष्टावितित्रयः । गायत्रीवर्द्धमानैषा त्वमग्नेयज्ञानामिति ॥ २१ ॥

उत्तरोत्तरिण एकैकाक्षरेणवर्द्धमानाः त्रयः पादाषट्सप्ताष्टाक्षराः यस्याः सागायत्री वर्द्धमानानामवेदितव्या । त्वमग्नेयज्ञानां ।

अष्टकौमध्यमः षटकएकेषा सुपदिश्यते ॥ २२ ॥

एकेषांशाखिनां आद्यंतौ अष्टकौ पादौ मध्यमः षट्कः यस्याः सावर्द्धमानैव उपदिश्यते ।

सनोवाजेषु पादौद्वौजागतौ द्विपदोच्यते ॥ २३ ॥

यनोवाजेष्वविता पुरूवसुरिति आगतौपादौद्विपदागायत्रीउच्यते।

आद्यात्यौसप्तकौ यस्या मध्ये-
चदशकोभवेत्। यवमध्याच-
गायत्री ससुन्वद्भूतिदृश्यते॥२४॥

आद्यांत्यौपादौसप्तकौयस्याः मध्येचदशको भवेत्। यवमध्यानाम सागायत्रीवेदितव्या। ससुन्वेयोवसूनां।

षडक्षरः सप्ताक्षरस्ततएकाद-
शाक्षरः। एषोष्णिग्गर्भागायत्री
तामेअग्नव्यानामिति॥२५॥

षडक्षरःप्रथमःपादः ततोद्वितीयः सप्ताक्षरः तृतीयः एकादशाक्षरःयस्याः एषाउष्णिग्गर्भानामगायत्रीवेदितव्या। तामेअग्नव्यानांकरीर्थां नितोशना।

अष्टाविंशत्यक्षरोष्णिक्सापादै
वर्ततेत्रिभिः। पूर्वावष्टाक्षरौ-
पादौ तृतीयोद्वादशाक्षरः॥२६॥

यस्याअष्टाविंशत्यक्षराणि साउष्णिग्भवति। त्रिभिःपादैर्वर्तते। पूर्वौद्वावष्टाक्षरौपादौ तृतीयोद्वादशाक्षरःसोष्णिग्भवति॥४॥

पुरउष्णिकतुसातस्मिन् प्रथमे-

मध्यमेककुप् ॥ २७ ॥

तस्मिन्द्वादशाक्षरे प्रथमेसति पुरउष्णिग्भवति । तस्मिन्द्वादशाक्षरे मध्यमेसतिककुब्भवति ।

अग्नेवाजस्य तन्नश्चः सुदेवः संमहेतिच । ऋचोनिदर्शनायैताः परायास्तायथोदिताः ॥ २८ ॥

उष्णिवपुरउष्णिक्ककुभां क्रमेणैताऋचोनिदर्शनानि भवंति । अग्नेवाजस्यगोमतः । तन्नश्चुर्ईवध्रितं । सुदेवःसमहासति । पराःयाःऋचः ताअपियथोदिताः उत्तरत्रयथाकथ्यमानाः तत्तथाजानीयात् ।

समाक्षरैश्चतुर्भिर्द्वैनदंमंसीमहीतिच । पादैरनुष्टुभौ विद्या दक्षरैरुष्णिहाविमे ॥ २९ ॥

समाक्षरैः चतुर्भिःपादैर्द्वैऋचौउष्णिहौ भवतः । पादैरनुष्टुभौजानीयात् । अक्षरैःकृत्वा उष्णिहौभवतः । नदंवऊदतीनां । मंसीमहित्वावयेडत्येते ।

दशैरेकाद्द्वितित्वेषाककुपन्न्यंकुशिरानिचृत् । एकादशोस्याःप्रथमः उत्तमश्चतुरक्षरः ॥ ३० ॥

यस्याःप्रथमएकादशाक्षरः साककुप्भवति । शि-

तीयोद्वादशाक्षरः उत्तमस्तृतीयश्चतुरक्षरः। एषाककुम्न्यं-कुशिरानिचृत्। उदाहरणंदीरेक्याश्चन्वेददिवंमु।

एकादशाक्षरौच द्वौमध्येचैकः षडक्षरः। उष्णिक्पिपीलिक-मध्याह्वरीयस्येति दृश्यते ॥३१॥

यस्याएकादशाक्षरौ द्वौपादौ। तयोर्मध्ये एकःषड-क्षरः। पिपीलिकमध्यानामोष्णिग्वेदितव्या। ह्वरीयस्य सुयुजाविब्रताषेः।

ताभ्यांपरः षडक्षरः प्रयातनु-शिरोनाम ॥ ३२ ॥

ताभ्यां एकादशाक्षराभ्यां पादाभ्यां षडक्षरःपादः परोभवति सोष्णिक्तनुशिरानामवेदितव्या। प्रयाघोषि-भृगवाणेनशोभे। ५।

आद्यःपंचाक्षरःपाद उत्तरेष्टाक्ष-रास्त्रयः। अनुष्टुवगर्भैषोष्णिक् साऽगस्त्येऽस्तिपितुंन्विति ॥३३॥

आद्यःपंचाक्षरःपादः उत्तरेत्रयःपादा अष्टाक्षराःयस्या एषाअनुष्टुब्गर्भा उष्णिग्भवति। साअगस्त्यऋषौ वि-द्यते। पितुन्नुस्तोषं।

चत्वारिंशदक्षराऽनुष्टुप् चत्वारो

ष्टाक्षराःसमाः ॥ ३४ ॥

याद्वात्रिंशदक्षरासा अनुष्टुब्भवति । तस्याःचत्वारः- पादाः अष्टाक्षराः तेचसमाभावेदितव्याः । उदाहरणं गायंतित्वागायत्रिणः ।

कृतिर्द्वौद्वादशाक्षरावेक आष्टा- क्षरःपरः ॥ ३५ ॥

यस्याःपादौद्वादशाक्षरौस्तः परःअष्टाक्षरःपादोभव- ति । साऽनुष्टुप्कृतिर्नामवेदितव्या । उदाहरणंवक्ष्यति ।

यस्यास्त्वष्टाक्षरोमध्येसापिपी- लिकमध्यमा ॥ ३६ ॥

यस्यास्तुद्वादशाक्षरयो र्मध्ये अष्टाक्षरैःपादोभवति सा- पिपीलिकमध्यमा अनुष्टुब्भवति । वक्ष्यमाणोदाहरणं ।

नवकौद्वादशोद्व्यूना ताविद्वां- सेति काविराट् ॥ ३७ ॥

नवकावाद्यंतौपादौ मध्येचद्वादशोपादः । द्वाभ्यांन्यू- नाविराट्इत्यर्थः काविराटनामवेदितव्या । ताविद्वां- साहवामहेवां ।

तेषामेकाधिकावंत्यो नष्टरूपा- विपृच्छामि ॥ ३८ ॥

तेषामेवनवकद्वादशिनां पादानां अंत्योएकेनाक्षरे

गाधिकोभवतः । नवाक्षरः प्रथमः दशाक्षरो द्वितीयः त्रयोदशाक्षरान्त्यः । अनुष्टुप्स्थानष्टरूपा नामवेदितव्या । विपृक्वामिपाक्पारमदेशान् ।

दशाक्षरास्त्रयो विराट्त्रयोवैका-
दशाक्षराः ॥ ३९ ॥

दशाक्षरास्त्रयःपादाः एकादशाक्षरास्त्रयोऽन्याः-पादा भवंतिविराट् नामसानुष्टुब्वेदितव्या । तयोरु-दाहरणेवक्ष्यामः ।

षण्महापदपंक्तिस्तु षट्कौत्यः
पंचपंचकाः ॥ ४० ॥

षड्भिःपादै र्याऽनुष्टुप् सामहापदपंक्तिरित्युच्यते । अंत्यःपादःषट्कः । पंचपंचकाआद्याः । उदाहरणंवक्ष्यति ।

माकस्मै पर्यूषु शुध्यग्ने तवस्वा-
दिष्ठा ताऋचः ॥ ४१ ॥

इत्येताऋचो निर्दिष्टलक्षणानां उदाहरणान्यनिर्दि-ष्टोदाहरणानां । माकस्मै । पर्यूषु । शुधि । अग्ने । त-वस्वादिष्ठाइति । कृतिः माकस्मैधातमभ्यमित्रिणेनः । पिपीलिकमध्यानुष्टुप् । पर्यूषु प्रधन्व वाजसातये । द-शाक्षराविराट् । शुधीहवं विपिपानस्याद्रेः । एकादशा-क्षरा अनुष्टुप् दाशुषोदुरोणे । महापदपंक्ति स्तवस्वा-दिष्ठारसीसंहृष्टिः । ६ ।

चतुष्पदांतुबृहती प्रायःषट्कि-

षट्चरा । अष्टाक्षरास्त्रयःपादा स्तृतीयोद्वादशाक्षरः ॥ ४२ ॥

बृहती षट्त्रिंशदक्षराचतुष्पदा भवति । तस्याः त्रयः पादा अष्टाक्षराः तृतीयोद्वादशाक्षरः पादोभवति । एषाबृहतीप्रायः । किमिदंप्रायइति । प्रायेणैषा प्रयुज्यत इत्यर्थः । माविदन्यद्विशंसत ।

पुरस्ताद्बृहतीनाम प्रथमेद्वादशाक्षरे । उपरिष्टाद्बृहत्यन्त्ये द्वितीयेन्यंकुसारिणी । स्कंधोग्रीव्युरोबृहती त्रेधैनांप्रतिजानते ॥४३॥

प्रथमेद्वादशाक्षरेसति पुरस्ताद्बृहतीनाम वेदितव्या । अन्तिमेद्वादशाक्षरे उपरिष्टाद्बृहतीनाम । द्वितीयेद्वादशाक्षरे न्यंकुसारिणीतिकेचिदाहुः । अपरेस्कंधोग्रीवीत्यामन्यंते । उरोबृहत्यन्ये । तासामुदाहरणानि वक्ष्यति । एवमेनां त्रिधाप्रतिजानते आचार्याः ।

त्रयोद्वादशकायस्याः साद्योर्ध्वबृहतीविराट् ॥ ४४ ॥

यस्याबृहत्यास्त्रयःपादा द्वादशाक्षराः साविराडूर्ध्वबृहतीनाम वेदितव्या । उदाहरणं वक्ष्ये ।

महोयोधीमतं मत्सीजानमिदर्शनः ॥ ४५ ॥

महीयः। अधीत्। नतं। मतिव। ईजानमित्। अ-जीजन:। निर्दिष्टलक्षणानाम निर्दिष्टोदाहरणाना सु-दाहरणानि। पुरस्ताद्बृहत्याःहे। महीयस्मतिः श्रवसो अमास्या। अधीन्वत्रसमतिंच मन्नच। उपरिष्टाद्बृहत्याः नतमंहानदुरितं। न्यंकुसारिणीस्कंधोग्रीव्यरोबृहतीनां-हे। मत्स्यपायितेमहः। ईजानमिद्यौ गूर्त्तावसुः। वि-राड्डूर्ध्वबृहत्याः अजीजनोअमृतमर्त्येष्वा।

अष्टिनोर्दशकौमध्ये विष्टारबृ-हतीयुवं॥ ४६॥

अष्टिनोःपादयोर्मध्ये दशकौयस्याः साविष्टारबृहती। युवंह्याप्तमहारन्।

एकाऽगस्त्ये पितुस्तोमेनवाक्ष-रपदोत्तमा॥ ४७॥

अगस्त्यऋषौ अन्नस्तुतिसूक्ते उक्तं। उत्तमांत्यैकानवा-क्षरपादात्रिष्टुते। इत्यर्थेव। तंत्वावयंपितो वचोभिः। ७।

द्वयोश्चोपेदमाहार्षं सर्वव्यूहेन-वाक्षराः॥ ४८॥

उपेदमुपपर्चनं। आहार्षंत्वाविदंत्वा। इत्येतयोश्चद्व-योश्च्यो: सर्वव्यूहेनवाक्षराः पादाभवंति। इत्यर्थेव। ७।

त्रयोदशाक्षरौचद्वौमध्येचाष्टा-क्षरोभवेत्। अभिवोवीरमित्ये-

**षा सापिपीलिकमध्यमा ॥४९॥**

अयोदशाक्षरयोर्मध्ये चाष्टाक्षरःपादःसापिपीलिकमध्यमा बृहतीनामवेदितव्या । अभिवोवीरमंधसो मदेषुगाय ।

**नवकाष्टादशसहैकः परमोष्टच यदिपादाः । बृहतीविषमपदा सासनितः सुसनितश्च ॥५०॥**

नवाक्षरः प्रथमःपादः अष्टाक्षरोद्वितीयः एकादशाक्षरस्तृतीयः परमःअंत्योष्टाक्षरः इतिईदृशायदिभवंति सा बृहतीविषमपदानाम वेदितव्या । सनितः सुसनितश्चेति ।

**पंक्तिरष्टाक्षराः पंच ॥ ५१ ॥**

सापंक्तिरिष्यते यस्याअष्टाक्षराः पंचपादाभवंति । इंद्रोमदाय वावृधे ।

**चत्वारोदशकाविराट् ॥ ५२ ॥**

यस्याःचत्वारोदशकाः पादाः साविराट्पंक्तिर्भवति । मन्ये त्वायज्ञियं यज्ञियानां ।

**आदेशेष्टाक्षरौ विद्यात्सोपसर्गेषु नामसु ॥ ५३ ॥**

आस्तारपंक्तिरित्येवमादिषु सोपसर्गेषुनामसु आदितो[illegible] मध्यत[illegible]मादष्टाक्षरौ[illegible]विद्यात् ।

युग्मावष्टाक्षरौ पादावयुजौ द्वादशाक्षरौ । सासतोबृहतीनाम ॥ ५३ ॥

यस्याः युग्मौद्वितीयचतुर्थौ पादावष्टाक्षरौ भवतः । अयुजौ प्रथमतृतीयौ द्वादशाक्षरौ सापंक्तिः सतोबृहतीनामवेदितव्या । मातेराधांसि मातजतयोवसो ।

विपरीताविपर्यये ॥ ५४ ॥

तेषांविपर्ययेयुग्मौद्वादशाक्षरौ अयुजौअष्टाक्षरौसा-विपरीतापंक्तिर्नामवेदितव्या । यश्चप्यः आवयत्सखा ।

आस्तारपंक्ति रादितः ॥ ५५ ॥

आदौअष्टाक्षरौ अंत्यौद्वादशकौ साआस्तारपंक्ति र्नाम । आग्निंनस्वृक्तिभिः ।

प्रस्तारपंक्तिरंततः ॥ ५६ ॥

यस्याः अंत्यौपादौ अष्टाक्षरौ आद्यौ द्वादशाक्षरौ साप्रस्तारपंक्तिर्नाम । महिद्यावापृथिवी भूतमुर्वी ।

संस्तारपंक्तिर्मध्यतः ॥ ५७ ॥

मध्येष्टाक्षरौपादौ आद्यांत्यौ द्वादशाक्षरौभवतः सा-संस्तारपंक्तिर्नाम । पितुभ्र्तोनतंतुमित्सुदानवः ।

विष्टारपंक्तिर्बाह्यतः ॥ ५८ ॥

आद्यांत्यौ चाष्टाक्षरौ मध्येद्वादशकोभवतः साविराट्-
रपंक्तिर्नाम । अग्नेतवश्रवोवयः । ८ ।

मन्येत्वा मातेराधांसि यज्ञष्व
आग्निंमह्नीति च । पितुभृतो
नाग्नेतव ताऋचोऽवनिदर्शनं॥५९॥

मन्येत्वायज्ञियं । मातेराधांसिमात । यज्ञष्वःश्राव-
य । आग्निंनस्वृक्तिभिः । मह्निद्यावापृथिवी । पितुभृ-
तोनतंतु । अग्नेतवश्रवो । एताऋचोऽवनिदर्शनं यथा-
क्रमं विराट्पंक्त्यादीनां पुरस्तादेवनिदर्शितानां ।

चतुश्चत्वारिंशत्त्रिष्टुबक्षराणिच-
तुष्पदा । एकादशाक्षरैः पादैः॥६०॥

चतुश्चत्वारिंशदक्षरा एकादशाक्षरैःपादैः चतुष्पदा-
त्रिष्टुब्भवति । पिवासोममभियमुग्रतर्द्दः ।

द्वौचेत्तुद्वादशाक्षरौ । प्रायस्यौप-
जगत्येषा परस्यास्यतुसात्रि-
ष्टुप् ॥ ६१ ॥

यदिद्वौद्वादशाक्षरौभवतः द्वावेकादशाक्षरौपरस्यज-
गतीप्रायेवर्त्तमानेत्यर्थः । उपजगतीनामवेदितव्या । य-
था । सोचिन्नुवृष्टिर्यूथ्या २ स्वासचा । अस्यतुत्रिष्टुभः प्रा-

यस्यसाविष्टुप्नाम्ना वेदितव्या । यथासनेमिचक्रमजरं विवाहते ।

# वैराजजागतैः पादैर्योवाचेत्यभिसारिणी ॥ ६२ ॥

द्वौदशाक्षरौभवतः द्वौद्वादशाक्षरौ अभिसारिणीसंज्ञासा । योवाचाविवाचा मृध्रवाचः ।

# नवकौदशकौवास्या देकोनैकोपित्रिष्टुभः । एकादशाक्षरस्यापिविराट्स्थानाह्वनामसा ॥ ६३ ॥

त्रिष्टुभःपाद एकोप्यनेकोपि नवकौवादशकौवास्यात् । एकादशाक्षरस्याप्यनेकोवास्यात् । एतदुक्तंभवति यद्येकोनवकः द्वौदशकौभवतः । एकोदशकः द्वौनवकौ । उभयत्रायेकस्त्रैष्टुभः द्वौचैत्रैष्टुभौ एकैकोइतरौ । साविराट्स्थाना नामवेदितव्या । श्रुधीहव मिंद्रमारिषण्यः ।

# पूर्वौदशाक्षरौपादा वुत्तरेष्टाक्षरास्त्रयः । विराट्पूर्वाह्वनामैषात्रिष्टुप्पंक्त्युत्तरैववा ॥ ६४ ॥

यस्याः पूर्वौद्वौपादौ दशाक्षरौ भवत उत्तरेष्टाक्षरास्त्रयोभवंति । एषात्रिष्टुब्विराट्पूर्वा वापंक्त्युत्तरावा वेदितव्या । एवेंद्राग्निभ्यामहाविहव्यस् । ६ ।

त्रयश्चैकादशाक्षरा एकः आष्टा-
क्षरःपरः । विराड्रूपाह्वनामैषा
त्रिष्टुम्नाक्षरसंपदा ॥ ६५ ॥

यस्यास्त्रयःपादा एकादशाक्षरा एकश्चापरोऽष्टाक्षरः साविराड्रूपा नाम त्रिष्टुब्वेदितव्या । यद्यप्यक्षरसंपन्नास्ति । उक्तंहि । त्रिष्टुभोयाविराट्स्थाना विराड्रूपा तथापरा । वह्निनाम्नापिराज्ञेआ त्रिष्टुभोन्नाह्लग्यां तथेति । क्रौलक्रोरश्मपाश्रुत्रः ।

त्रयश्चद्वादशाक्षरा एकश्चाष्टाक्ष-
रःक्वचित् । एषाज्योतिष्मती-
नाम ततोज्योतिर्यतोष्टकः ॥६६॥

यस्यास्त्रयःपादा द्वादशाक्षराः एकश्चाष्टाक्षरः क्वचिद्भवति एषात्रिष्टुप्ज्योतिष्मतीनामवेदितव्या । यतः अष्टकःपादः ततोज्योतिरित्युच्यते । यद्वायज्ञं मनवे-संमिमिक्षथुः । मध्येज्योतिः । अग्निमिन्द्रंस्त्रवरुणेन विष्णुना । उपरिष्टाज्ज्योतिः ।

चत्वारोष्टाक्षराःपादा एकश्चद्वा-
दशाक्षरः । सामहाबृहतीनाम६७॥

यस्या अष्टाक्षराःपादाः चत्वारः एकश्चद्वादशाक्षरः सात्रिष्टुम्महाबृहती नामवेदितव्या । नमोवाके प्रस्थि-तेअध्वरेनरा ।

यवमध्यातुमध्यमे ॥ ६८ ॥

आद्यावष्टाक्षरौ तृतीयोद्वादशाक्षरः चतुर्थपंचमौचा-
ष्टाक्षरौ सात्रिष्टुप्यवमध्याज्ञेया । दृहह्निरग्ने अर्चिभिः ।

सोच्चिन्नुसनेमिश्रुध्ये वक्रोल-
न्यद्वाग्निनेंद्रेण । नमोवाकेवृह-
ह्निश्च ताऋचोचनिदर्शनं ॥ ६९ ॥

उक्तप्रायमेतत् ।

पंचाशज्जगतीद्व्यूनाचत्वारोद्वा-
दशाक्षराः । तदस्यावहुलंवृत्त-
म ॥ ७० ॥

द्वाभ्यामूनानि पंचाशदक्षराणि जगतीनामभवति ।
चत्वारःपादा द्वादशाक्षरा भवंति । वहुलंतद्वृत्तंजगती-
प्रायेणभवतीत्यर्थः । अस्याउदाहरणं । प्रदेवमच्छामधु-
मंतइन्दवः ।

महापंक्तिः षडष्टकाः ॥ ७१ ॥

यस्याःपादाषट् अष्टाक्षराभवंति साजगती महा-
पंक्तिरित्युच्यते ।

अष्टकौसप्तकः षट्कोदशको न-
वकश्च वा ॥ ७२ ॥

द्वौपादौ षष्टाक्षरौ एकःसप्ताक्षरः अपरःषडक्षरः । दशाक्षरोन्यः । इतरेनवाक्षरोभवति सावामहापंक्तिः । सेहानउग्रपृ । सूर्येविषं ।

## महासतोवृहत्यर्चे व्यूहयोरित-योःसह । संपातेत्वेतिपादांते दै-ववान्सामविंशके ॥ ७२ ॥

एतयोऋचो र्महापंक्त्योः षड्भिर्महाद्वादशाक्षरयोः पादयोः सहव्यूहयोरित्वसतोः द्वादशाक्षरौ त्रयश्चाष्टाक्षरा अनिमेन यस्याः सामहासतोवृहतीनाम जगतीवेदितव्या । । अस्माऊषुभे यदिंद्रसेहान उग्रेतिषट् । आयःपप्रौच विश्वामांताऋचोत्वनिदर्शनं । अस्माऊषु प्रभूतये । उभेयदिंद्ररोदसी । सेहानउग्रपृतनाइति ष. ष्ठेतामहापंक्तयः । आयःपप्रौ भानुनारोदसीउभे । त्रिश्वासांगृहपतिर्विश । एतेमहासतोवृहत्यौ ॥ १ ॥

## इतिश्री पार्षदव्याख्यायामानन्दपुरवास्तव्य वज्रटपुत्रोव्वटकृतेप्रातिशाख्यभाष्ये षोडशपटलं समाप्तम् ।

## द्वावतिछंदसां वर्गाउत्तरौ चतुरुत्तरौ ॥ १ ॥

जगत्याउत्तराअति छंदसांद्वौवर्गौ चतुरुत्तरौ वेदितव्यौ-

# प्रथमातिजगत्या सांसांद्विपंचाशदक्षरा ॥ २ ॥

आसांप्रथमाया द्विपंचाशदक्षरा अतिजगतीनामवेदितव्या । यथा । तमिंद्रंजोहवीमिमघवानमुग्रं ।

# षट्पंचाशत्तु शक्वरी ॥ ३ ॥

षट्पंचाश दक्षराशक्वरी भवति । प्रोष्वस्मैपुरोरथं: ।

# षष्टिरेवाति शक्वरी ॥ ४ ॥

षष्ट्यक्षराणि अतिशक्वरीभवति । सुषुमायातमद्रिभिः ।

# उत्तराष्टि श्चतुःषष्टिः ॥ ५ ॥

तस्याउत्तरी या अष्टिःसाचतुःषष्टि रक्षरैर्भवति । साअष्टिर्नाम । त्रिकद्रुकेषु महिषोयवाशिरं ।

# ततोऽष्टाषष्टिरित्यष्टिः ॥ ६ ॥

ततउत्तरा अष्टाषष्टिरक्षराणि साऽत्यष्टिर्भवति । अयाऋचाहरिण्यापुनानः ।

# धृतिःपूर्वा द्विसप्ततिः ॥ ७ ॥

अतिधृतेः पूर्वायाद्विसप्तत्यक्षरासाधृति र्भवति । सखेयखाय मध्यावदस्व ।

# षट्सप्तति स्त्वतिधृतिः ॥ ८ ॥

यस्याःषट्सप्तत्यक्षराणि भवंति साऽतिधृतिः । सद्दिशवोन मारुतं तु विष्वणिः ।

सर्वादाश्रंतयोर्व्वेताः ॥ ९ ॥

एता प्रतिजगत्यादयः सर्वादाश्रंतयोर्धुविद्यंते ।

उत्तरास्तु सुभेषजे ॥ १० ॥

उत्तरायावच्यंते ताःसुभेषजे ऋचोदृष्टव्याः ।

कृतिःप्रकृतिराकृतिर्विकृतिः सं-
कृतिस्तथा । षष्ठीचाभिकृति
र्नामसप्तम्युत्कृतिरुच्यते ॥११॥

एताः कृत्यादयः सप्तताःयाःसुभेषजेउक्ताः ।

अशीति श्चतुरशीति रष्टा-
शीति र्द्विर्नवतिः । षण्णवतिः
शतं पूर्णमुत्तमातु चतुःशतं॥१२॥

कृत्यादीना मक्षरपरिमाणानि क्रमेण । अशीतिः
८४ । ८८ । ९२ । ९६ । १०० । १०४ ॥

तमिंद्रं प्रोषुसुषुमतिकद्रुके ष्व-
यारुचा । सखेचसह्निशर्द्धश्च
मध्यमोवर्ग उच्यते ॥ १३ ॥

तास्तुयथाक्रमं पुरस्ता त्तत्तल्लक्षणे उदाहृताः ।

आसुकृतिस्तुप्रकृतिर्ध्रुवं पूर्वात-

तस्तुया । आकृति र्यदितेमाता-मेषो विकृतिरुच्यते । संकृतिस्तु नवैतच्चदेवो अग्निस्त्वभिकृतिः । सर्वमित्युत्कृति स्तत्र तृतीयो-वर्ग उच्यते ॥ १४ ॥

कृतिः । आसुरैरूपरावतद्भृति । प्रकृतिः घृवंपूर्वेति । ततःप्रकृतेः पराआकृतिर्यदितेमात्रेति । मेषोविकृति रुच्यते । संकृतिस्तु नवैतत्र । तस्मिंत्सुभेषजेपि नविद्यते । एवंप्रायेणावर्णयंति । केचिद्वर्णयंति संकृतेर्नवाद्भृत्येतदृदाहरणं । अभिकृतिः । देवाअग्निःस्विष्टकृदिति । उत्कृतिःसर्वस्येति । अपदक्रमेआम्नातत्वादिहसंज्ञाभिरुदाहृताः अत्रास्वासुत्कृतौ तृतीयोवर्गःसमाप्यते । (१)

एवंक्रमप्रमाणानां छंदसामुप-दिश्यते ॥ १५ ॥

एवंचतुर्विंशत्यक्षरादीनां क्रमप्रमाणानांचतुरुत्तराणां चतुःशतपर्यंतानामेकविंशतिछंदसां कश्चिद्विशेष उपदिश्यतेकोसौ विशेषः ।

एकद्व्यूनाधिकासैव निचृदूना-धिकाभुरिक् ॥ १६ ॥

(१) इति श्रीपार्षद्व्याख्यायामानंदपुरवास्तव्यवज्रटपुत्रउव्वटकृते प्रातिशाख्यभाष्ये षोडशंपटलं समाप्तम् इतिखपुस्तकपाठः ।

एकेनजनानिचृद्भवति एकेनवाधिकासाभुरिग्भवति । यःशुक्रइवसूर्योनिचृत् । परिधामानियानितेभुरिक् ।

विराजस्तूत्तरस्याहुर्द्वाभ्यांयावि-
षयेस्थिताः । स्वराजएवं पर्व-
स्ययाः काश्चैवंगताऋचः ॥ १७ ॥

द्वाभ्यामक्षराभ्यां याऋचोधिका न्यूनावाविषयेमध्ये-
स्थिताः उत्तरस्यपूर्वस्यचछंदसःविराजस्ताआहुरुत्तरस्य । स्वराजःपूर्वस्य । यथाषड्विंशत्यक्षराऋचोगायत्रीप्रायेस्व-
राज्योगायत्र्योभवंति । उष्णिक्प्रायेषु विराजउष्णिहोभ-
वति । यथा । जोषासवितर्यस्यतेद्रूतिस्वराड्गायत्री । पतिर्थिंमानुषाणामिति विराडुष्णिक् । उत्तरत्रापि । याःकाश्चैवंगता एताएवऋचोभवंति ।

याः कश्चिद्बहुपादास्तु गाय-
त्र्योहीनतांगताः अक्षरै र्वहुभि-
स्तास्तु गायत्र्यउपधारयेत् ॥१८॥

गायत्र्यः द्वाभ्यांत्रिभिश्चतुर्भिः पंचभिर्वान्यूनाःसत्योगा-
यत्र्यएवविराजो भवंति । पूर्वस्यछंदसो ऽभावात् । भग-
वता उभयंछंदसां मध्येत दुक्तं ।

ताराट् विराट् स्वराटसम्राट्
स्ववशिनी परमेष्ठी । प्रतिष्ठा-
प्रत्नमृतं वृषाशुक्रं जीवंपयः ।

## तृप्तमर्णो शोभोबुवार्यापश्चोदक-
## मुत्तमं ॥ १६ ॥

विषयेस्थिताः द्वाभ्यांताद्दमाः ताराट् । विराट् । स्व-राट् । सम्राट् । स्ववशिनी । परमेष्ठी । प्रतिष्ठा । प्रत-म् । अमृतं । तृषा । शुक्रं । जीवं । पयः । तृप्तं । अर्णः । अंशः । अम्भः । अंबु । वारि । आपः । उदकं । इति । यथाएकविंशतिर्विराजश्च । द्वाविंशत्यक्षराद्योद्विशता-क्षरपर्यंताःएवंस्वराजः ।

## दैवतंछंदसामत्रवक्ष्यतेततउ-
## त्तरं । अग्नेर्गायत्र्यातोधिदैभ-
## क्त्यादैवतमाहुः । समानांछंद-
## साम्टचौ ॥ २० ॥

ताराद्यादीनांछंदसामुत्तरंगायत्र्यादीनांछंदसांचदेव-ताःकथ्यंते । अग्नेर्गायत्र्यभवत्प्रयुक्तेत्यारभ्यद्वेऋचौछंदसां भक्त्यादैवतमाहुःसमानां । तस्मादग्नेर्गायत्रीभवति । सावित्रीउष्णिक् । सौमीअनुष्टुप् । बृहतीबार्हस्पत्या । मैत्रावरुणीविराट् । ऐन्द्रीत्रिष्टुप् । वैश्वदेवीजगती । छं-दसांदैवतज्ञानेधर्मःप्रयोजनं । भवत्यंवसंशयेछंदसांदैव-तेनाध्यवसायः । यथातवस्वादिष्टा । शिवानःस-ख्याद्युत्युष्णिगनुष्टुभोर्मध्येउप्तत्वपूतमितिषड्विंशत्यक्षरेद्वे-ऋचौदैवतेनस्वराजीगायत्र्यावध्यवसीयेतेनविराजा-वुष्णिहौ ।

नपंक्तेः ॥ २१ ॥

पंक्तेर्दैवतमेतेऋचौनाहतुः। सप्तसुमध्येयस्मात्पंक्ति-
स्तस्मादिदमुच्यते।

सातुवासवी ॥ २२ ॥

सापंक्तिर्वासवीवेदितव्या। १।

प्राजापत्यास्त्वतिछंदाः ॥ २३ ॥

याअतिछंदाअतिछंदांसिअतिजगत्यादीनितानिप्रा-
जापत्यानिज्ञेयानि।

विछंदावायुदैवता ॥ २४ ॥

याविछंदाऋक्सावायुदैवतावेदितव्या। विछंदाअवां-
तरभेदाः पदपंक्तिः पुरउष्णिगाद्याः तावाययाज्ञेयाः।

द्विपदापौरुषंछंदः ॥ २५ ॥

याद्विपदाऋक्सापौरुषीवेदितव्या।

ब्राह्मीत्वेकपदास्मृता ॥ २६ ॥

याएकपदाऋक्साब्राह्मीस्मृता।

एतेनैवक्रमेणैषांवर्णतोभक्तिरु-
च्यते ॥ २७ ॥

येनक्रमेणच्छंदसांदैवतमुक्तंतेनैवक्रमेणैषांवर्णतोभक्ति-
रुच्यते ।

श्वेतंचसारंगमत:पिशंगंकृष्णमेव-
चं । नीलंचलोहितंचैवसुवर्ण-
मिवसप्तमं । अरुणंश्यामगौरं-
चबभ्रुर्वैनकुलंतथा ॥ २८ ॥

श्वेतंशंखवर्णंगायत्रं । द्विवर्णंशुक्लकृष्णमारंगमौष्णिहं । पिशंगंरोचनावर्णमानुष्टुभं । कृष्णमगुरुवर्णं बार्हतं । नीलमुत्पलवर्णं वैराजं । लोहितमिन्द्रगोपवर्णं त्रैष्टुभं । सुवर्णरूपवर्णं जागतं । अरुणं प्रात:संध्याभवर्णं पांक्तं । श्यामं कृष्णवर्णं अतिछंद: । गौरं सिद्धार्थवर्णं विछंद: । बभ्रु कपिलवर्णं द्विपदंछंद: । नकुलवर्णं एकपदंछंद: । एतावतोदेवता: क्रमेणविधि: ।

पृश्निवर्णं वैराजं ॥ २९ ॥

पृश्निवर्णं बहुवर्णंचित्रं वैराजम् । अथकस्माद्वैराजस्य द्विवर्णोपदेश: क्रियते । तत्र क्रमेणैवनीलत्वं सिद्धम् । नसिध्यति । कथं । एतास्तिस्रोविराज: अनुष्टुबेका-पंक्तिरेका । द्वाभ्यांन्यूनाचैका । तत्र पूर्वयोर्नीलवर्ण: । अस्या: पृश्निरितिवेदितव्यं । एवमपि कथमेतदध्यवसीयते पूर्वयो: नील: । अस्या: पृश्निरिति । निचृद्भुरिजोर्न्यूनाधिकयो: समीपोपदेशात् अस्या: पृश्निरिति । परिशेषादितरयो नीलइत्यध्यवसीयते । तयोरप्येके क्रमात्पंक्तेरेवविराजो नीलत्वमाहु: ।

निचृत्क्रौञ्चवर्णं ॥ ३० ॥

क्रमिदूषितपत्त्रवर्णा निचृद्भवति ।

पृषद्भुरिक् ॥ ३१ ॥

विद्रुमवत् भुरिग्भवति ।

ब्रह्मसामर्ग्यजुश्छन्दः कपिलंव-
र्णतः स्मृतं ॥ ३२ ॥

ब्रह्मणःसामर्ग्यजुषांचछन्दः वर्णतः कपिलं जटाक-
लापसूर्यरश्मिवर्णं स्मृतं ।

मा प्रमा प्रतिमो पमा समाच
चतुरक्षरात्। चतुरुत्तरमद्यन्ति
पञ्चछन्दांसितानिह ॥ ३३ ॥

मा । प्रमा । प्रतिमा । उपमा । समाचेति । च-
तुरक्षराच्चतुरुत्तराणि तानिगायत्र्याः पूर्वाणि पञ्च-
छन्दांसि वेदितव्यानि ।

हर्षिका सर्षि का(१) सर्वमाचा
विराट्कामा। द्व्यक्षरादीनि मा-
दीनां वैराजान्यनुचक्षते ॥३४॥

इत्येतानिचद्व्यक्षरादीनि चतुरुत्तराणि अष्टादशा-
क्षरपर्यंतानि मादीनां वैराजान्यनुचक्षते आचार्याः ।

---

(१) मर्षिकेत्यपिक पुस्तक पाठः ।

**अक्षराण्येव सर्वत्र निमित्तं बलवत्तरं । विद्यादिप्रतिपन्नानां पादवृत्ताक्षरैर्ऋचां ॥ ३५ ॥**

पादैर्वृत्तै रक्षरैश्च विप्रतिपन्नामृचां सर्वत्र बलवत्तरं । निमित्तं अक्षराण्येव विद्यात् । यथा । सूर्यैं विषमासजामि । पादैर्विप्रतिपन्नास्तिस्रो ऽक्षरैर्जगत्योऽध्यवसीयन्ते । नवानां नवतीनामिति पंक्तिः । अग्न प्रेषो नवाचा मृषाव सुइति । वृत्तैर्विप्रतिपन्नाक्षरै स्त्रिष्टुबध्यवसीयते । यथा यास्त्ते प्रजा अमृतस्येत्यनुष्टुप् । यथा च येनः सपत्ना अपते भवन्त्विति त्रिष्टुप्प्रायैश्चाक्षरैरेव जगत्यध्यवसीयते । तथा मांधुरिन्द्रं नाम देवतेति जगतीप्रायवृत्ताभ्यां विप्रतिपन्नापि त्रिष्टुप् ।

**व्यूहेदेकाक्षरीभावान्पादेषूनेषु संपदे ॥ ३६ ॥**

ऊनेषु पादेषु संपदि कर्त्तव्यायां एकाक्षरीभावांत्संधीन्व्यूहेत्पृथक्कुर्यादित्यर्थः । प्रेता जयता नरः । सास्माकेभिरेतरीन शूषैः । ऊनेष्विति किं । सेमं यज्ञं मधुमन्तं कधीनः । संपदिति कस्मात् । आहूतायामोपगव्यन्त इन्द्र मित्यत्र त्रय एकीभावा पूर्वस्यैव व्यूहेन संपत्सिद्धे रुत्तरयोर्न कर्त्तव्यो भवति ।

**क्षैप्रवर्णाश्च संयोगान्व्यवेयात्सदृशैः स्वरैः ॥ ३७ ॥**

क्षैप्रवर्णांश्चसंयोगान्सान्तस्था न्संयोगानित्यर्थः । व्यवेयात्व्यवधानंकुर्यादित्यर्थः । सदृशैः समानस्थानैः स्वरैः । व्यंवकंयजामहे । उदुत्स्वस्माअकृणोतनातृणंनगोर्नपर्वविरदातिरश्चा । पादवृत्तेष्विति छन्दसः संपदेद्वत्थे-वानुवर्त्तते । ऊनेष्विति कस्मात् । प्रत्यग्रभोषन्तमस्य-न्तृणां । संपदइतिकस्मात् । अगोह्यस्य यदसस्तनागृ-ह इत्यवहोत्ते प्रवर्णयैतत्पूर्वेणासंपत्सिद्धत्तत्तरस्मिन्नकर्तव्यो भवति । अचकेचित् क्षैप्रसंधिकृतानं तस्थासंयोगान् व्यूहेत् । एकाक्षरीभावानिति । एवंसिद्धे इति मन्यंते तथा उदुत्स्वस्माअकृणोतनातृणमिति व्यूहः कर्तव्यः । तत्सदृशैः स्वरैर्व्यवाय: । अस्यतुयेस्वाभाविका अन्तस्थसंयोगा स्तेतूदाहरणात्वे नभवन्ति । यथात्वमग्नस्त्व-मग्नेनस्मरिइति । गोर्नपर्वविरदातिरश्चेति अयंव्यवायः यकारवकारसंयोगे एवेष्यते । रेफलकारसंयोगयोर्न । कथंज्ञायते । अयंभुवोरयीणांचिकितयत् इत्यत्र दीर्घत्व-प्रतिषेधार्थं जामिषुजासुचिकितेति चिकितशब्दस्यपाठात् ।

**पदाभेदेन पादानां विभागोभि-समीक्ष्यतु । छन्दसः संपदं तांतां यांयां मन्येत पादतः ॥३८॥**

छन्दसःपादतो यांयां संपदं मन्येत तांतां सम्य-क्पूर्वमभिसमीक्ष्य पादांश्चपश्चात्पदानामभेदेन पादानांविभागः कर्तव्यः । यद्यप्युत्तरैः पादज्ञानहेतुर्विरोधो भवति । यथा माध्यन्दिनस्य सवनस्यवृत्रहन्नद्यत्ये-

तयोः पादयोः पदभेदेनाष्टाक्षरयोः क्रियमाणयोः यद्यपिप्रायहत्तसंपद्भवति। अनाहत्यतां माध्यंदिनस्य सवनस्येत्येवंविभागः कर्त्तव्यः। एकारालस्य भुवनस्येत्येवमेत्र।

## प्रायोर्थोवृत्तमित्येते पादस्थानस्यहेतवः॥ ३९॥

प्रायः अर्थः वृत्तः एतेपादस्थानस्य हेतवोभवन्ति। त्रिष्टुभः प्रायो गोनंपर्वविरदेति। दशाक्षरोप्यूहेनैकादशाक्षरः क्रियते। तथा अर्थः। सगृणानो अद्भिर्देववानिति। तथावृत्तम्। अलाय्यस्य परशुर्नवाशतोमिति प्रकृत्या एकादशाक्षरोविकर्षेण द्वादशाक्षरः क्रियते। वृत्तादेव अर्योगिरः सघआजग्मुषीरिति पादांतः।

## विशेषसंनिपातेतु पूर्वंपूर्वं परंपरं॥ ४०॥

एतेषामेवविशेषाणां संनिपातेतु पूर्वंनिमित्तं पूर्वंभवति। परंनिमित्तंपरंभवति। पूर्वोहितुत्तराद्बलीयानित्यर्थः। एवंचकथंमनवेस्योनानित्यत्र प्रायोर्थ्याविरोधिप्रायो बलीयस्त्वादस्मात्स्योनानितिपादांतः। येषां पुनरर्थोबलीयां स्तेषांमनवे स्योनान्यथइतिपादांतोगम्यते। प्रायबलीयस्त्वादेव ऊर्ध्वोवाजस्य सनितायदंजिभिरिति पादांतःनसनिता। प्रायवृत्तविरोधे प्रायबलीयस्त्वा त्प्रत्यग्रभीष्मन्तमस्य न्वाणामितिपादांतः एकादशाक्षरएवभवति वृत्तादित्युच्यते। अर्थवृत्तविरोधे-

ऽर्थंबलीयस्त्वात् यंदग्नेस्यामहन्त्वंइतिपादांतः । नइत्ता-दहमिति । एवंसर्वंत्रबलाबलमभिसमीक्ष्य पादंजि-ज्ञासेत् । ३ ।

अनुदात्तंतु पादादौ नोवर्जं वि-द्यते पदं ॥ ४१ ॥

चतुःषष्ठ्यां पादादावनुदात्तंपदं नविद्यते । उकार-स्तुविद्यते । यथाउलोकक्षुमद्रिवोहरिंग्धियं । उलोको-यस्तेअद्रिवः । अयमपि पादांतज्ञानहेतुरेव । सर्वहेतुभ्यो बलवत्तरः । तस्मात्सुओन्वाधित्वा बतोवतासियमनैवत-इतिपादांतः । तथाचचायत्व मर्वसीतिपादांतः ।

पादादावनुदात्तंतु यदन्यत्तदि-होदितं ॥ ४२ ॥

तुपुनः पादादीयान्यनुदात्तानिपदानि तान्याचार्यः सूत्रेपठति ; वश्रस्त्रीयच्चसीत्यादयः ।

वश्रस्त्रीयच्चसीत्येकं ॥ ४३ ॥

इदंचैकमनुदात्तं पदमस्तिवश्रे ऋषौपादादावनु-दात्तं पदमस्ति । इयच्चसिगायेत्वा नमसागिरा ।

त्वेचा भिष्टइत्यपि । नेति पू-र्वाणिसर्वाणि ॥ ४४ ॥

ञ्चाभिष्टइतिच त्वेनेति पूर्वाणिसर्वाणि । ञ्चाभि-

इत्यग्नेरित्येतस्मिंस्तृचे अनुदात्तानि सर्वाणीमंति । स्तनयंतिशुष्माः । रोचतउपाके । रोचतस्वधावः ।

## मधुच्छंदस्यृताद्वधौ ॥ ४५ ॥

मधुच्छंदसि ऋषावृताद्वधौ इत्येकमनुदात्तमस्ति । ऋताद्वधावृतस्पृशेति ।

## स्तोमशब्देपरे धायि ॥ ४६ ॥

स्तोमशब्देप्रत्यये अधायीत्येकमनुदात्तमस्ति । अधायिस्तोमः ।

## ऋतशब्दे परे स्त्रिधत् ॥ ४७ ॥

ऋतशब्देप्रत्यये स्त्रिधदित्येकमनुदात्तमस्ति । मायज्ञोअस्य । स्त्रिधदृतायोः ।

## हुवे तुराणां यत्पूर्वं ॥ ४८ ॥

हुवेतुराणामिति द्वेपदे यत्पूर्वंपदं तदनुदात्तं । प्रियाणोनामहुवेतुराणां ।

## तप न्मरुत उत्तरं ॥ ४९ ॥

तपन्मरुतेद्वेपदे यदुत्तरं तदनुदात्तमस्ति । यायत्तपन्मरुतोवावशानाः ।

## प्रेदंब्रह्मेतिचैतस्मि न्सूक्ते पादोस्तिपंचमः । सर्वानुदात्तः षट्-

## स्वद्वादित श्चतुर्दश: ॥ ५० ॥

प्रेदंब्रह्म व्रवतूर्यंष्वाविशेत्यस्मिन्सूक्ते सर्वानुदात्त: पादोस्तिपञ्चम:। ब्रचद्दवनेषेति। अस्यैवसूक्तस्यादित-श्चतुर्दश: पाद: सोपिसर्वानुदात्तोस्ति। ब्रसिमचीपत इति। एवमिमे सप्तसर्वा उदात्ता: सन्ति मधुछन्दस्येक-ऋताद्दधाद्दतस्पृशेति। धामिष्टइति च तृचेएक:। रो-चतस्वधाव: इत्येताभ्यांसहनव। नदशमोभवति।

## पादौ गायत्रवैराजौ अष्टाचरद-शाचरौ ॥ ५१ ॥

अष्टाचरदशाचरपादौ गायत्रवैराजौ विद्यात्।

## एकादशिद्वादशिनौ विद्या त्रैष्टु-भजागतौ ॥ ५२ ॥

एकादशद्वादशाचरौ पादौ त्रैष्टुभजागतौ विद्यात्॥४॥

## वर्षिष्ठानिष्ठयोरेषां लघूपोत्तम-मचरं। गुर्वेतरयो ऋंचु त इत्तं छंदसांप्राहु: ॥ ५३ ॥

एषांपादानां वर्षिष्ठानिष्ठयो रष्टाचरद्वादशाचरयो: पादयो: उपोत्तममचरं लघुभवति। यथा अग्निमी-ळेपुरोहितं। प्रदेवमच्छा मधुमंतइंदवइति। इतरो:य

दशाक्षरैकादशाक्षरयोः उपोत्तमं गुरु भवति । श्रुधी हवं विपिपानस्याद्रेः । पिबा सोममभिय मुग्रतर्द्दः । छंदसां ऋचतुर्वृत्तमाहुराचार्याः ।

छंदांसि वर्तंते सर्वाण्यन्यै रतो-
ल्पशः । एतद्विकारा एवान्ये स-
र्वे तु प्राकृताः समाः ॥ ५४ ॥

एतैः पादैः सर्वाणि छंदांसि वर्त्तंते । अतः एभ्योऽन्यैः पादैरल्पशो वर्तंते ये त्वन्ये पादास्ते एतेषामेव पादानां विकारा भवंति । अष्टाक्षरा त्पूर्वे पादास्ते गायत्रपादस्य विकारा भवंति । नवाक्षरो वैराजस्य विकारः यदि गुरूपोत्तमः । अन्यस्तु गायत्रस्यैव । त्रयोदशाक्षरप्रभृतिषु ये गुरूपोत्तमास्ते त्रैष्टुभस्य ये लघूपोत्तमास्ते जागतस्य सर्वे तु प्राकृताः ये समाः पादाः ते सर्वे समा वेदितव्याः ते प्राकृता अष्टाक्षरादयश्चतुर्विधाः । यद्येवं नैते समाः बह्वो ह्यष्टाक्षराः अल्पीयांसो दशाक्षरादयः । यद्येवं समा इत्येषां संज्ञा स्यात् । न संज्ञायाः प्रयोजनमस्ति । एवं तर्हि अन्योर्थः कल्प्यते । सर्वे तु प्राकृताः समाः तुशब्दः पक्षव्यावर्त्तकः यदुक्तमेतेषां विकारा अन्ये पादा इति तन्न । तथा सर्वे पादाः प्राकृता एव नान्योन्यस्य विकाराः । तस्मात्समाः न संख्याकृतं तेषां समत्वं । अपरे पुनरन्यथा वर्णयंति । सर्वे तु प्राकृताः समाः । सर्वे अष्टाक्षरप्रभृतयश्चतुर्विधाः प्राकृताः समास्तुल्या भवंति । किमुक्तं भवति । नान्योन्यस्य विकारा भवंतीत्युक्तं भवति ।

एकएकपदैतेषां द्वौपादौ द्विपदोच्यते । तेतुतेनैवप्रोच्येते सरूपेयस्यपादतः ॥ ५५ ॥

तेषांचतुर्णां पादानां एकःपादःयस्याःसाएकपदा ऋगित्युच्यते । यथाऽभिक्ष्यांयजमानोनक्षीता । तेषामेवचतुर्णां द्वौपादौयस्याः साद्विपदाऋगित्युच्यते । साधुर्नगृध्नुरस्तेऽत्समुद्रइति । ते-नैवछंदसा-प्रोच्येते तेद्विपदैकपदे । छंदसांमध्ये यस्यछंदसः-पादतः सरूपेभवतः । यदिगायत्रस्य सरूपेभवतः । यदित्रिष्टुभःगायत्री द्विपदा त्रिष्टुबेकपदाइति ।

नदाशतय्येकपदाकाचिदस्तीति वैयास्कः । अन्यत्रवैमघाः सैकादशिनी मुखतोविराट् ॥ ५६ ॥

दाशतयेभवादाशतयी काचिदेकपदानास्तीति यास्काचार्योविमन्यते । अस्माकं याःएकपदास्ताः सर्वासामृचां अध्यासान्मन्यंते । अंतानित्यर्थः । किमविशेषिणामेत्याह । अन्यत्र वैमघा एकपदायाःमातुस्यान्मुखतःवैमंद्रस्य । आदावित्यर्थः । दशिनीविराळेकपदास्त्येव ।

आहुस्त्वेकपदा अन्ये अध्यासानेकपातिनः । अध्यासानपिये-

केचित्त्वाहुरेकपदाइमाः २ आ-
वांसुम्ने सिक्त्यांद्वे उरौदेवाः सि-
षक्तुनः ॥ ५७ ॥

इमान्युदाहरणानि। आवांसुम्नेवरिमन्सूरिभिःष्यां। असिक्त्यां यजमानोनहोता। उरौदेवा अनिबाधेस्याम। सिषक्तुन ऊर्जव्यस्यपुष्टेः। इति तानपिएकपातिनः अध्यासानन्येआचार्याएकपदाआहुः। अस्मिन्पाठान्तरंतातरमित्येवमादीनांपुनः पदानां अनेकपादानां अध्यासानामेकपदाशंकैवनभवति। तस्मादुदाहरणान्युक्तानि।

पादाएकाधिकाः सन्तिछंदसां-
चतुरचरात्। ५। संत्यतिछं-
दसांपादाएकोत्कर्षेणजागतात्।
षोडशाचरपर्यन्ता एकश्चाष्टा-
दशाचरः ॥ ५८ ॥

छंदसाम्पादाश्चतुरचरात्प्रभृतिषोडशाचरपर्यंताः ते-एकैकेनाधिकाः संतिएकोष्टादशाचरः ननमथ। अ-म्नेनमञ्च। ऋध्यामातऋ्रोहैः। नदंवओदतीनां। अग्निमीळे पुरोहितं। तंत्वावयं पितोवचोभिः। सुधीऽइवंविपिपानस्याद्रेः। पिबासोममभिय मुग्रतर्दः। प्रदेवमच्छामधुमंतइंदवः। तमिंद्रं जोहवीमिमघवानमुग्रं।

अपूरुषघ्नोअप्रतीतशूरसत्वभिः । अभित्यं देवंसविता-रमोण्योः कविक्रतुं । त्रिकद्रुकेषुमहिषोयवाशिरंतुवि-शुष्मः । एते चतुरक्षरादारभ्य षोडशाक्षरपर्यंताः । अर्चामिसत्यसवं रत्नधामभिप्रियं मतिंकविं । एषचा-ष्टाद्दशाक्षरः । केचित्पाठांतरं वर्णयंति जागतादारभ्या-ष्टादशाक्षरपर्यंताः पादा अतिछंदसांविद्यंत तेत्र्याख्या-ताइति ।

## एकादशैवछंदसि पादायेषोड-शाक्षराः । सर्वे त्रिकद्रुकीयासु-नाकुलोष्टादशाक्षरः ॥ ५९ ॥

छंदसि संहितायां येषोडशाक्षराः पादाः एका-दशैवतेसर्वेत्रिकद्रुकीयासुदृश्यंते यथात्रिकद्रुकेष्विति सू-क्तस्य प्रथमार्धचिचत्वारः द्वितीयायांचत्रयः पादाः चतु-र्थ्योमेकः तृतीयायां त्रयः । एवं त्रिकद्रुकीयासु सर्वे-भवंति । नकुलस्यार्षेअष्टादशाक्षरः । अर्चामिसत्यसवंर-त्नधामभिप्रियंमतिंकविमिति ।

## अवमंह्योऽविकर्षेण ज्येष्ठोदाश-तयोष्वृचाम् ॥ ६० ॥

अवमंह इंद्रं त्येषा अविकर्षेण सप्तत्यक्षरासाज्येष्ठाम-हती दाशतयोषुऋक्षु । बह्वक्षरेत्यर्थः ।

## विकर्षणात्तु पादैश्च सहिप्रार्ब्द्रु-

तिस्मृता ॥ ६१ ॥

विकर्षेणातु षट्सप्तत्यक्षराभवति पादैश्चाष्टपदीभवति तस्माज्ज्येष्ठास्मृता। यद्दिशर्द्धोनमारुतं तुविष्वणिरिति।

कनिष्ठा बहुपादानां भारद्वाजी-पुरूतमं ॥ ६२ ॥

बहुपादानां ऋचां मध्येकनिष्ठा अल्पाविंशत्यक्षरा भारद्वाजी पुरूतमंपुरूणां स्तोतॄणामिति। ऋषिग्रहणात्पुरूतमं पुरूणामीशानमिति मास्तु।

अविकर्षेण सौभरी प्रेष्ठम्बादि-क्रसीयसी ॥ ६३ ॥

अविकर्षेणसौभरिणा दृष्टाप्रेष्ठमुप्रियाणामित्येषाक्रसीयसी। अल्पाक्षरतराभवत्येकोनविंशत्यक्षरेति।

विराजोद्विपदाः केचित्सर्वा आहुश्चतुष्पदाः। कृत्वापंचाक्षरा-न्पादां स्तांस्तथाक्षरपंक्तयः ॥५०॥

पश्वानता युंगुहाचतंतमित्येवमादयः। याविराजोद्विपदास्ताः सर्वाः पंचाक्षरान्पादान्कृत्वा चतुष्पदाश्चाहुः।

इति श्री पार्षदव्याख्याया मा-

नंदपुरवास्तव्य वजटपुत्रोव्व-
टकृते प्रातिशाख्यभाष्ये
सप्तदशंपटल-
म् ॥ ६ ॥

वार्हतोवृहतीपूर्वः ककुप्पूर्वस्तु-
काकुभः । एतौसतोबृहत्यंतौ
प्रगाथौभवतोदृचौ ॥ १ ॥

योवृहतीपूर्वः सबार्हतः । ककुप्पूर्वोयः सकाकुभः । उभावेतौ सतोबृहत्यंतौ दृचौ प्रगाथौ भवतः ।

त्वमंगप्र प्रवोयह्व मांचिदृहद्-
गायिष । बार्हताः काकुभाना-
हुस्तंगूर्द्धयावयम्विति ॥ २ ॥

इमेते प्रगाथाः । त्वमंगप्रशंसिषः प्रवोयव्हं पुरूणां । मांचिदन्यद्विशंसत । वृहद्गायिषिवचः । काकुभानाहुः । तंगूर्द्धयास्वर्णरं । वयमुत्वामपूर्व्येति ---

अनुष्टुब्द्विचगायत्र्या वेषआनुष्टु-
भःस्मृतः । विराजावभिसंपन्नः
पद्याद्धर्त्येसउत्थितः ॥ ३ ॥

एकानुष्टुप्द्वे चगायत्र्यौ एषप्रगाथ श्चानुष्टुभः स्मृतः । विराजौ द्वे अभिसंपन्नः । पद्याचाच्चर्या च । पादैरनुच्चरैश्चेत्यर्थः । दशपदाः सैकाविराट् । अशीतिरक्षराणि अक्षर्यास इतिप्रतीकं । सपूर्व्योमहानामित्युत्थित इति प्रशंसाकृता । अन्येप्रगाथाः षड्भिः सप्तभिरष्टाभिर्वापादैर्भवति । अयं तु दशभिस्तस्मादुत्थितइति प्रशस्यते ।

## आकृतिर्व्यपदेशानां प्रायआदितआदितः ॥ ४ ॥

आदितः प्रायेण प्रगाथः क्रियते । व्यपदिश्यते । बार्हतः काकुभआनुष्टुभइति तेषामादितोयच्छन्दस्तेनैव-व्यपदेशः कृतो द्रष्टव्यः । नोभाभ्यां । यथागायत्रबार्हतइति ।

## गायत्र्यादिस्तु बार्हते प्रायोगायत्रबार्हतः ॥ ५ ॥

गायत्र्यादिर्बृहत्यन्तः एषप्रगाथः प्रायोगायत्रबार्हत उच्यते । यथातमिंद्रं दानमीमहे इति ।

## गायत्रकाकुभोनाम प्रायोभवति काकुभे ॥ ६ ॥

गायत्र्यादिः ककुबंतः प्रगाथः गायत्रकाकुभोनाम वेदितव्यः यथासुनीथोघासमर्त्यइति ।

## औष्णिहरष्णिहापूर्वः पङ्क्त्या-

न्तः पाङ्क्तकाकुभः ॥ ७ ॥

उष्णिक्पूर्वः सतो बृहत्यन्तः प्रगाथश्चौष्णिह इत्युच्यते यथा। यमादित्यासो अद्रुह इति । पंक्त्यंतःककुप्पूर्वः पांक्तकाकुभोनाम वेदितव्यः । यथा अदान्मे पौरुकुत्स्यः। १।

तमिन्द्रंचसुनीथश्च यमादित्यास एव च। अदान्मेपौरुकुत्स्यश्च ताऋचोत्तनिदर्शनं ॥ ८ ॥

पुरस्तादेवनिदर्शितान्युक्तानि.।

महासतो बृहत्यंतो योमहाबृहतीमुखः ॥ ९ ॥

समहाबार्हतोनाम । महासतोबृहत्यंतोयः प्रगाथ समहाबार्हतइत्युच्यते । यथातंवःशर्द्धं रथेशुभमिति ।

बार्हतोबृहतीमुखः ॥ १० ।

बृहतीमुखःजगत्यंतोयः प्रगाथःसबार्हतस्थत्युक्तमित्येव ।

अथो अतिजगत्यंतः ।

अपिचातिजगत्यन्तो बृहतीमुखोयोबार्हतएवसः । यथानेमिंनमंति चक्षसेति ।

यवमध्योत्तरोपि च ॥ ११ ॥

यवमध्योत्तरो बृहतीमुखो योबार्हतएवसोपि । यथा । वामो वामस्य धूतयइति ।

# बृहद्भिस्तंवोनेमिं चवामोवामस्य ता ऋच: ॥ १२ ॥

पुरस्तादेवोदाहृता: ।

# नहिते विपरीतान्त: ॥ १३ ॥

नहिते क्षत्रंराधसइत्ययंप्रगाथो विपरीतांत: बृहतीमुख: विपरीतांतोनामवेदितव्य: ।

# मोषुत्वाद्विपदाधिक: ॥ १३ ॥

मोषुत्वावाघतश्चनेति प्राकृतएवप्रगाथ: द्विपदाधिको वेदितव्य: । रायस्कामो वज्रहस्तमित्येतया सहितोद्रष्टव्य: ।

# अनुष्टुब्जगतीचैव विश्वंपामिरभ्यंतं च ॥ १४ ॥

विश्वेषामिरज्यंतं वसूनामित्ययंप्रगाथ: अनुष्टुप्पूर्व: जगत्यंतो वेदितव्य: ।

# द्विपदाबृहतीचैव सनोवाजेष्वितिस्मृत: ॥ १५ ॥

सनोवाजेष्ववितापुरूवसुरित्ययं प्रगाथ: द्विपदापूर्व: बृहत्युत्तर: स्मृत: ।

**ककुप्पूर्वस्तु कोविद स्मृतः का-
कुभबार्हतः ॥ १६ ॥**

ककुप्पूर्वो बृहत्यंतः काकुभबार्हतो नामायंप्रगाथः स्मृतः। कोविदजानमेषामिति। २।

**आनुष्टुभौष्णिहं विद्यात्तेमआहु
र्यआययुः ॥ १७ ॥**

तेमआहुर्यआययुरित्ययं प्रगाथः। तमानुष्टुभौष्णिहं विद्यात्। अनुष्टुप्पूर्वो अपराउष्णिहावित।

**तेनस्त्वाध्वं बृहत्यादिर्बार्हतानु-
ष्टुभः स्मृतः ॥ १८ ॥**

तेनस्त्वाध्वं तेवतेत्ययं प्रगाथो बृहत्यादिरनुष्टुबंतो बार्हतानुष्टुभः स्मृतः।

**अग्निंवः पूर्व्यमित्येषाऽनुष्टुप्पं-
क्तिरेवच ॥ १९ ॥**

अग्निंवः पूर्व्यं गिरेतिप्रगाथोऽनुष्टुप्पूर्वः पंक्त्यन्तः आनुष्टुभःपांक्त इतिस्मृतः।

**यदध्रिगावो अध्रिगू ककुप्च त्रि-
ष्टुबेवच ॥ २० ॥**

यदध्रिगावो अध्रिगू इत्येषप्रगाथः ककुप्पूर्वः त्रिष्टुबंतः काकुभस्त्रैष्टुभः स्मृतः।

यदद्यवोमनुष्टुप्चैवोपदिश्यते॥२१॥

यदद्यवां नामेत्ययंप्रगाथः अनुष्टुप्पूर्वः त्रिष्टुबुत्तरः आनुष्टुभः त्रैष्टुभःस्मृतः।

यत्स्थोदीर्घेतिचत्वेषोवृहती चि-ष्टबेवच ॥ २२ ॥

यत्स्थोदीर्घप्रसद्मनीत्येषप्रगाथः बृहतीपूर्वः त्रिष्टुबुत्तरवार्हतत्रैष्टुभइत्युच्यते।

आयन्मावेनास्त्रिष्टुप्च जगती-चोपदिश्यते ॥ २३ ॥

आयन्मावेना अरुहन्नृतस्येत्ययं प्रगाथः त्रिष्टुप्पूर्वः जगत्युत्तरः त्रैष्टुभजागत इत्युपदिश्यते।

ताबृधं तावनुष्टुप्च महासतो-(१)मुखेति च ॥ २३ ॥

महासतोमुखेति विराट्पूर्वा त्रिष्टुवुच्यते। ताबृधंतावनुद्यूनित्ययप्रगाथोऽनुष्टुप्पूर्वः त्रिष्टुवुत्तरः आनुष्टुभः त्रैष्टुभइत्युपदिश्यते।

जागतं स्त्वददा अभीप्रगाथ स्त्रिष्टवुत्तरः ॥ २४ ॥

अददाअभीमहते वचस्यवइतिप्रगाथः त्रिष्टुवुत्तरः

(१) मुखेविराट् इति खपुस्तकेपाठः।

जागतइत्युपदिश्यते ।

**उत्तरस्त्रैष्टुभ स्तस्मा ज्जगत्यु-त्तरउच्यते ॥ २५ ॥**

तस्मादुत्तरःप्रगाथः इदंनमोवृषभाय स्वराजइति जगत्युत्तरः त्रैष्टुभइत्युच्यते । ३ ।

**त्वमेतां जनचद्वौद्वौ सघारा-जेतिच स्मृतौ ॥ २६ ॥**

त्वमेतांजनराज्ञोद्विद्दशेति द्वौप्रगाथौ पूर्ववद्द्रष्टव्यौ । यथापूर्वौजागतः त्रिष्टवुत्तरइत्युच्यते । तस्मादुत्तरःप्रगाथः यउदृचीन्द्रदेवगोपा इति त्रैष्टुभजागतइत्युच्यते । सघाराजासत्पतिः भूश्रुवज्जनइतिच द्वौप्रगाथौस्मृतौ पूर्वौजागतः त्रिष्टुबंतः । तुभ्येदेतेबहुला अद्रिदुग्धा इति त्रैष्टुभो जगत्युत्तरः

**त्वमस्यपारे रजसो जागतौ त्रि-ष्टवुत्तरौ ॥ २७ ॥**

त्वमस्य पारे रजसोव्योमनइति द्वौप्रगाथौ त्रिष्टवुत्तरौ जागतौज्ञेयाविति ।

**सव्यंजनः सानुस्वारः शुद्धोवा-पिस्वरोक्षरं ॥ २८ ॥**

व्यंजनेनयुक्तः अनुस्वारेणसहितः अथवा ऽनुस्वारव्यंजनाभ्यांरहितःस्वरः अक्षरसंज्ञकोभवति ।

व्यञ्जनान्युत्तरस्यैवस्वरस्यांत्यंतु पूर्वभाक् ॥ २९ ॥

व्यंञ्जनानि उत्तरस्यस्वरस्यैवांगं भवंति । तदस्य । तन्नः । यंतंतु व्यंजनं पूर्वमक्षरं भजेत् । तत् । वाक् ।

विसर्जनीयानुस्वारौ भजेते पूर्वमक्षरं ॥ ३० ॥

विसर्जनीयः अनुस्वारश्च पूर्वमक्षरंभजते । यःसोम । त्वंसोम ।

संयोगादिश्चैवंच ॥ ३१ ॥

संयोगादिर्वा पूर्वमक्षरं भजते । तस्य । यस्य ।

सहक्राम्यः परक्रमे ॥ ३२ ॥

क्रमेणसह क्राम्योवर्णः पूर्वमक्षरं भजते वा परक्रमे सति । सन्निम् । अर्कः । ऊर्ज्जं ।

तथा । पूर्वं पादेन पश्चाद्दाभ्यां । इतेरिवते इत्यमस्तु सख्यंइति ।

मध्येवसानंतु चतुष्पदानां ॥३३॥

चतुष्पदानां मध्येऽवसानं भवति गायंतित्वा गाय त्रिणइति ।

त्रिभिः समस्तैरथवैःपरैर्वा ॥३४॥

त्रिभिः समस्तैः पादैः पूर्वमवसानं भवति । पादेन- उत्तरं यथा एत शंसमिंद्रास्तयुष्टाम् । पादैर्वा त्रिभिः पर- मवसानं भवति । पादेनपूर्वं अधीन्वत्र सप्ततिंच सप्तचेति-

## पंक्त्यांद्विशोवा तत उत्तरेण त्रिभिः परैर्वाविपरीतमेतत् ॥३५॥

पंक्त्यां पंचपदाश्विस्त्यर्थः । द्विशः द्वाभ्यांद्वाभ्यां अव- स्येत् । पादे नोत्तरमवसान । अयंच क्रमिषणात्सूयस्येति । त्रिभिःपादैः परमवसानंवा । द्वाभ्यां पूर्वं । नकिष्टं क- र्मणानशदिति । एतद्विपरीतं वा । त्रिभिः पूर्वंद्वाभ्या- मुत्तरं । न किष्टंवामिनीमसीति ।

## द्विश स्त्रिशोवा परतश्चतुर्भिःस्या- त्षट्पदानामवसानमेतत् ॥३६॥

द्वाभ्यांद्वाभ्यां त्रिभिस्त्रिभिर्वा अवस्येत् विश्वान्देवा न्हवामहे । एषातुकौषी तकीनां षट्पदाशस्यते अस्माकं यः पंचमः पादः सतेषां न विद्यते । अस्मिन्पक्षे उदा- हरणं । त्रिशोवा । त्रिभिः २ अवस्येद्वा । संत्वपः परि- षस्वजे । अथवा परतश्चतुर्भिरवस्ये द्वाभ्यांपूर्वं निष्कं- वाद्याक्रणावते । एवंत्रिविध मवसानंषट्पदानां स्यात् ।

## त्रिभिस्तु पूर्वं ततउत्तरंस्या द्वि- शस्त्रिशोवा यदिवासमस्तं । द्वा- भ्यां पुनः सप्तपदावसानं ॥३७॥

सप्तपदानां तु पूर्वमवसानं त्रिभिः पादैः स्यात् । तस्मादुत्तरं द्विपः । यथा सुषुमायातमद्रिभिरिति । विशेषा यदि पूर्वमवसानं तदा उत्तरं समस्तं । चतुर्भिरित्यर्थः । अस्यानुवृत्तिः पूर्वसूत्राद्वा यथा नहिवांविश्रयामहइति । द्वाभ्यां पुनः पूर्वमवसानं उत्तरंसमस्तैः पंचभिः स्यात् प्रोष्वस्मैपुरोरथमिति ।

## द्वाभ्यांच मध्येष्टपदासु विद्यात्॥३८॥

अष्टपदासु ऋत्तुमध्येद्वाभ्यांअवसानं स्यात् । परिशेषादाद्यंतयो स्त्रिभिस्त्रिभिरवसानं भवति । सहिशर्द्धोनमारुतंतु विष्वगिरिति । अग्निमीळे इतेरिवगायंत्यं तमश्वीन्विति । अयं चक्रं नकिष्टंच नकिर्द्दैवामिनीमसि । विश्वान्देवान्हवामहे मत्सपोनिष्कं सुषुम । नहित्वां प्रोषुसहिशर्द्धस्य ताक्ष्चोऽचनिदर्शनम् । यथाक्रमं पुरस्तादेव निदर्शितानि ।

## द्वाभ्यांपादेनद्वाभ्यांतु तवत्यत्यं-चपदाष्टिः । अत्यूहेनातिशक्करी तृतीयःषोडशाक्षरः ॥ ३९ ॥

द्वाभ्यामवस्येत् । ततःपादेन । पुनर्द्वाभ्यां । तवत्यन्तर्यन्तीयदृद्रं त्यवावसानं । सेयं पंचपदा आष्टिर्विज्ञेया । अत्यूहेनातिशक्करा । अस्यास्तृतीयः षोडशाक्षरः ।

## चतुर्भि स्ततएकेनाग्ने तमद्य-

तिच ॥ ४० ॥

चतुर्भिः पूर्वमवसानं ततएकेन । अग्नेतमद्याश्वंन-स्तोमैरिति।

चतुर्भिस्तुपरं द्वाभ्यां तवस्वादि-ष्ठातर्क्ष्योः ॥ ४१ ॥

चतुर्भिः पूर्वमवसानं परंद्वाभ्यां । तवस्वादिष्ठाग्नेसं-दृष्टिः । तर्क्ष्योराहणीमहे ।

भरद्वाजाय तच्चक्षुरधीदृचा दृ-तेरिव । एतासु नव्यवस्यंत्येके द्वादशकादिषु ॥ ४२ ॥

एतासु ऋक्षु एके अवसानंनकुर्वंति । भरद्वाजायाव-भुज तद्विताधिनं च । तच्चक्षुर्देवहितं शुक्रमुच्चरत्पश्ये-म । अधोन्वत्रसप्ततिंच सप्तचमधोदिदिष्ट । इदाह्निमम अभिपित्वे अरारखुगामृदृतेरिवतेरुक्मस्त सख्यमच्छिद्र-स्य । प्रश्नस्तृच इत्युक्तौ ॐकारपटलेश्लोकौ । अत्रच । तत्रैवव्याख्यातौ ।

सर्वाणिभूतानि मनोगतिश्च स्प-र्शाश्च गंधाश्च रसाश्चसर्वशब्दा-श्चरूपाणिच सर्वमेत त्त्रिष्टुब्ज-गत्यौ समुपैतिभक्त्या ॥ ४३ ॥

सर्वाणिभूतानि । मनःगतिःस्पर्शाःगंधाःसर्वेरसाः । शब्दाःरूपाणीत्येतत्सर्वं त्रिष्टुप्जगत्यौ भक्त्या समुपगच्छंतिच

गुर्वक्षराणांगुरुवृत्तिसर्वं गुर्वक्षरंत्रैष्टुभमेवविद्यात् ॥ ४४ ॥

यत्किंचित्स्थावरं जंगमं गुरुवृत्ति । तत्सर्वंगुर्वक्षरमेव किंपुनर्गुर्वक्षरं । त्रैष्टुभमिति ।

लघ्वक्षराणां लघुवृत्तिसर्वं लघ्वक्षरं जागतमेवविद्यात् ॥४५॥

यत्स्थावरं जंगमंलघुवृत्ति । तत्सर्वंलघ्वक्षरमेवविद्यात् । किंपुनर्लघ्वक्षरं । जागतमिति ।

यश्छंदसां वेदविशेषमेतं भूतानिचत्रैष्टुभजागतानि । सर्वाणिरूपाणिच भक्तितोयः स्वर्गंजयत्येभि रथामृतत्वं ॥ ४६ ॥

योब्राह्मणः छंदसामेतं विशेषं वेद भूतानिचत्रैष्टुभजागतानिचयोवेद । सर्वाणिरूपाणि च । भक्तिमिति । योद्वादशाध्यायानां त्रयाणां चाभ्यासं करोतिभूतानि च त्रैष्टुभजागतानिसर्वाणि रूपाणि च भक्तितः सस्वर्गंजयत्येभिरथामृतत्वं । एवमेवाचार्याणां नमस्कारंदद्यात् शास्त्रांतेचा चार्याणां नमस्कारउपपद्यते । तस्माच्छास्त्रांतं सुखेनाध्येतवे चाप्तवत्संज्ञानि

वर्त्तयति । एकशास्त्रभाव प्रदर्शनार्थं संबंधङ्करोति । संबंधेप्रयोजनं पूर्ववदेव । नित्योहिवेदः । कः पुनरनित्यत्वेप्रसंगः । सर्वाणि श्रौतानि इमानिच स्मार्त्तीश्यांपूर्वैः सहातुल्यत्वात्स्यादनित्यत्वं । तस्मान्नित्यत्वं । नैषदोषः । एतस्य समाम्नायस्य वितान इतियोयं निःयम आरब्धः सएतेष्वपि प्रसज्यतां । वैतानिकसंज्ञालाभे सति नियमे ममाग्नेवर्चइति यथेध्मनंवर्चो वैश्वदेवः प्रयुज्यते । ममाग्नेवर्चइति प्रत्यचंमिद्धइव सर्वेत्रेष्यते । अग्न्याधेयोत्तरं कालंच नैवनिश्चर्त्तयितव्याः कथं प्राप्तिः साखते तैः पूर्वैद्वादशाध्यायाः सौनकस्य । अमीचत्वार आश्वलायनस्य एवमप्राप्तसंज्ञाकिमिति निवर्तयति सकलं पुनर्नानाशास्त्रमादाय रामाचार्यप्रदर्शनाच्च स्वामिकुमारपुत्रे मुद्गले मनुधीमताक्रियमाणाये ददत्तं । भात्रे शिष्यायधीमते त्रैष्टुभजागतानि योवेद भक्तितः सस्वर्गंलोकं जयति । एभिः छंदोभिः अथ अमृतत्वंच गच्छति इत्याह भगवान् शौनकः । श्लोकाः ।

गायत्र्यादीनिछंदांसि सोमेनवाहृतः पुरा ॥ १ स्वर्ग्यं यशस्य मायुष्यं पुण्यं वृद्धिकरं शुभं । कीर्त्तिमृग्यं यशस्य च्च छंदसांज्ञानमुच्यते । २ ।

## इति श्री पार्षदव्याख्याया मानंदपुरवास्तव्य वज्रटपुत्रोव्वटकृतौ प्रातिशाख्यभाष्ये अष्टादशं पटलं समाप्तम् ।

समाप्तोयं ग्रंथः ।

जटा मालां शिखारेखा ध्वजो दंडो रथो घनः। अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः ॥१॥ अथात्क्रमविपर्यासंक्रममीदृग्विनिर्दिशेत्। जटाख्यांविकृतिंधीमान्विज्ञायक्रमलक्षणम् ॥२॥ क्रमविपर्यासक्रममित्यस्यैव प्रपंचं विवक्षुः पूर्वोक्तमर्थमनूद्यधर्मं विशेषमाह॥ अनुलोम विलोमाभ्यां त्रिवारंहि पठेत्क्रमम्। विलोमेपदवत्संधिरनुलोमेयथाक्रमम् ॥३॥ अनुलोमे आद्यन्तक्रमयोः पाठेयथा क्रमंप्रातिशाख्योक्तलक्षणविशिष्ट क्रमका लीन संध्यनतिक्रमेण संधिर्ज्ञातव्या। विलोमे अनुपदवत्पदेन तुल्यम्। अथात्क्रमविपर्यासावर्त्तंचस्यादितो मतः। अंतं चादिन्नयेदेवं क्रममालेतिकीर्तिता। ४। पदोत्तरां जटामेव शिखामार्याः प्रचक्षते। क्रमादिविचतुः पंच पदक्रममुदाहरेत्। ५। पृथक्पृथग्विपर्यस्य रेखामाहुः पुनः क्रमात्। अथादादेः क्रमं सम्यगं तादुत्तारयेदिति॥६॥वर्गोवा अर्चिवा यस्यपठनं संध्वजः स्मृतः। क्रममुक्त्वाविपर्यस्य पुनश्चक्रममुत्तरं ७ अर्द्धर्चादेवमुक्तोऽयं क्रमदंडोभिधीयते। पादशोऽर्द्धर्चंशोवापिसहं। त्र्यादंडवद्रथः। ८। अंतात् क्रमंपठेत्पूर्वं आदिपर्यन्तमानयेत्। आदिक्रमंनयेदन्तं घनमाहुर्मनीषिणः।९। लोके प्रसिद्धद्वितीयघनलक्षणमाह। शिखामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत्। अयं घन इति प्रोक्तइत्यष्टौविकृतीः पठेत्। १०। इति जटादिविकृतीनां लक्षणकारिकाः।

# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*Nos. 48, 59, 64, & 79.*

---

# महर्षिशौनकप्रणीतम् ऋक्प्रातिशाख्यम् ।

## उव्वटकृतभाष्ययुतम् ॥

श्रीपण्डितयुगलकिशोरपाठकान्तेवासिना श्रीहिन्दुकालेज मध्यवर्त्ति श्रीरणवीरपाठशाला-
यां वेदशास्त्राध्यापकेन श्रीमत्पण्डितप्रभुदत्त शर्म्मणा संशोध्य प्रकाशितम् ॥

# ŚAUNAKA'S PRÂTIŚÂKHYA
# OF THE RIGVEDA,

## *WITH THE COMMENTARY OF UVVATA.*

EDITED AND ANNOTATED BY THE LATE PANDIT

YUGALAKIŚORA VYÂSA,

And His Esteemed Pupil Pandit

PRABHUDATTA ŚARMÂ,

PROFESSOR OF VEDA, CENTRAL HINDU COLLEGE, BENARES.

BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at the Vidya vilas Press,

BENARES.

---

1903.



॥ श्रीः ॥

# ॥ भूमिका ॥

किञ्चिदूनं वर्षत्रितयं जातं श्रीतत्रभवत्तत्त्वविदग्रेसरै र्वैदिकधुरन्धरै रस्मद्गुरुवरैः श्रीयुगलकिशोर पाठक इति सुगृहीतनामधेयैः पदव्याकृति-स्वरशिक्षादिविषय व्युत्पित्सूनां वैदिकजनानां सुबहूपकृतये महतायासेन विचतुराण्यादर्शपुस्तकानि संपाद्य तेभ्योऽति शुद्धं पुस्तकमेकं लेखयित्वा ग्रन्थस्यास्य ऋग्वेदप्रातिशाख्यस्य मुद्रापणे तत्परै रभूयत। दुर्लभातिप्राचीनग्रन्थरत्नानां जगति प्रचारार्थं बद्धपरिकरः श्रीयुत हरिदासनामा गुप्तः श्रीयुतव्रजभूषणदासाज्ञया स्वकीय ( बनारस सीरीज नामक ) संग्रहे ग्रन्थमिमं स्वीचक्रे मुद्रयित्वा प्रकाशयितुम्। परन्तु दुर्दैववशादस्माकं प्रथमाङ्कपर्य्यन्तमेव कतिपयपत्राणि मुद्राप्य रुग्णशरीरतया श्रीगुरुचरणा विहाय विनश्वरं देहमिमं श्रीशिवसायुज्यभावं प्राप्नुवन्।

आरब्ध-मुद्रणस्य परमोपकारिणोऽमुष्य ग्रन्थस्य गुरुभक्तिलेशात्ततः प्रभृति शोधनादिकार्ये यथावकाशमहमुद्युक्तोऽभवम्। अथैतत्सौलभ्यकर्तृत्वेनास्मद्गुरुचरणानां यशस्सौरभोद्गारं विस्तारयन् ग्रन्थोऽयमीश्वरानुग्रहेण शनकैरविन्दच्च समाप्तिम्। ग्रन्थस्यास्य सूत्रकारः त्रिकालदर्शी महर्षिः शौनकः प्रसिद्ध एव

तिहास पुराणादिषु प्रेक्षावतामिति न तत्र वक्तव्य-
मस्ति ।

भाष्यकारश्च वेदार्थमीमांसा साम्राज्यासीनो भ-
गवानुव्वटाचार्य्यः कस्मिन् समये कतमं जनपदमल-
ङ्कारेति विशेषतो मयान निर्द्धारित स्तथापि वि-
द्यारण्य—श्रीमाधवाचार्य्यं समकालिको महीधराचा-
र्य्यात्प्राचीनः शुक्लयजुः संहिताभाष्य—यजुर्वेदप्राति-
शाख्यादि निबन्धकृदुव्वटाचार्य्योऽस्तीति यजुः संहि-
ताभाष्यारम्भ एव ।

प्रणम्य लक्ष्मीं नृहरिं गणेशं ।

भाष्यं विलोक्योव्वट माधवीयमिति महीधरोक्त्या-
स्फुटीभवति । उपक्रतोऽस्यस्य मध्ये मध्ये निरीक्षणा-
दिसाहाय्यद्वारा हिन्दूकालेजमध्यवर्त्ति श्रीरणवी-
रपाठशालायां व्याकरणशास्त्राध्यापकैरस्मद्गुरुवर
श्रीचनन्तरामशर्म्मभिः । पुस्तके ऽस्मिन् सीस-
काक्षर योजकदोषेण ममदृष्टिदोषाद्वा क्वचिदशु-
शुद्धय उपलभ्येरन् ताः शोधयित्वा गुणैकपक्षपातिनो
महाशया विपश्चितः श्रमं मे सफलीकुर्वन्त्विति सप्रश्र-
यमभ्यर्थये सज्जनान् । प्रीयतां चानेना व्यापारेण स-
र्वान्तर्यामी विश्वेश्वरः श्रीशङ्कर इति निवेद्यते ।

श्रीकाश्याम्
सं० १९६० आग्रहायण
सुदि १० रवौ

आदिगौडोपाधिक
श्रीप्रभुदत्तशर्म्मा मिश्रः ।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 79.*


# महर्षिशौनकप्रणीतम् ऋक्प्रातिशाख्यम् ।

## उव्वटकृतभाष्ययुतम् ॥

श्रीपण्डितयुगलकिशोरपाठकान्तेवासिना श्रीहिन्दुकालेज मध्यवर्त्ति श्रीरणवीरपाठशाला-यां वेदशास्त्राध्यापकेन श्रीमत्पण्डितप्रभुदत्त शर्मणा संशोध्य प्रकाशितम् ॥

# ŚAUNAKA'S PRÂTIŚÂKHYA OF THE RIGVEDA,

## *WITH THE COMMENTARY OF UVVATA.*


EDITED AND ANNOTATED BY THE LATE PANDIT

YUGALAKIŚORA VYÂSA,

And His Esteemed Pupil Pandit

PRABHUDATTA ŚARMÂ,

PROFESSOR OF VEDA, CENTRAL HINDU COLLEGE, BENARES.


*Fasciculus IV.*


BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidya vilas Press,

BENARES.

1903.




# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गोरक्षा | ० | ४ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | २ | ६ |
| धातुपाठः ( जिल्द -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ६ | ० | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ० | ० |
| भट्टीकाव्य ५ सर्ग | ० | १ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ५ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| [illegible] | ० | १ | ० |
| [illegible] | ० | १ | ० |
| [illegible] | [illegible] | [illegible] | ० |
| [illegible] | ० | [illegible] | ० |
| [illegible] | ० | [illegible] | ० |
| [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] |

# सूचीपत्रम्।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( जिल्द -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम्। | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ४ | ० | ० |
| [illegible] | ० | १ | ० |

# विज्ञापनम् ।

—:०:—

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तद्देकैकस्य खण्डस्य ।||) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैःकानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ३ | ३ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ३ | ३ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यं | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) | ८ | ० |
| वेदान्तदीपः ( श्रीभगवद्रामानुजाचार्यविरचितः ) खण्डे २ | २ | ० |
| टुप्टीका खण्डानि ३ | ३ | ० |
| पातञ्जलदर्शनम् । श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० १ | १ | ० |
| पाणिनीयमिताक्षरा । सर्वतन्त्रस्वतन्त्रश्रीमदन्नंभट्टप्रणीता ख० २ | २ | ० |
| न्यायलीलावती (यन्त्रस्था) | ० | ० |

# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 64.*

# महर्षिशौनकप्रणीतम् ऋक्प्रातिशाख्यम् ।

उव्वटकृतभाष्ययुतम् ॥

श्रीपण्डितयुगलकिशोरपाठकाख्येनाभिजनें मैथिलस्वामी संस्थापित भास्करपाठशाला
प्रधानाध्यापकेन श्रीलक्ष्मणारायण मन्दिराध्यापकेन च श्रीमद्वीक्षणसंस्थापक
श्रीमत्पण्डितप्रभुदत्त शर्मणा संशोध्य प्रकाशितम् ॥

# SAUNAKA'S PRÂTIŚÂKHYA OF THE RIGVEDA,

*WITH THE COMMENTARY OF UVVATA*

EDITED AND ANNOTATED BY THE LATE PANDIT

YUGALAKIŚORA VYÂSA,

A SCHOLAR OF THE BENARES SANSKRIT COLLEGE

And His Esteemed Pupil Pandit

PRABHUDATTA ŚARMÂ.

*Fasciculus III.*

BENARES

... by the Proprietors, Messrs. ... Das & Co.

... Chowkhamba Sanskrit Book D...

BENARES

बनारस संस्कृतसीरीज़

अर्थात्

# वाराणसीसंस्कृतपुस्तकावली।

तत्र मुद्रिता ग्रन्थाः।

| | रु० | आ० |
|---|---|---|
| द्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| सङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| वार्त्तिकम् खण्डानि १० | १० | ० |
| त्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं खण्डानि ६ | ६ | ० |
| ख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| त्यपदीयम् खण्डानि ३ | ३ | ० |
| गङ्गाधरः खण्डानि ८ | ८ | ० |
| भाषावृत्तिः खण्डे २ | २ | ० |
| षिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपाद-प्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| ष्ठासङ्ग्रहः खण्डानि ५ | ५ | ० |
| धर्म्यसिद्धिः खण्डानि ३ | ३ | ० |
| र्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यं खण्डानि ३ | ३ | ० |
| वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डे २ | २ | ० |
| त्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| रणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| दीपनम् ( पञ्चपादिकाविवरणस्यव्याख्यानम् ) खण्डे २ | २ | ० |
| पलीलावती (यन्त्रस्था) | ० | ० |

व्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस।

# विज्ञापनम्।

---

## बनारससंस्कृतसीरीजनाम्नी
## वाराणसेयसंस्कृतपुस्तकावली।

—:०:—

इयं पुस्तकावली खण्डशो मुद्रिता भवति। अस्यां संस्कृतभा
निबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानु
दसहिताश्च ग्रन्था मुद्रिता भवन्ति। तांश्च ग्रन्थान् काशिकराज
यसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति। यैः
हकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्त
कैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः। अन्यै
हाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डा
१) मूल्यं प्रापणव्ययश्च =) देय इति॥

व्रजभूषणदास और कम्पनी
चांदनीचौक के उत्तर नई सड़क
बनारस।

# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 59.*

---

# महर्षिशौनकप्रणीतम् ऋक्प्रातिशाख्यम् ।

## उव्वटकृतभाष्ययुतम् ॥

श्रीपण्डितयुगलकिशोरपाठकान्तेवासिना मैथिलस्वामी संस्थापित भास्करपाठशाला प्रधानाध्यापकेन श्रीसत्यनारायण मन्दिराध्यापकेन च श्रीमद्गौडवंशावतंसेन श्रीमत्पण्डित प्रभुदत्त शर्म्मणा संशोध्य प्रकाशितम् ॥

# ŚAUNAKA'S PRÂTIŚÂKHYA OF THE RIGVEDA,

## *WITH THE COMMENTARY OF UVVATA.*

EDITED AND ANNOTATED BY THE LATE PANDIT

YUGALAKIŚORA VYÂSA,

A SCHOLAR OF THE BENARES SANSKRIT COLLEGE

And His Esteemed Pupil Pandit

PRABHUDATTA ŚARMÂ.

*Fasciculus II.*

BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at the Vidya vilas Press,

BENARES.

---

1901.



# सूचीपत्रम् ।



| | | | |
|---|---|---|---|
| गोलप्रकाशः | २ | ८ | |
| जातकतत्त्वम् | ० | १२ | |
| तर्कसंग्रहः | ० | १ | |
| दत्तकमीमांसा | ० | ८ | |
| धातुपाठः | ० | २ | |
| धातुरूपावली | ० | २ | |
| परिभाषापाठः | ० | ० | |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | |
| प्रथम परीक्षा | ७ | २ | |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | |
| बीजगणितम् | १ | ० | |
| भट्टीकाव्य ५ सर्ग | ० | ६ | |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | |
| मुद्राराक्षस | ० | १२ | [illegible] |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | [illegible] |
| लक्षणावली | ० | २ | [illegible] |
| लीलावती महामहोपाध्यायपण्डितसुधाकरद्विवेदी-कृतटिप्पणीसहिता | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वाक्यकुसुमाञ्जली | १ | ० | ० |
| विनयपत्रिका | ० | ६ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| व्याकरणकौमुदी उपक्रमणिका का दूसरा खण्ड | १ | ० | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ५ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ४ | ० |
| सिधान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ४ | ० | ० |
| उपसर्गवृत्तिः | ० | १ | ० |